ಅಧ್ಯಾಯಗಳ ಆರಂಭದಲ್ಲಿ ಈ ಹಸ್ತಪ್ರತಿಗಳಲ್ಲಿ ''ಶ್ರೀವೇದವ್ಯಾಸಾಯ ನಮಃ'' ''ಶ್ರೀರಾಮಚಂದ್ರಾಯ ನಮಃ'' ''ಶ್ರೀರಾಮಾಯ ನಮಃ'' ''ದೋಷೇತರೀಕೃತ-ಪೂರ್ಣಗುಣದೇಹಾಯ ನಮಃ'' ''ಶ್ರೀನೃಸಿಂಹಾಯ ನಮಃ'' ''ಶ್ರೀನರಹರಿಪೂಜಿತಚರಣ-ಪದ್ಮಾಯ ನಮಃ'' ಎಂಬ ಮಂಗಳವಚನಗಳು ಕಾಣಸಿಗುತ್ತವೆ.

ಈ ಹಸ್ತಪ್ರತಿಗಳಲ್ಲಿ ಉಳಿದೆಡೆಯೂ ಸಾಮಾನ್ಯವೆನಿಸುವ ಪಾಠಾಂತರಗಳು ಸಾಕಷ್ಟು ದೊರೆಯುತ್ತವೆ. ನಿಶ್ಚಿತವಾಗಿಯೂ ಅಪಪಾಠವೆಂದು ತೋರದ ಅನ್ವಯವಿಶೇಷದೊಂದಿಗೆ ಅರ್ಥೈಸಬಹುದಾದ ಎಲ್ಲ ಪಾಠವ್ಯತ್ಯಾಸಗಳನ್ನೂ ಅಡಿಟಿಪ್ಪಣಿಯಲ್ಲಿ 'ಪಾ' ಎಂದು ಸೂಚಿಸಲಾಗಿದೆ. ಹಸ್ತಪ್ರತಿಗಳಲ್ಲಿನ ಎಲ್ಲಾ ವಿಷಯಗಳನ್ನೂ ಮುಂದಿನ ಸಂಶೋಧನೆಗಳಿಗೆ ಅನುವಾಗಿಸುವ ದೃಷ್ಟಿಯಲ್ಲಿ ಉಳಿಸಿಕೊಳ್ಳಲಾಗಿದೆ.

ಈ ಹಸ್ತಪ್ರತಿಗಳು ಬಹುಲೇಖಕದೋಷಗಳಿಂದ ಕೂಡಿದ್ದರೂ ಪದ್ಮನಾಭತೀರ್ಥರ ಭಾವಪ್ರದೀಪಿಕಾ, ಜಯತೀರ್ಥರ ಪ್ರಮೇಯದೀಪಿಕಾ ಹಾಗೂ ಸುಮತೀಂದ್ರತೀರ್ಥರ ಭಾವರತ್ನಕೋಶದ ಸಹಾಯದಿಂದ ಅನೇಕ ಕಡೆ ಶುದ್ಧಪಾಠವನ್ನು ನಿರ್ಣಯಿಸಬಹುದಾಗಿದೆ. ಆದಾಗ್ಯೂ ಕೆಲವು ಸ್ಥಳಗಳಲ್ಲಿ ನಿರ್ಣಯಿಸಲಿಕ್ಕಾಗದೇ '(?)' ಚಿಹ್ನೆಯೊಂದಿಗೆ ಮುದ್ರಿಸಲಾಗಿದೆ. ಇನ್ನೂ ಕೆಲವು ಹಸ್ತಪ್ರತಿಗಳು ದೊರೆತಲ್ಲಿ ಇವುಗಳ ನಿರ್ಣಯವೂ ಸಾಧ್ಯವೆಂದು ಭಾವಿಸಬಹುದು.

ಶ್ರೀಪದ್ಮನಾಭತೀರ್ಥರ ಗ್ರಂಥಸಂಪಾದನೆಯ ಸಂದರ್ಭದಲ್ಲಿ ಮೂರು ಹಸ್ತಪ್ರತಿಗಳನ್ನು (ಅವುಗಳಲ್ಲಿ ಒಂದು ಮಂತ್ರಾಲಯದ ವಿದ್ವಾನ್ ಶ್ರೀರಾಜಾ ಎಸ್. ಪವಮಾನಾಚಾರ್ಯರು ನೀಡಿದ್ದು) ಆಧರಿಸಿ ಶ್ರೀನರಹರಿತೀರ್ಥರ ಟೀಕೆಯನ್ನು ಅಡಿಟಿಪ್ಪಣಿಗಳಲ್ಲಿ ನೀಡಲಾಗಿತ್ತು. ನಂತರದಲ್ಲಿ ಉಪಯೋಗಿಸಲಾದ ಮತ್ತೊಂದು ಹಸ್ತಪ್ರತಿಯಿಂದ ಕೆಲವೆಡೆ ದೋಷಗಳನ್ನು ತಿದ್ದಲಿಕ್ಕಾದುದರಿಂದ ಅದರಲ್ಲಿನ ಅಡಿಟಿಪ್ಪಣಿಗಳಿಗೂ ಈ ಗ್ರಂಥದಲ್ಲಿನ ಪಾಠಕ್ಕೂ ಒಂದೆರಡು ವ್ಯತ್ಯಾಸ ಕಾಣುತ್ತದೆ. ಅಲ್ಲದೆ ಸಂಪಾದನೆಯ ಕಣ್ತಪ್ಪಿನಿಂದ ಕೆಲವೆಡೆ ಹಿಂದಿನ ಪ್ರಕಟನೆಯಲ್ಲಿ ದೋಷಗಳು ಸಂಭವಿಸಿವೆ. ಅವುಗಳನ್ನು ಈ ಗ್ರಂಥದ ಅಡಿಟಿಪ್ಪಣಿಯಲ್ಲಿ ಸೂಕ್ತಸ್ಥಳಗಳಲ್ಲಿ ನಿರ್ದೇಶಿಸಲಾಗಿದೆ. ಶ್ರೀಮದಾಚಾರ್ಯರ ಪರಂಪರೆಯ ಗ್ರಂಥಗಳನ್ನು ಶುದ್ಧಪಾಠದೊಂದಿಗೆ ಉಳಿಸಲು ಇಲ್ಲಿಯೂ ಸಂಭವಿಸಿರಬಹುದಾದ ಮುದ್ರಣದೋಷಗಳಿಗೆ ವಿದ್ವಾಂಸರ ಹಾಗೂ ವಿದ್ಯಾರ್ಥಿಗಳ ಸಲಹೆ ಸೂಚನೆಗಳನ್ನು ಸ್ವಾಗತಿಸಲಾಗುವುದು.

ಪ್ರಾಚೀನಟೀಕೆಯನ್ನು ಸಾಮಾನ್ಯವಾಗಿ ಅರ್ಥತಃ ಅನುವಾದಿಸಿ ಶಬ್ದವ್ಯತ್ಯಾಸಗಳನ್ನು ಅನೇಕ ಕಡೆ ಮಾಡಿರುವುದು ಗಮನಕ್ಕೆ ಬಂದಿದ್ದರಿಂದ ಭಾವರತ್ನಕೋಶದಲ್ಲಿನ ಉದಾಹರಣೆಗಳನ್ನು ಅಡಿಟಪ್ಪಣಿಯಲ್ಲಿ ನೀಡಿದ್ದರೂ ಅದರಲ್ಲಿನ ಪಾಠವ್ಯತ್ಯಾಸಗಳನ್ನು

ಪ್ರಾಯಶಃ ನಮೂದಿಸಿಲ್ಲ. ಪ್ರಾಚೀನಟೀಕೆಯ ಭಾಗವನ್ನು '' '' ಈ ಚಿಹ್ನೆಯ ನಡುವೆ ನೀಡಲಾಗಿದೆ.

ವಿದ್ಯಾರ್ಥಿಗಳ ಅನುಕೂಲಕ್ಕಾಗಿ ಟೀಕೆ ಹಾಗು ಭಾಷ್ಯಗಳನ್ನು ಅಲ್ಲಲ್ಲಿಯೇ ಮುದ್ರಿಸುವುದು ಇತ್ತೀಚಿನ ಸಂಪಾದನೆಗಳಲ್ಲಿ ವಿರಳ. ನಮ್ಮ ಪ್ರಕಾಶನದ ಹಿಂದಿನ ಪ್ರಕಟನೆಯಾದ ಶ್ರೀಪದ್ಮನಾಭತೀರ್ಥರ ಗೀತಾಭಾಷ್ಯಭಾವಪ್ರದೀಪಿಕೆಯ ಸಂಪಾದನೆಯಲ್ಲಿ ಈ ಪ್ರಯತ್ನವನ್ನು ಮಾಡಲಾಯಿತು. ಅದನ್ನು ಈ ಗ್ರಂಥದಲ್ಲೂ ಮುಂದುವರೆಸಲಾಗಿದೆ. ಅಲ್ಲದೆ ವಾಕ್ಯಾರ್ಥವು ಸುಲಭಗೊಳ್ಳುವಂತೆ ಕೆಲವು ಪದಸಂಧಿಗಳನ್ನು ಮಾಡಲಾಗಿಲ್ಲ. ಆಧುನಿಕ ಚಿಹ್ನೆಗಳ ಸಹಾಯದೊಂದಿಗೆ, ಹಾಗೂ ಅಕ್ಷರವ್ಯತ್ಯಾಸದೊಂದಿಗೆ ಕೆಲವು ಅವಾಂತರವಾಕ್ಯಗಳನ್ನು ವಿಭಜಿಸಿ ನೀಡಲಾಗಿದೆ. ಆದರೆ ವ್ಯಾಕರಣರೀತ್ಯಾ ಅಸಾಧುವಾಗದಂತೆ ಎಚ್ಚರವಹಿಸಲಾಗಿದೆ. ಓದುಗರಿಗೆ ಈ ಪ್ರಯತ್ನಗಳು ಸಹಕಾರಿಯಾಗಬಹುದೆಂದು ನಮ್ಮ ಆಶಯ. ಶ್ರೀನರಹರಿತೀರ್ಥರಿಂದ ಪ್ರತಿಷ್ಠಿತವಾದ ಶ್ರೀಪ್ರಾಣದೇವರಿಂದ ಭೂಷಿತವಾದ ಚಿಕ್ಕೇರಹಳ್ಳಿ ನನ್ನ ಜನ್ಮಸ್ಥಳ; ಹಾಗೂ ಅವರಿಂದ ಪ್ರತಿಷ್ಠಿತವಾದ ಶ್ರೀಭೂಸಮೇತಶ್ರೀ-ನಾರಾಯಣದೇವರನ್ನು ಹೊಂದಿರುವ ನಾರಾಯಣದೇವರಕೆರೆ ನನ್ನ ಮೂಲಸ್ಥಾನವಾದ ವ್ಯಾಸನಕೆರೆಗೆ ಅತ್ಯಂತಸಮೀಪದ ಸ್ಥಳ ಎಂಬುದು ನನ್ನ ಜನ್ಮಜನ್ಮಗಳ ಸೌಭಾಗ್ಯ.

ಶ್ರೀಹರಿಗುರುಭಕ್ತರೂ, ಮಧ್ವಸಿದ್ಧಾಂತಪ್ರಸಾರಪ್ರಿಯರೂ ಆದ ಚೆನ್ನೈ ನಗರದ ಡಾ. ಉಷಾ ಹಾಗೂ ಡಾ. ಕಮಲಾ ಸಹೋದರಿಯರು ತಮ್ಮ ಮಾತಾಪಿತೃಗಳಾದ ಶ್ರೀ ದೇವಾಜಿ ರಾವ್ ಹಾಗೂ ಶ್ರೀಮತಿ ರಾಧಾ ಅವರ ಸ್ಮೃತಿಗಾಗಿ ಪ್ರಕೃತ ಕೃತಿಯ ಸಂಪಾದನೆಗೆ ಪ್ರಾಯೋಜಕರಾಗಿರುವರು. ಅವರಿಗೆ ನಮ್ಮ ಪ್ರತಿಷ್ಠಾನ ವಿಶೇಷವಾಗಿ ಋಣಿಯಾಗಿದೆ.

ಡಿ.ಟಿ.ಪಿ. ಕಾರ್ಯ ಶ್ರೀ ಕೆ.ಸುಬ್ಬಣ್ಣ ಹಾಗೂ ಶ್ರೀವ್ಯಾಸಮಧ್ವಸಂಶೋಧನ ಪ್ರತಿಷ್ಠಾನದ್ದು. ಕರಡು ತಿದ್ದುವ ಕಾರ್ಯವನ್ನು ನನ್ನ ಪುತ್ರ ಚಿ|| ಜಯಂತ, ಚಿ|| ಶ್ರೀನಿಧಿ ಹಾಗು ಚಿ|| ಆನಂದಪದ್ಮನಾಭ (ಸುದರ್ಶನ) ಇವರು ನಿರ್ವಹಿಸಿರುವರು. ಮುದ್ರಣ ಮೆ|| ವಾಗರ್ಥ ಅವರದು. ಇವರೆಲ್ಲರಿಗೂ ಪ್ರತಿಷ್ಠಾನವು ಋಣಿ.

ಸರ್ವಧಾರೀ - ಮಧ್ವನವಮೀ                    ವ್ಯಾಸನಕೆರೆ ಪ್ರಭಂಜನಾಚಾರ್ಯ
೪-೨-೨೦೦೯
ಬೆಂಗಳೂರು

आनन्दतीर्थभगवत्पादाचार्यसरस्वती ।
लोकेऽत्र हरिपादाब्जयुगलप्राप्तये नु सा ।।

ससीता मूलरामार्चा कोशे गजपतेः स्थिता ।
येनानीता नमस्तस्मै श्रीमन्नृहरिभिक्षवे ।।

॥श्रीः॥

## श्रीनरहरितीर्थभट्टारकविरचिता

# गीताभाष्यभावप्रकाशिका

## (श्रीमद्भगवद्गीतया तथा भाष्येण च संवलिता)

॥ श्रीहनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकश्रीलक्ष्मीहयग्रीवाय नमः ॥

॥ श्री गुरुभ्यो नमः हरिः ॐ॥

देवोऽपि द्योतनाद्यः सुररिपुविजयादुच्चकान्त्या स्तुतोऽयं[1]
देवैस्तैरात्मभक्तैर्व्यवहितकरणात्[2] सर्वगत्या च रत्या[3] ।
सर्वैर्दोषैर्विहीनस्त्वमितगुणतनुः सर्वसामर्थ्यपूर्णः
श्रीमन्नारायणस्तं [4]श्रुतिनुतिपरमं कृष्णगीतं नमामि ॥१॥[5]

---

१. स्तुतो यः – पा; २. व्यवहृतिसरणात् – पा

३. द्योतनात् विजयात् कान्त्या स्तुत्या व्यवहृतेरपि ।
गत्या रत्या च देवोऽयं' इति ऋग्भाष्ये ।
एतदेव मनसि निधाय श्रीनरहरितीर्थभट्टारकाः कृष्णप्रकाशिकायामपि –
'.......................ज्ञानरूपिणा ।
असुरानसुरूपेण भीमेनैव जिगीषति ।
क्रीडते सह तेनैव तेन व्यवहरत्यपि ।
तेन द्योतोऽस्य लोकेषु स्तूयते तेन सर्वदा ।
तस्माच्च कमनीयोऽयं तेनैव सह गच्छति ।
अन्यैरपि स वै गम्यस्तत्प्रसादान्न चान्यथा ।
एवं स वासुदेवः स्यात् ...............।' इति ॥

४. 'स्तुति-' – पा

५. भाष्यस्थाद्यपद्यविवरणरूपस्वकृताद्यपद्ये 'कृष्णगीतं नमामि' इति वदन् 'गीतार्थम्' इति शब्दस्यावृत्त्याऽन्वयं सूचयति – गीतार्थभूतं नारायणं नत्वा गीतार्थं वक्ष्यामि इति । कृष्णगीतम् इत्यस्य कृष्णेन गीतमित्यर्थः । कृष्णेन गीतं नारायणमिति यावत् ।

क्षीराब्धेरेत्य तीरं विधिहरमुखराशेषदेवेशनुत्या[१]
प्रीतः प्राप्तः क्षितिं यः स्वखिलगुणतनुः भारतं[२] भारताद्यः ।
चक्रे चक्राब्जलक्ष्मारुणकरचरणस्तं[३] बदर्यां मुनीन्द्रैः
सेव्यं ब्रह्मादिवि(द्वि)र्दशसुमतिगुरुं व्यासमीशं नमामि ॥२॥

तस्माच्छ्रुत्वा शुकान्तर्गतवरवपुषा[४] भारतीड्यो[५] सुविद्या-
माद्यां[६] वायुः प्रधानः प्रधनमुपगतान्[७] हन्ति विष्णुद्विषो यः ।
वाचा यद्वत् स्वदोष्णा स पुनरिह कलौ[८] कृष्णगीतासुभाष्यं
चक्रे भूचक्रगस्तं शरणमहमगां श्रीमदानन्दतीर्थम् ॥३॥

---

१. द्वापरेऽथ युगे प्राप्ते त्वष्टाविंशतिमे पुनः ।
स्वयम्भुशर्वशक्राद्या दुग्धाब्धेस्तीरमाययुः ॥ इत्यारभ्य,
इतीरितस्तैरभयं प्रदाय सुरेश्वराणां परमोऽप्रमेयः ।
प्रादुर्बभूवामृतभूरिलायां विशुद्धविज्ञानघनस्वरूपः ॥ – म.भा.ता.नि. १०/१,४१

२. समस्तशास्त्रार्थनिदर्शनात्मकं चक्रे महाभारतनामधेयम् ।
वेदोत्तमं तच्च विधातृशङ्करप्रधानकैस्तन्मुखतः सुरैः श्रुतम् ॥– म.भा.ता.नि. १०/५९

३. शुभमरतकवर्णो रक्तपादाब्जनेत्राधरकरनखरसनाग्रश्चक्रशङ्खाब्जरेखः ।
रविकरवरगौरं चर्म चैनं वसानस्तटिदमलजटासन्दीप्तचूडं दधानः ॥
– म.भा.ता.नि. १०/५३

४. शुकं तमाशु प्रविवेश वायुर्व्यासस्य सेवार्थमथास्य सर्वम् ।
ज्ञानं ददौ भगवान् सर्ववेदान् सभारतं भागवतं पुराणम् ॥ – म.भा.ता.नि. १०/७३

५. **भारताद्यां** - पा

६. **-माद्यो** - पा

७. **-मुपगतो** - पा

८. ये वै पुरा जगति शार्ङ्गभृताऽमुना च देवेन भीमगदया हतबाहुवीर्याः ।
देवद्विषां मतिरभून्मनुजेषु तेषां वाग्योधनेन भगवद्गुणदूषणाय ॥
संरम्भतः श्रुतिषु विष्णुपरासु गूढाद्विद्वेषतः परगुणेषु महत्सु गाढात् ।
वेदान्तवादकपटैरतिदुष्टवाचां मायाविनां निरसने स कृतावतारः ॥ – इति **तत्त्वप्रदीपे**

तत्कारुण्याप्तविद्याः[१] [२]सुभरितहरितः पद्मनाभार्यतीर्था-
दित्या यत्स(?)म्भवन्तो[३] हरिचरणगता मायिदैत्याः क्षिपन्ति[४] ।
तत्पादाब्जे प्रणम्य प्रणतसुसुखदे कृष्णगीतासुभाष्यं
व्याख्यास्ये तत्प्रसादान्मम मतिममलास्ते प्रसन्नाः पुनन्तु ॥४॥

श्रीमद्भगवद्गीताभाष्यमारभमाणो भगवानाचार्यः तत्प्रतिपाद्यलक्षणं श्रीभगवन्तं नारायणमिष्टदेवतां परां नमस्कृत्य, तत्प्रणेतृत्वात्, साक्षात्स्वोपदेष्टृत्वात्, हृद्गतत्वेन सर्वविद्याप्रवर्तकत्वेन[५] गुरुत्वेनापि तमेव श्रीबादरायणं पृथङ्नमस्कृत्य[६] ग्रन्थारम्भं प्रतिजानीते – देवमिति ॥

(भा) देवं नारायणं नत्वा सर्वदोषविवर्जितम् ।
परिपूर्णं गुरूंश्चान् गीतार्थं वक्ष्यामि लेशतः ॥

(टी)सर्वदाऽपि भगवत्प्रवणान्तःकरणैः कार्यविशेषात् पृथग्विशेषात् क्रियते । तत्कथनं सदाचारपरिपालनाय । आन् इति गुरुविशेषणम् । [७]अकारवाच्यान्

---

१. श्रुत्या मत्या सदा भक्त्या विरक्त्या नित्यसेवया ।
तस्मै प्रसन्नः प्राज्येक्षः सद्यो विद्यां ददौ शुभाम् ॥ – म.वि. १५/१२१

२. 'शुभ-' – पा

३. मे सम्भवन्तो - पा

४. व्याख्याप्रणादमात्रेण वीरंमन्यान् स्वमण्डले ।
मायाविग्रामसिंहान् यो वादिसिंहो निराकरोत् ॥ – म.वि. १५/१२३

५. प्रवर्तकत्वात् - पा

६. चशब्दः पृथङ् नमस्कारार्थः । अपिशब्दात् सूत्रकारमपि । यद्यपि शास्त्रप्रतिपाद्या परदेवतैव भाष्यकारस्य गुरुः, स एव सूत्रकर्ताऽपि, तथापि देवताभक्त्या स्वगुरुभक्त्या शास्त्रगुरु-भक्त्या च तमेव नारायणं पृथङ् नमस्करोतीति गम्यते । – तत्त्वप्रदीपे(१/१/१)

७. आकारवाच्यान्- पा;
'अ आ अं अः पुराणर्षिः व्यासः शाखासहस्रकृत्' इत्यकारस्य तन्नामसु पाठात् । बहुवचनं च गौरवादेव । – प्र.दी.

विष्णूनित्यर्थः । **गीतेति** कृष्णगीतैवोच्यते । तथा – 'मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः'[१] इति । तन्मुख्यत्वं च सर्वलोकसिद्धम् ।

दशार्थत्वात् सर्वस्यापि भारतस्य, भाष्ये च गीतानां पृथक् दशार्थत्वात्, तासां[२] महाभारतान्तर्गतत्वात् तस्य महाप्रामाण्यं साधयितुम्, तत्कर्तुराप्तत्वं तावदाह – **नष्टधर्मेत्यादिना** ॥

**(भा) नष्टधर्मज्ञानलोककृपालुभिर्ब्रह्मरुद्रेन्द्रादिभिरर्थितो ज्ञानप्रदर्शनाय भगवान् व्यासोऽवततार ।**

(टी) अयं भावः – पौरुषेयं हि वाक्यमाप्तोक्तत्वात् प्रमाणम् । यो[३] हि वक्ष्यमाणार्थाभिज्ञत्वेन सम्यज्ज्ञानानुकूलः, तदनुकूलं श्रोतारं प्रसङ्गं च प्राप्तः, स आप्तः । उक्तवाक्यमाप्तवाक्यम् । अत्र भगवतः सुरार्तिहरावतारस्य नारायणस्य व्यासरूपेण वक्तृत्वात् । सुराणां ब्रह्मादीनाम्, तत्कृपाभाजां च श्रोतृत्वात्, तैरेव ज्ञानप्रदर्शनाय प्रार्थितत्वात्, तस्याप्तत्वमिति[४] ।

ननु तस्याप्तत्वं तद्वाक्यात्? वेदाद्वा ? नाद्यः । जीवादेरपि तत्तद्वाक्यात्[५] आप्तत्वापत्तेः । न द्वितीयः । वेदादेव श्रेयःसाधनावगतौ भारतवैयर्थ्यात् । न च वेदानुक्तोक्त्या तत् सप्रयोजनम् । निर्मूलत्वेनाप्रामाण्यापत्तेः । नित्यमुक्तश्चासौ सर्वेशः किमर्थं शास्त्रमारभते ? धर्मादिप्रयोजनाभावात् तस्येत्याशङ्क्याह – **ततश्चेत्यादिना** ॥

---

१. ब्रह्मसूत्रभाष्योदाहृतस्कान्दपुराणवचनम् (१/१/१)

२. गीतायाः – पा ३. आर्यो – पा

४. वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता – **अनुव्याख्याने १/१/५**

इदमेव ह्याप्तोक्तत्वं यद्वक्तृश्रोतृप्रसक्त्यानुकूल्यम् । वक्त्रानुकूल्यं तावद्भगवतो वेदव्यासस्य वक्तृत्वादस्त्येव सूत्राणाम् । श्रोत्रानुकूल्यं च ब्रह्मादीनां श्रोतृत्वात् । प्रसङ्गानुकूल्यं चाज्ञाननिर्हरणार्थेन प्रवृत्तेः । – **सन्न्यायरत्नावली**

५. तद्वाक्यात् – पा

(भा) ततश्चेष्टानिष्टप्राप्तिपरिहारसाधनादर्शनात् वेदार्थाज्ञानाच्च संसारे क्लिश्यमानानां वेदानधिकारिणां स्त्रीशूद्रादीनां च धर्मज्ञानद्वारा मोक्षो भवेदिति कृपालुः सर्ववेदाद्यर्थोपबृंहितां तदनुक्तकेवलेश्वरज्ञानदृष्टार्थयुक्तां च सर्वप्राणिनामवगाह्यानवगाह्यरूपां केवलभगवत्स्वरूपपरां परोक्षार्थां महाभारतसंहितामचीक्लृपत् ।

(टी) अयं भावः – न तावत् तद्वाक्यात्तस्याप्तत्वेऽतिप्रसङ्गः । न हि जिनादिनोक्तेनापीष्टानिष्टप्राप्तिपरिहारसाधनं दृश्यते इति वाच्यम् । मतभेदाद्येनाप्तत्वमापाद्यते । भगवतस्तु ...[१]'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति वेदत्वेन श्रूयते । इतिहासपुराणात्मकसर्ववाक्यादाप्तत्वावगमात् । न चैवं वेदाच्छ्रेयसाधनावगतौ भारतवैय्यर्थ्यम् । नहीतिहासपुराणाभ्यां विना [२]वेदार्थो दृश्यते तदधिकारिभिरपि । किमुत तदनधिकारिभिः स्त्रीशूद्रादिभिः ? अतः स्वयं सदाऽऽप्तकामत्वेन प्रत्युपकारधर्मादिप्रयोजनानपेक्षोऽपि भगवानाप्ततमस्तेषां सतां निष्कामधर्मसाध्यज्ञानद्वारा[३] मोक्षो भवेदिति कृपयैव महाभारतसंहितामचीक्लृपत् ।

एवमाप्तोक्तत्वात् प्रमाणतमं भारतम् । श्रुतिमूलत्वेनापि तत्प्रमाणतममिति भावेनाह – **सर्ववेदाद्यर्थोपबृंहितामिति** ॥ आदिशब्देन पुराणानि । तदुक्तं मात्स्ये[४] –

---

१. नात्र ग्रन्थपातः कोशेषु, किन्तु ग्रन्थपातः स्यादिति भाति । भगवतः सर्वज्ञत्वं, भारतस्य च वेदत्वं ह्यत्र साध्यम् । वक्ष्यति ह्यनुपदमेव – तत्कर्तुर्भगवतः सर्वज्ञत्वादिश्रुतेः, स्वकृतग्रन्थस्य वेदत्वश्रुतेश्चेति ।

२. इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रचरिष्यति ॥ – इति भारतवचनादिति ज्ञेयम् ।

३. धर्माज्ज्ञानं ज्ञानद्वारा मोक्ष इत्यर्थः । – **भावप्रदीपिकायाम्**

४. ५३/७०

"अष्टादशपुराणानि स्मृत्वा सत्यवतीसुतः ।
भारताख्यानमखिलं चक्रे तदुपबृंहितम् ॥[१]
लक्षेणैकेन तत्प्रोक्तं वेदार्थपरिबृंहितम्" इति ।

न चैतदन्येन कर्तुं शक्यमिति भावेनाह– **तदनुक्तकेवलेश्वरज्ञानदृष्टामिति** ॥ न चैतावताऽस्य निर्मूलत्वेनाप्रामाण्यमापाद्यम् । 'यतो वाचो निवर्तन्ते'[२] इति वेदानुक्तार्थस्यापि सूचनात् । तत्कर्तुर्भगवतः सर्वज्ञत्वादिश्रुतेः, स्वकृतग्रन्थस्य वेदत्वश्रुतेश्च । इतरेषां तत्त्वपरिज्ञानमेव दुर्लभं किमु तत्करणम् ? इति भावेनाह – **सर्वप्राणिनामिति** ॥ 'ब्रह्माऽपि तन्न जानाति' इत्यादेः । ननु भारतकथायाः सर्वैरपि कथ्यमानत्वात् कथमनवगाह्यता? इत्यत आह – **केवलेति** ॥ न हि भारतेऽन्येषां केवलभगवत्स्वरूपपरता प्रतीयते । भगवत्स्वातन्त्र्यादिसकलगुणपूर्णस्वरूपप्रतिपत्तये ह्यन्यदुच्यते[३] । एवमास्तीकाद्यर्थत्वेऽप्यनवगाह्यता भारतस्य, किमुत मन्वाद्यर्थत्वे? इति भावेनाह – **परोक्षेति** ॥ तदुक्तम् –

"भारतार्थस्त्रिधा प्रोक्तः स्वयं भगवतैव हि ।
मन्वादि केचित् ब्रुवते"[४] इत्यारभ्य,
'एवमध्यात्मनिष्ठं हि भारतं सर्वमुच्यते'[५] इत्यादि ।

---

१. ताम्रपर्णीयटिप्पण्यामुदाहृतम् । भारतसावित्रीस्तोत्रे च – अष्टादशपुराणानि नवव्याकरणानि च । आलोढ्य भारतं चक्रे ..

२. तैत्तिरीयोपनिषत् २/२२

३. सर्वज्ञं सर्वकर्तारं नारायणमनामयम् ।
सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि ॥
सर्वेषामपि वेदानामितिहासपुराणयोः ।
प्रमाणानां च सर्वेषां तदर्थं चान्यदुच्यते ॥ इति विष्णुतत्त्वनिर्णयोदाहृतनारदीयवचनम्

४. १/१३७ – म.भा.ता.नि.

५. १/१४६ – म.भा.ता.नि.

यदेतत् भारतस्य प्रमाणतमत्वप्रतिपादकं नष्टधर्मेत्यादि श्रीमदाचार्यवचनं तत्स्वत एव प्रमाणं, न तत्र शङ्का भवति तल्लक्षणाभिज्ञानां महात्मनाम्[१] । तथाहि [२]ब्रह्मतर्कादौ 'तदुक्तिमात्रे प्रामाण्यं यदि नास्यागमान्तरम् । अपेक्षितम्' इत्यारभ्य 'नाशङ्क्यं तद्वचः क्वचित्', 'तद्वाक्यं देवपूजितम्'[३] इत्यादि

---

१. 'यद्यप्याचार्यः स्वोक्तार्थे स्वयमेव प्रमाणम् । सर्वज्ञत्वादविप्रलम्भकत्वाच्च । तथाऽपि स्कान्दे चोक्तमिति प्रौढवादं करोति' इति त्रिविक्रमपण्डिताचार्याः तत्वदीपिकायाम् । प्रमाणपुरस्सरं तदुपपादनमपि तत्रैव द्रष्टव्यम् ।

२. 'प्रश्नो वादे च जल्पादौ कर्तव्यः प्रतिवादिना ।
तदुक्तिमात्रे प्रामाण्यं यदि नास्यागमान्तरम् ।
अपेक्षितं यदा शङ्का दर्शनीयस्तदागमः ।
निःशङ्कत्वेन यो वक्ता प्रश्नानामुत्तरं सदा ।
आनुकूल्येनागमानां नाशङ्क्यं तद्वचः क्वचित् ।
दशतालो दशमुखो ललाटत्रिंशकस्तथा ।
सार्धोन्नतश्चैव पुनः पर्यग्दशशिरस्तथा ।
पश्चोराः सप्तपादो यो नाशङ्क्यं तद्वचः क्वचित् ।
नवाङ्गुलमुखो यस्तु गले च चतुरङ्गुलः ।
चतुर्विंशाङ्गुलतनुस्तद्वाक्यं देवपूजितम् ।
प्राधान्याल्लक्षणोपेतो दुर्लक्षणयुतोऽपि सन् ।
तस्यापि वाक्यं मानं स्यात् किमु सर्वयुतस्य तु ।
प्रायो देवाश्च ऋषयो न सर्वशुभलक्षणाः ।
ऋते विष्णुं सुरश्रेष्ठं ब्रह्माणं वाऽप्यनन्तरम् ।
यस्मान्न विदुषां वाक्यमाशङ्क्यं केनचित् क्वचित् ।
तस्माद्वेदेषु सर्वेषु कथाः प्रश्नोत्तरात्मिकाः ।
न प्रमाणान्तरं तत्र पृच्छन्ति घटनां विना ।
एतस्मादाश्वलाद्याश्च पप्रच्छुर्नैव कुत्रचित् ।
आगमं याज्ञवल्क्योक्तेरन्यं तं मिथिलोऽपि च ।' – इति ब्रह्मतर्के
– बृ.भा. ५/७

३. 'देवेन्द्रपूजितम्' – पा

तल्लक्षणानभिज्ञानां प्राकृतानां तु भवत्यपि शङ्का । साऽपि मा भूदिति भावेनाह – **तच्चोक्तमिति** ॥

(भा) **तच्चोक्तम् –**

**लोकेशा ब्रह्मरुद्राद्याः संसारे क्लेशिनं जनम् ।**
**वेदार्थाज्ञमधीकारवर्जितं च स्त्रियादिकम् ॥**
**अवेक्ष्य प्रार्थयामासुर्देवेशं पुरुषोत्तमम् ।**
**ततः प्रसन्नो भगवान् व्यासो(ऽ)भूत्वा च तेन च ॥**
**अन्यावताररूपैश्च वेदानुक्तार्थभूषितम् ।**
**केवलेनात्मवोधेन दृष्टं वेदार्थसंयुतम् ॥**
**वेदादपि परं चक्रे पञ्चमं वेदमुत्तमम् ।**
**भारतं पञ्चरात्रं च मूलरामायणं तथा ॥**
**पुराणं भागवतं चेति सम्भिन्नः शास्त्रपुङ्गवः ॥**

**– इति नारायणाष्टाक्षरकल्पे**

(टी) न केवलं तन्मद्वाक्यादवसीयते किन्तु उक्तं च तत् **'लोकेशाः'** इत्यादिना, नारायणाष्टाक्षरकल्पादिस्थानचतुष्टये । तदेव 'यदि विद्यात्' इत्यादि भारतवाक्यपर्यालोचनया, ऋषिसम्प्रदायादिहेतुना चावसीयते इत्यर्थः । प्रथमत एव भगवता ब्रह्माणं सृष्ट्वा, तस्मै वेदेतिहासादिसर्वविद्याया प्रतिपादितत्वात् । हयास्यनिःसृतश्रुतेश्च वेदव्यासो भूत्वा च पञ्चमवेदं चक्र इति चकारः । तेन चान्यावताररूपैश्चेति चकारो मिथःसमुच्चयार्थः । **अन्यावताररूपैः** इति हयास्यकपिलादिरूपैः[१] । [२]एतदेव ऋग्भाष्ये 'मुनिस्तु सर्वविद्यानाम्'

---

१. नरहरितीर्थश्रीमच्चरणास्तु अन्यावताररूपैः इत्येतत् हयास्यकपिलादिरूपैरिति व्याख्यातवन्तः । – भावरत्नकोशे

२. तदेतत् – पा

इत्यादिना चावगन्तव्यम्[१] । मूलरामायणं नाम शतकोटिप्रविस्तरं

---

१. मुनिस्तु सर्वविद्यानां भगवान् पुरुषोत्तमः ।
विशेषतश्च वेदानां यो ब्रह्माणमिति श्रुतिः ॥
ऋग्वेदादिकमस्यैव श्वसितं प्राह चापरा ।
वाचो बभूवुरुषतीर्हयग्रीवादिति स्फुटम् ॥
वचो भागवतेऽप्यस्ति ब्रह्माण्डेऽपि तथाऽपरा ।
'हयग्रीवादिमा विद्याः श्वसितत्वेन निःसृताः ॥
ब्रह्मणा स्वीकृतास्ताश्च रुद्रशेषविपा अपि ।
दक्षाद्याः सनकाद्याश्च शक्राद्या मनवस्तथा ।
जगृहुस्ते च विश्वस्मिंश्चक्रुर्व्याप्तास्ततोऽखिलाः ।'
उक्तं पद्मपुराणे च 'कपिलो भगवानजः ।
प्रोवाच ब्रह्मणे विद्याः' 'हृदिस्थो बादरायणः ॥
ओङ्कारपूर्वका विद्याः प्रेरयत्यखिलेष्वपि ।
सदैव ब्रह्मणे पूर्वम्' इति सात्वतसंहिता ।
सकृन्निगदमात्रेण गृहीतं ब्रह्मणाऽखिलम् ।
अन्तर्गतस्य व्यासस्य प्रसादान्नित्यशक्तितः ।
तेन चानन्तशक्तित्वात् युगपत्समुदीरितम् ।
प्रथमप्रतिपत्तृत्वान्मुनिर्ब्रह्माऽखिलस्य च ।
सुपर्णोऽखिलवेदानां पञ्चरात्रस्य नागराट् ।
द्वितीयप्रतिपत्तृत्वान्मुनित्वे सम्प्रकीर्तितौ ।
यः पश्यति स्वयं वाक्यं स ऋषिस्तस्य कीर्तितः ।
अर्वाक् तु द्वादशावृत्तेरधीत्याप्यृषिरेव सः ।
यत्स्वयं प्रतिभातस्य निश्चयार्थं गुरोर्वचः ।
सुपर्णादेर्विरिञ्चस्य केवलं धर्मकारणम् ।
ऋचां ऋषिस्ततः शक्रो यजुषां सूर्य एव च ।
सोमः साम्नां तृतीयास्ते प्रतिपत्तार ईरिताः ।
अथर्वाङ्गिरसामग्निरेकर्षिश्चाप्यथर्वणाम् ।
इत्युक्ताः समुदायस्य सन्त्यन्ये च पृथक् पृथक् ।

– इत्यादि ऋग्भाष्ये (१/२२-३४)

श्रीहयास्याच्छ्रुत्वा ब्रह्मणा नारदायोक्तम् । तदुक्तं मात्स्ये –

'निर्दग्धेषु च लोकेषु वाजिरूपेण वै मया'[१] ।
'श्रुत्वा जगाद च मुनीन् प्रति देवश्चतुर्मुखः ।[२]' इत्यारभ्य,
'वाल्मीकिना च यत्प्रोक्तं रामोपाख्यानमुत्तमम् ।
ब्रह्मणाऽभिहितं तत्र[३] शतकोटिप्रविस्तरम्[४] ।
आहृत्य नारदायैव तेन वाल्मीकये पुनः'[५] इति[६] ॥

स पञ्चमवेदाख्यशास्त्रपुङ्गवो भारतादिभेदभिन्न इत्यर्थः[७] ।

(भा) ब्रह्माऽपि तन्न जानाति ईषत् सर्वोऽपि जानति ।
बह्वर्थमृषयस्तत् तु भारतं प्रवदन्ति हि ॥ – इत्युपनारदीये
ब्रह्माद्यैः प्रार्थितो विष्णुर्भारतं स चकार ह ।
यस्मिन् दशार्थाः सर्वत्र न ज्ञेयाः सर्वजन्तुभिः ॥ – इति नारदीये
भारतं चापि कृतवान् पञ्चमं वेदमुत्तमम् ।

---

१. ५३/५
२. ५३/७
३. तच्च – पा
४. 'चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैकमक्षरं पुंसां महापातकनाशनम् । – इति **बुधकौशिकसङ्गृहीते रामरक्षास्तोत्रे**
५. ५३/७१-७२
६. तथा च प्राचीनटीका – '' 'मूलरामायणं नाम शतकोटिप्रविस्तरम् । श्रीहयास्याच्छ्रुत्वा ब्रह्मणा नारदायोक्तम् । तदुक्तं मात्स्ये – 'निर्दग्धेषु च लोकेषु वाजिरूपेण वै मया । श्रुत्वा* जगाद च मुनीन् प्रति देवश्चतुर्मुखः ।' इत्यारभ्य 'वाल्मीकिनाऽपि यत्प्रोक्तं रामोपाख्यानमुत्तमम् । ब्रह्मणाऽभिहितं तच्च शतकोटिप्रविस्तरम् । आहृ(ह)त्य नारदायैव तेन वाल्मीकये पुनः ।' इति'' । –**भावरत्नकोशे**
*श्रुत्या इति मुद्रितपाठः प्रामादिकः ।
७. पञ्चमवेदाख्यः शास्त्रपुङ्गव इति सम्भिन्नः प्रभिन्नः । अथवा इति शास्त्रपुङ्गवः । स च सम्भिन्न एकार्थतया सङ्गत इत्यनेकेष्वपि ग्रन्थेष्वेकवचनं योज्यम् । – **प्र.दी.**

दशावरार्थं सर्वत्र केवलं विष्णुबोधकम् ।
परोक्षार्थं तु सर्वत्र वेदादप्युत्तमं तु यत् ॥ – इति स्कान्दे
[1]'यदि विद्याच्चतुर्वेदान् साङ्गोपनिषदान् द्विजः ।
न चेत् पुराणं संविद्यान्नैव स स्याद्विचक्षणः ॥'
[2]'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति ।'
[3]'मन्वादि केचिद्ब्रुवते ह्यास्तीकादि तथाऽपरे ।
तथोपरिचराद्यन्ये भारतं परिचक्षते ॥'
भारतं सर्ववेदाश्च तुलामारोपिताः पुरा ।
देवैर्ब्रह्मादिभिः सर्वैर्ऋषिभिश्च समन्वितैः ॥
व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम् ।
[4]महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।
'यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् ॥'[5]

'विराटोद्योगसारवान्'[6] इत्यादितद्वाक्यपर्यालोचनया, ऋषिसम्प्रदायात्, 'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृत् भवेत्'[7] इत्यादिपुराणान्तरगतवाक्यार्था-

१. भारते आदि २/३८२; २. भारते आदि १/२६८; ३. भारते आदि १/५२
४. ब्रह्माण्डपुराणवचनत्वेन महाभारततात्पर्यनिर्णयोदाहृतम् (२/१०); भारते च स्वर्गारोहणपर्वणि (५/४५), आदिपर्वणि (१/२७४)
५. भारते स्वर्गारोहणपर्वणि (५/५०)
६. भारते आदि (१/८९)
७. भारते १२/२२४/८ BORI

ननु लक्षसङ्ख्याकश्लोककरणमात्रेण कथं व्यासस्य साक्षान्नारायणत्वसिद्धिरिति न शङ्कनीयम् । कुरुपाण्डववंशोत्पत्तेः पूर्वमेव उभयोर्वंशयोरुत्पत्तिप्रकारम्, राजसूयाश्वमेधादियागमहिमानम्, तदर्थं कृतदिग्विजयप्रकारम्, जतुगेहान्निर्गमनप्रकारकौशलम्, बक-

न्यथाऽनुपपत्त्या, [१]नारदाध्ययनादिलिङ्गैश्चावसीयते ।

(टी) अतः प्रमाणतमं भारतम् ।

एतेनैतत्सुनिरस्तम् । यद्भ्रान्तैरुच्यते । 'भारतेऽधिगम्यमाने ग्राम्यसुखानुवादे एव मतिरवरुध्यते । न हरिकथायाम्'[२] इति । तथा सति तन्नामनिरुक्तिज्ञानात् सर्वपापक्षयो न स्यादित्याह – **कथमन्यथेति** ॥

**(भा) कथमन्यथा भारतनिरुक्तिज्ञानमात्रेण सर्वपापक्षयः ?**

(टी) न केवलं तन्नामनिरुक्तिज्ञानात् पापक्षयो भवतीति पावनिकः, किन्त्वानुभाविकोऽपि जनमेजयादीनामिति भावेनाह – **प्रसिद्धश्चेति** ॥

**(भा) प्रसिद्धश्च सोऽर्थः ।**

(टी) इतोऽप्युक्तगुणोपपन्नं भारतमित्याह – **कथं चेति** ॥

**(भा) कथं चान्यस्य न कर्तुं शक्यते?**

---

हिडिम्बयोर्हननम्, द्रौपदीविवाहनिर्वाहशक्तिम्, दुर्द्यूतोद्योगम्, वनवासाज्ञातवासगोग्रहणादिबहुतरकथाम्, अष्टादशाक्षौहिणीसेनायामन्योन्यं कथ्यमानोक्तिप्रत्युक्तिप्रकारम्, शरप्रतिशरसङ्ख्याबन्धनादिचातुरीम्, व्यूहप्रतिव्यूहकरणम्, अस्त्रप्रत्यस्त्रप्रयोगपरिपाटीम्, भीमार्जुनभीष्मद्रोणादिभिः दिने दिने हन्यमानकरितुरगाद्यनेकसङ्ख्यादिकं च करतलमिलितामलकवत् दृष्ट्वा महाभारताख्यग्रन्थे ग्रथयतो व्यासस्य निरवधिकजगन्निर्मातृनारायणवत् निरवधिकसार्वज्ञसिद्धेः साक्षात् तदवतारत्वस्यापि प्रेक्षावद्भिरुत्प्रेक्षयितुं शक्यत्वात् । कथमन्यथा मत्स्यकूर्मादेः तदवतारत्वसिद्धिः? अतः साधूक्तम् – 'को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ।' इति ।

– इति श्रीवादिराजतीर्थाः महाभारततात्पर्यनिर्णयभावप्रकाशिकायाम् २/५५

१. नारदोऽश्रावयद्देवान् – इति भारते आदि १/१०७

२. न भारतं हरिपरम् । 'यस्मिन् नृणां ग्राम्यकथानुवादैर्मतिर्गृहीता न हरेः कथायाम् ।' इत्युक्तत्वादित्यत आह – कथमिति ॥ – भावप्रदीपिका

(टी) ननु 'निरुक्तमस्य यो वेद' इत्यादिभारतवाक्येनैव भारतस्तुतौ, अविद्यमानगुणोक्तिशङ्का[३] स्यात् लोकवदित्यत आह – **ग्रन्थान्तरगतत्वाच्चेति**[४] ॥

**(भा) ग्रन्थान्तरगतत्वाच्च नाविद्यमानस्तुतिः ।**

(टी) ननु 'को ह्यन्यः' इत्यादिग्रन्थान्तरगतवचनेन कर्तुरेव स्तुतिः, न तत्कृतभारतस्येत्यत आह – **न चेति** ॥

**(भा) न च कर्तुरेव । इतरत्रापि साम्यात् ।**

(टी) लैङ्गादेरपि तत्कृतत्वाविशेषात्[५], तेनापि तत्स्तुतिः किं न स्यात्? इति भावः ।

यदेवं भारतं समग्रं [६]सर्वशास्त्रपरत्वात् प्रमाणतमम्, तदा किमुत प्रमाणतमतत्सारभूता गीता? इति भावेनैतत् सप्रमाणकमाह – **तत्र चेति** ॥

**(भा) तत्र च सर्वभारतार्थसङ्ग्रहां वासुदेवार्जुनसंवादरूपां भारतपारिजातमधुभूतां गीतामुपनिबबन्ध । तच्चोक्तम् –**

---

३. **अविद्यमानोक्तिशङ्का** - पा

४. प्राचीनटीकायां तु " 'निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते' इति भारतवाक्येनैव भारतस्य स्तवनेऽविद्यमानार्थस्तवनत्वशङ्का स्याल्लोकवदित्यत आह – ग्रन्थान्तरगतत्वाच्चेति ॥" इत्यवतारितम् । – **भावरत्नकोशे**

५. तत्र न तावद्ग्रन्थकृत्वं हेतुः । कुत इत्यत आह – इतरत्रापीति ॥ ग्रन्थकृत्वस्य नारायणादितरत्रापि साम्यादनैकान्त्यप्रसङ्गात् । नापि भारतकृत्वं । कुत इत्यत आह – इतरत्रापीति ॥ ग्रन्थव्यक्तिविशेषकृत्वेन नारायणत्वसाधनस्येतरत्र कालिदासादावपि साम्यादतिप्रसङ्गात् । तस्मात् नारायणादन्येन कर्तुमशक्यस्य कार्यस्य कर्तृत्वमेव हेतुः । – इति **प्रमेयदीपिकायां** अर्थान्तरं सूचितं भाष्यवाक्यस्य ।

६. समस्तशास्त्रार्थनिदर्शनार्थकं चक्रे महाभारतनामधेयम् ।
वेदोत्तमं तच्च विधातृशङ्करप्रधानकैस्तन्मुखतः सुरैः श्रुतम् ॥ – **म.भा.ता.नि.१०/५९**

**भारतं सर्वशास्त्रेषु भारते गीतिका वरा ।**

**विष्णोः सहस्रनामापि ज्ञेयं पाठ्यं च तद्द्वयम् ।। इति महाकौर्मे ।**

**(टी)** तत्र च भारते गीतामुपनिबबन्ध । नन्वेवमपि प्रस्थे प्रसूतिवत् तदेकदेशत्वात् न भारतत्वादुत्तमत्वं गीताया इत्यत आह – **सर्वभारतार्थसङ्ग्रहामिति ।।** प्रस्थे पयस्युद्धृताज्यप्रसूतिवत् तत्सर्वसारत्वात् तदुत्तमत्वोपपत्तेः । एतदेवाह – **भारतपारिजातमधुभूतामिति ।।** भारते च मधूद्धर्तुं न मधुपतेरन्यः समर्थः । सोऽपि तत्स्वभक्तायैव ददातीति[1] भावेनोक्तम् – **वासुदेवार्जुनसंवादरूपामिति ।।**

**(भा) 'स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने'[2] । इत्यादि च ।**

**(टी)** स हि गीतोक्तो धर्मः परब्रह्मस्वरूपवेदने सुपर्याप्तः सुसंपूर्णः । तस्मात् स न विस्मर्तव्य इति भगवानेवार्जुनायाहानुगीतोपक्रमे[3] ।

**।। इति उपोद्घातः ।।**

---

१. 'सर्वोपनिषदो गावः दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्' इतिवत् ।

२. भारते अश्वमेधपर्वणि अनुगीतायाम् १/१०७

३. स गीतोक्तो धर्मो ब्रह्मणः स्वरूपज्ञाने सुपर्याप्तो ज्ञानात्प्रागनुष्ठितः । ब्रह्मणः पदवेदने जातेऽनुष्ठितस्तु सुपर्याप्तः सुपर्याप्तमुक्तिहेतुरित्यनुगीतोपक्रमे भगवतैवोक्तम् । – प्र.दी.

# श्रीमद्भगवद्गीता

## प्रथमोऽध्यायः

धृतराष्ट्र उवाच

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥१॥

सञ्जय उवाच

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥२॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥३॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥४॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित् कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥५॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥६॥

अस्माकं तु विशिष्टा ये तान् निबोध द्विजोत्तम ।
नायका मम सैन्यस्य सञ्ज्ञार्थं तान् ब्रवीमि ते ॥७॥

भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥८॥

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥९॥**

**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥१०॥**

**अयनेषु च सर्वेषु यथाभागमवस्थिताः ।**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥११॥**

**तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥१२॥**

**ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत्[१] ॥१३॥**

**ततः [२]श्वेतहयैर्युक्ते महति स्यन्दने स्थितौ ।**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥१४॥**

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।**
**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥१५॥**

**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।**
**नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥१६॥**

**काश्यश्च परमेष्वासः शिखण्डी च महारथः ।**
**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥**

**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।**
**सौभद्रश्च महाबाहुः शङ्खं[३] दध्मुः पृथक् पृथक् ॥१८॥**

---

१. तुमुलो महान् – पा

२. श्वेतैर्ह- पा

३. शङ्खान् – पा

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥१९॥

अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥२०॥

हृषीकेशं तदा वाक्यमिदमाह महीपते ।

अर्जुन उवाच

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥२१॥

यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥२२॥

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥२३॥

सञ्जय उवाच

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥२५॥

तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।
आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा ॥

श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।
तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान् ॥२७॥

कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ।

अर्जुन उवाच

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥२८॥

सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥२९॥

गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥३०॥

निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥३१॥

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥३२॥

येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥३३॥

आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ॥३४॥

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥३५॥

निहत्य धार्तराष्ट्रान् नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥३६॥

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥३७॥

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥३८॥

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥३९॥

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥४०॥

अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥४१॥

सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥४२॥

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥४३॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥४४॥

अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद् राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥४५॥

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥४६॥

सञ्जय उवाच

एवमुक्त्वाऽर्जुनः सङ्ख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥४७॥

॥ इति श्रीमद्भगवद्गीतायां प्रथमोऽध्यायः ॥

— ० —

# द्वितीयोऽध्यायः

सञ्जय उवाच

तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥१॥

श्रीभगवानुवाच

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥२॥

क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥३॥

अर्जुन उवाच

कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥४॥

गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वाऽर्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥५॥

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसम्मूढचेताः ।

**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे**
**शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥७॥**

**न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥८॥**

सञ्जय उवाच

**एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥९॥**

**तमुवाच हृषीकेशः प्रहसन्निव भारत ।**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥१०॥**

(टी) तत्र प्रथमाध्यायस्य कतिपयश्लोकाधिकस्यातिरोहितार्थत्वात्[१] तदर्थं सङ्ग्रहेणानूद्य तत्सङ्गतत्वेन 'तमुवाच हृषीकेशः' इत्यारभ्य व्याख्यातुमुपारभते – तत्र सेनयोरित्यादिना ॥

(भा) तत्र सेनयोर्मध्ये बान्धवादिमोहजालसंवृतं विषीदन्तमर्जुनं भगवानुवाच ॥

**श्रीभगवानुवाच**

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥११॥**

(भा) प्रज्ञावादान् स्वमनीषोत्थवचनानि ।

---

१. ग्रन्थस्य कतिपयश्लोकाधिकस्याद्याध्यायस्य । तथा च प्राचीनटीका "प्रथमाध्यायस्य कतिपयश्लोकाधिकस्यातिरोहितार्थत्वात् ।" – भावरत्नकोशे

इदानीं गीताव्याख्यानावसरे प्राप्ते 'धर्मक्षेत्रे' इत्यारभ्य 'अशोच्यानन्वशोचस्त्वम्' इत्यतः प्राक्तनस्य ग्रन्थस्यातिरोहितार्थत्वात् तात्पर्यमाह – तत्रेति ॥ – प्र.दी.

(टी) स्वमनीषोत्थवचनानि न वृद्धसम्मतानि । न हि महान्तो नारायणद्विषां तदनुबन्धिनां वा निग्रहमधर्मं मन्यन्त इति भावः[१] । अनेन प्रज्ञाया वादाः प्रज्ञावादा इति विग्रहः सूचितः[२] ।

नन्वस्तु धर्मो हरिशत्रुवधः । तथापि तदितरे मरिष्यमाणाः कथमशोच्या इति प्रश्नोत्तरत्वेनोत्तरार्धमवतारयति – **कथमित्यादिना**[३] ॥११॥

(भा) **कथमशोच्याः ? गतासून् ॥११॥**

**किमिति ? न त्वेवाहम् ।**

(टी) मृतान् प्रति किमर्थं न शोचन्तीति देहात्मनोरविवेकेन प्रश्नः, विवेकेनोत्तरम् – **न त्वेवाहमिति** । तर्हि भगवत्यपि देहात्मविभेदः स्यादित्यत आह – **ईश्वरनित्यत्वस्येति** ॥

(भा) **ईश्वरानित्यत्वस्याप्रस्तुतत्वाद्**[४] **दृष्टान्तत्वेनाह – न त्वेवेति ॥**

---

१. प्रज्ञावादान् इत्येतत् प्रज्ञावतां बुद्धिमतां वादान् वचनानीति कश्चिद्व्याख्यातवान् । तदसत् । न हि 'दृष्ट्वेवं स्वजनम्' इत्याद्यर्जुनवाक्येषु कश्चिद्बुद्धिमद्वादो विद्यते । न हि बुद्धिमन्तो नारायणद्विट्तदनुबन्धिनिग्रहमधर्मं वदन्ति । न च धर्माधर्मविषयत्वमात्रेण बुद्धिमद्वादो भवति । बौद्धोपदेशादेरपि तत्त्वप्रसङ्गात् । **– प्र.दी.**

२. अनेन 'प्रज्ञाया वादाः प्रज्ञावादा इति विग्रहः' इति प्राचीनटीकाऽपि विवृता । **– भावरत्नकोशे**

प्रज्ञाया वादाः प्रज्ञावादाः । कार्यकारणभावे षष्ठी । न हि स वादोऽस्ति, यः प्रज्ञापूर्वो न भवतीति सामर्थ्यात् स्वेति लभ्यते । सावधारणं चैतत् । अब्भक्ष इति यथा । अन्यथा पुनर्वैयर्थ्यादिति । **– प्र.दी.**

३. आसन्नविनाशत्वाख्योपपत्त्यननुसन्धानदशायां प्राचीनटीकामनुरुन्धानेनोक्तम् – प्रश्न इति । तदनुसन्धानदशायामाह – आक्षेपो वेति । **– भावरत्नकोशे**

तथा चाशोच्याः कुतोऽवगन्तव्या इति प्रश्नो वाऽऽक्षेपो वा युज्यत एव । **– प्र.दी.**

४. 'ईश्वरनित्यत्वस्याप्रस्तुतत्वाद्दृष्टान्तेनाह – न त्वेवेति' इति प्रचलितपाठः ।

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥१२॥**

(टी) न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वसाम्यमिति भावः ।

ननु स्वस्वबान्धवादिनाशतया ह्यर्जुनविषादः, अतो यदुनन्दनानित्यत्वशङ्का-परिहारौ कथमप्रस्तुतौ? इति । उच्यते । न ह्यर्जुनेनेतरदेहहानिवत् भगवद्देहहानिः शङ्क्यते । येन सा परिह्वीयेत । प्रत्युताप्राकृतानन्तचिद्धन एवायं भगवानित्यर्जुन-बुद्धिः । अदृष्टाश्रुतभाववत्वात् । इह दृष्टश्रुतभाववत्वात् बहुशः । अतः सुतरा-मीश्वरानित्यत्वस्याप्रस्तुतत्वादिति ।

नन्वीश्वरस्यालौकिकत्वात् कथं दृष्टान्तता? इत्यत आह – **यथाऽहमिति ॥**

**(भा) यथाऽहं नित्यः सर्ववेदान्तेषु प्रसिद्धः, एवं त्वमेते जनाधिपाश्च नित्याः ॥१२॥**

(टी) **सर्ववेदान्तेषु** सर्वासूपनिषत्सु 'नित्यो नित्यानाम्'[१] इत्याद्यासु । सर्वेषां वेदानाम् अन्तो निर्णयो येषु पुरुषेषु तेष्विति वा[२] ॥१२॥

---

'ईश्वरानित्यत्वस्य' इति ह.पाठम् अप्रचलितं मन्यमानाः केचिदाधुनिका आहुः – ''ईश्वरनित्यत्वस्याप्रस्तुतत्वात् दृष्टान्तत्वेनाह इत्यत्र ईश्वरानित्यत्वस्येति अप्र.पाठः । अप्रस्तुतत्वात् अनाशङ्कितत्वादिति प्रमेयदीपिकोक्तार्थः । न ह्यत्र दृष्टान्तत्वपर्यन्तानु-धावनस्य अनित्यत्वाप्रस्तुतिर्बीजं भविष्यति । किन्तु प्रसक्तत्वे सत्यसाध्यत्वम् । तत् तु ईश्वरनित्यत्वे । तस्मादाचार्योक्त्यस्वारस्यम् ।'' – इति ॥ तन्न । असिद्धेः । नरहरितीर्थीयविरोधाच्च ।

१. काठकोपनिषत् २/२/१

२. प्राचीनटीकायां ''वेदान्ता उपनिषदः'' इत्युक्त्वा ''वेदानामन्तो निर्णयो येषु पुरुषेष्विति वा'' इत्यर्थान्तरमुक्तम् । – **भावरत्नकोशे**

'वेदान्ता उपनिषदः' – **प्र.दी.**

ननु 'आत्मनित्यत्वं देहहानिः' इत्युक्तिरात्मसत्वे स्यात् । तदेवासिद्धम् । मानाभावाद्विचारासहत्वाच्च । तथाहि – स किं सर्वगतः?, अणुः?, देहमानो वा ? नाद्यः । अदेहप्रदेशे तद्भोगादर्शनात् । व्यञ्जकाभावाददर्शनमिति चेत् । न । देहेष्वपि सर्वेष्वदर्शनात्[1] । सर्वेषाम् अतत्कर्मारब्धेष्वदर्शनमिति चेत् । न । सर्वगतात्मपक्षे तदतत्कर्मविभागानुपपत्तेः । अतद्देहोत्पन्नं अतत्कर्मेति चेत्[2] । न । कर्मविभागसिद्धौ देहविभागसिद्धिः, देहविभागसिद्धौ कर्मविभागसिद्धिरित्यन्योन्याश्रयापत्तेः[3] । बीजाङ्कुरयोरिव देहादृष्टयोरनादितः कार्यकारणभावोपपत्तावपि, सर्वदेहगतानां कर्मविभागे देहविभागे वा न काचिदुपपत्तिरित्येषा दिक् । अतो न सर्वगत आत्मा । न चाणुः । देहेऽप्यव्याप्तिप्रसङ्गात्[4] । नापि तत्तद्देहमानः । सङ्कोचविकासाभ्यां विकारत्वेनानित्यत्वप्रसङ्गात्[5] । अतो न देहातिरिक्त आत्मेति चोद्याभिप्रायः । अस्योत्तरत्वेनोत्तरश्लोकं व्याचष्टे – देहिन इत्यादिना ॥

**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥१३॥**

(भा) देहिनो भाव एतद्भवति; तदेवासिद्धमिति चेत्, न । देहिनोऽस्मिन्

१. सर्वेष्वनुदर्शनात् - पा
२. तत्तद्देहोत्पन्नं तत्तत्कर्मेत्युपपन्नमिति चेत् - पा
३. सिद्धौ हि कर्मभेदस्य स्यादुपाधिविभिन्नता ।
तत्सिद्धौ चैव तत्सिद्धिरित्यन्योन्यव्यपाश्रयः ॥ – उपाधिखण्डने
४. ॐ एवं चात्माकात्स्न्र्यम् ॐ – ब्र.सू. २/२/३४
जीवस्य शरीरपरिमितत्वाङ्गीकारेऽण्वादिशरीरस्थस्य हस्त्यादिशरीरेऽकात्स्न्र्यं स्यात् – इति तद्भाष्ये ।
५. ॐ न च पर्यायाप्यविरोधो विकारादिभ्यः ॐ ॥ ब्र.सू. २/२/३५
तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वमिति न मन्तव्यं विकारित्वादनित्यत्वप्रसक्तेः । – इति तद्भाष्ये ।

यथा कौमारादिशरीरभेदेऽपि देही तदीक्षिता सिद्धः, एवं देहान्तरप्राप्तावपि, ईक्षितृत्वात् । .

(टी) अत्रेक्षणान्यथानुपपत्त्यैव देहातिरिक्तात्मसिद्धेः, तस्य यथा कौमारादिकं हित्वा यौवनादिप्राप्तौ स्थायित्वं च सिद्ध्यति । तथेमं देहं हित्वा देहान्तरप्राप्तावपि ईक्षणान्यथानुपपत्त्यैव देहातिरिक्तात्मसिद्धेस्तन्नित्यत्वमपि सिद्ध्यतीति भावः ।

अत्र देहान्तरप्राप्तावपीत्यनेन सर्वगतत्वादिविचारासहत्वमपि प्रत्युक्तम् । उत्क्रान्तिगत्यागतीनामणुत्वसाधकत्वात्[१] । न चैतावता देहव्याप्त्यभावः । प्रदीपस्यालोकेन गुणेन गृहव्याप्तिवदात्मनश्चिद्गुणेन देहव्याप्तिसम्भवात् । उक्तं हि भगवता 'गुणाद्वाऽऽलोकवत्'[२] इति ।

नन्वीक्षणस्य देहान्वयव्यतिरेकदर्शनान्न तेन देहातिरिक्तात्मसिद्धिरित्याशङ्क्य, देहान्वयं तावदीक्षणस्य विघटयति– **न हि जडस्येति**[३] ॥

**(भा) नहि जडस्य शरीरस्य कौमाराद्यनुभवः सम्भवति । मृतस्यादर्शनात् ।**

---

१. 'ॐ उत्क्रान्तिगत्यागतीनाम् ॐ' ब्र.सू. २/३/२० - हेतूनां सकाशादणुरेव । 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छत्यमुष्मादिमं लोकमागच्छति स गर्भो भवति स प्रसूयते स कर्म कुरुते' इति पौष्यायणश्रुतेः – इति तद्भाष्ये ।

२. 'ॐ गुणाद्वाऽऽलोकवत् ॐ' ब्र.सू. २/३/२६
यथाऽऽलोकस्य प्रकाशगुणेन व्याप्तिर्ज्योतीरूपेणाव्याप्तिः एवं चिद्गुणेन व्याप्तिर्जीवरूपेणाव्याप्तिरिति वा । स्कान्दे च –

'असम्यक् सम्यगिति च व्यवस्थाभेदतः सुराः ।
व्याप्त्यव्याप्तियुतास्त्वन्ये चिद्गुणेनैव नान्यथा ।
चिद्गुणस्य स्वरूपत्वात् तद्व्याप्तिश्चेति युज्यते ।
शक्तियोगात् सुराणां तु विविधा च व्यवस्थितिः' इति ॥ – इति तद्भाष्ये

३. 'न हि देहस्येति' इति कोशेषु ।

(टी) मृतशरीरस्य भस्मीभावादेः पूर्वमीक्षणाभावात् न देहान्वितमीक्षणमित्यर्थः ।

ननु[१] भूतचतुष्टयारब्धे देहे वायुवह्न्याख्यभूतद्वयापगमात् मृतस्यानुभवाभावः[२] । अतोऽनुभवस्य सम्पूर्णदेहान्वयव्यतिरेके बाधकाभावात् 'अहं मनुष्यः' इत्याद्यनुभवितुः देहसामानाधिकरण्याच्च देह एवात्मेति चोदयति – **मृतस्येति** ॥

**(भा) मृतस्य वाय्वाद्यपगमादनुभवाभावः, 'अहं मनुष्यः' इत्याद्यनुभवाच्चैतत् सिद्धमिति चेत् ।**

(टी) वाय्वाद्यनुगमेन सम्पूर्णेऽपि देहे सुप्त्यादौ जीवतत्स्वरूपसुखकालतमोऽज्ञानं[३] विनाऽन्यज्ञानादर्शनात्[४] न देहान्वयित्वम् अनुभवस्येति[५] परिहरति – **नेत्यादिना** ॥

**(भा) न । सत्येवाविशेषे देहे सुप्त्यादौ ज्ञानादिविशेषादर्शनात् ।**

(टी) यस्तु मनस्यभिमानो 'अहं मनुष्यः' इति देहस्यैवात्मत्वे, स तस्यादेहत्वेऽपि समः, मम देह इति दर्शनादित्याह – **समश्चेति** ॥[६]

---

१. ननु च - पा.

२. प्राचीनटीकायां तु "वाय्वग्न्याख्यभूतद्वयापगमात्" इत्युक्तम् । – **भावरत्नकोशे**

प्राणादिवायूनां जाठरानलस्येन्द्रियाणां चापगमात् । – **प्र.दी.**

३. 'नात्मानं न परांश्चैव न सत्यं नापि चानृतम् । प्राज्ञः संवेदयेत् किञ्चिज्जीवकालतमो विना । सुप्त्यवस्थां सुखं चापि विना नान्यत् प्रदर्शयेत् । सर्वं तु दर्शयेन्मुक्तौ तुरीयः परमेश्वरः' इति प्रत्यये – **माण्डूकोपनिषद्भाष्यम् २/४**

४. विनान्यज्ज्ञानाद्यदर्शनात् – पा

५. अनुभवतीति – पा

६. 'अहं मनुष्यः' इत्यनुभवाद्देहात्मत्वं सिद्धमिति यदुक्तम्, तत्राह – समश्चेति ॥, यद्यभेदाभिमानाद्देहात्मैक्यं गृह्यते, तर्हि 'मम देहः' इत्यभिमानस्य तद्भेदेऽपि साम्यात् स

**(भा) समश्चाभिमानो मनसि ।**

(टी) दग्धे काष्ठादौ 'अहं दग्धः' इतिवदुपचारेणाहं मनुष्य इत्याद्यभिमानसम्भवाच्च न देह आत्मेत्याह – **काष्ठादिवच्चेति**[१]॥

**(भा) काष्ठादिवच्च ।**

(टी) एवं तावद्ध्रियमानेऽपि देह ईक्षणाद्यदर्शनादीक्षणस्य न देहान्वय इत्युक्तम् । इदानीं 'स सामभिरुन्नीयते ब्रह्मलोकम्'[२], 'स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते'[३] इत्यादिश्रुते ...[४] स्यापि आत्मन ईक्षणदर्शनात् यदैतद्देहाभावः तदेक्षणाभाव इति योऽयं व्यतिरेकः सोऽपि निरस्त इत्याह – **श्रुतेश्चेति**[५] ॥

**(भा) श्रुतेश्च ।**

(टी) एतेनैतदपि प्रत्युक्तम् । यदुतोच्यते[६] – भवत्पक्षे 'ममात्मा'

---

एव स्वीक्रियतामित्यर्थः । कथमनुभवे विकल्प इति शङ्कापनोदाय मनसि इत्युक्तम् । एकस्य मानसिकत्वाद्द्वैविध्यमित्यर्थः । – इति **पद्मनाभतीर्थाः ।**

१. प्राचीनटीकायां तु "यस्तु मनस्यहं (नरस्याहम् इति मुद्रितपाठः प्रामादिकः) मनुष्य इत्यभिमानो देहस्यात्मत्वे प्रागुपन्यस्तः स तस्यानात्मत्वेऽपि समः । मम देह इति दर्शनादित्याह – समश्चेति । दग्धे च काष्ठादावहं दग्ध(अदग्ध इति पाठः प्रामादिकः) इतिवदुपचारेणाहं मनुष्य इत्याद्यभिमानसम्भवाच्च न देह आत्मेत्याह – काष्ठादिवच्चेति ।" इति वाक्यद्वयमवतारितम् । **– भावरत्नकोशे**

**प्रमेयदीपिकायां** तु मनस अपि ईक्षितृत्वनिराकरणपरत्वेन भाष्यवाक्यमिदमवतारितम् ।

२. **षट्प्रश्नोपनिषत्** (५/५)

३. **षट्प्रश्नोपनिषत्** (५/५)

४. अत्र ग्रन्थपातः । 'देहान्निर्गतस्यापि' इति स्यात् ।

५. 'अस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके' इत्यादिश्रुतेश्च देहातिरिक्तो नित्य आत्मा सिद्धः । **– प्र.दी.**

६. **यदत्रोच्यते** – पा

इत्यात्मनीव[१] स्वाभिन्नेऽपि देहे 'मम देहः' इति षष्ठी किं न स्यात्? इति । विनाऽपि देहमीक्षणस्य उपपादितत्वादात्मनः, विनाऽऽत्मानं देहस्य तदनुपपत्तेः ।

ननु वेदाप्रामाण्यवादिनो लोकायतादीन्[२] प्रति कथं श्रुत्युद्भावनम्? इत्यत आह – **प्रामाण्यं च प्रत्यक्षादिवदिति ॥**

**(भा) प्रामाण्यं च प्रत्यक्षादिवत् ।**

**(टी)** यद्वा लोकायतस्यैव प्रस्तुतत्वात् प्रत्यक्षेष्वादिभूतं साक्षिप्रत्यक्षम्, तस्येव श्रुतेरपि प्रमाण्यं निरपेक्षत्वादित्यर्थः[३] ।

ननु वेदबौद्धादिवाक्ययोः परस्परविप्रतिपत्तेरन्यतरप्रामाण्ये विशेषहेत्वभावादुभयाप्रामाण्यमित्याशङ्क्य, अपौरुषेयत्वविशेषहेतोर्वेदप्रामाण्यमित्याह – **न चेति ॥**

**(भा) न च बौद्धादिवत्[४] । अपौरुषेयत्वात् ।**

**(टी)** शब्दाप्रमाण्यं वक्त्रज्ञानादिनैव । न च तदपौरुषेये वेद इत्याह – **न हीति[५] ॥**

---

१. इत्यात्मत्वेनैव – पा

२. आदिपदेन बौद्धादिः । तथा च **प्रमेयदीपिका** – 'ननु बौद्धचार्वाकादीन् प्रति देहातिरिक्तनित्यात्मसाधनमिदम् । न च ते श्रुतेः प्रामाण्यमङ्गीकुर्वते । तत्कथं श्रुत्युदाहरणम्? इत्यत आह – प्रामाण्यं चेति ॥ बौद्धेन तावत् प्रत्यक्षानुमानयोः, चार्वाकेण च प्रत्यक्षस्य प्रामाण्यमङ्गीकृतम् ।' इति ।

३. न श्रुतेः रुद्रादिस्मृतिसाम्यम् । किन्तु साक्षिप्रत्यक्षसाम्यमेव । निरपेक्षत्वात् ।
– इति **न्यायविवरणे** २/१/२

४. **'बौद्धादिवाक्यवत्'** – पा । 'बौद्धादिवत्' इति तु श्रीनिवासतीर्थसम्मतः । तत्त्वनिर्णयेऽपि 'लौकिकवाक्यवत्' इति प्रचलितपाठः 'लौकिकवत्' इति तु श्रीपद्मनाभतीर्थीयसम्मतः ।

५. शब्दे ह्यबोधकत्वादयो दोषाः । ते च वक्तृपुरुषाश्रिताज्ञानादिमूलाः । यस्य तु वक्ता

**(भा) नह्यपौरुषेये पौरुषेयाज्ञानादयः कल्पयितुं शक्याः ।**

(टी) ननु यद्वाक्यं तदनित्यमेव लोकवाक्यवदित्यत[1] आह – **विना चेति** ॥

**(भा) विना च कस्यचिद्वाक्यस्यापौरुषेयत्वं सर्वसमयाभिमतधर्माद्यसिद्धिः ।**

(टी) लोकायतेनानभ्युपगमात् न सर्वसमयाभिमतत्वं धर्मस्य? इत्यत आह – **यश्चेति** ॥

**(भा) यश्च तौ नाङ्गीकुरुते नासौ समयी । अप्रयोजकत्वात् ।**

(टी) धर्माद्यभावेन स्वसमये पुरुषान् प्रयोक्तुं न शक्नोतीत्यप्रयोजक इत्यर्थः[2]।

ननु न धर्म एव प्रयोजनम् । अपि तु लोकोपकारः । अतोऽसौ माऽस्तु, प्रत्यक्षैकप्रमाणवादिनं प्रति तन्निरूपणायोगादित्येतन्मनसि निधाय चोदयति – **माऽस्त्विति** ॥

**(भा) माऽस्तु धर्मोऽनिरूप्यत्वादिति चेत् ।**

---

पुरुष एव नास्ति तत्र कथं वक्तृपुरुषाश्रिताज्ञानादयो दोषमूलत्वेन कल्पयितुं शक्याः? व्याहतेरिति । – प्र.दी.

१. लोकवदित्यत – पा.

२. प्राचीनटीकायां तु ''धर्माधर्माभावेन समये पुरुषान् प्रयोजयितुं न शक्नोतीत्यप्रयोजकश्चार्वाकः'' इत्युक्तम् । – भावरत्नकोशे

प्रयुज्यते प्रवर्त्यते प्रणेता श्रोता च शास्त्रे याभ्यां ते प्रयोजके, विषयप्रयोजने । अविद्यमाने प्रयोजके यस्य शास्त्रस्य तत् तथा । अनन्यलभ्यं कमपि पुरुषार्थमधिकृत्य तत्साधनं तथाविधमर्थं प्रतिपादयन् वाक्यसमूहो हि शास्त्रम्, अन्यथाऽतिप्रसङ्गात् । न चातीन्द्रियस्याभावेऽन्यत् तथाभूतं शक्यनिरूपणम् । अतः शास्त्रत्वसिद्धये विषयादित्वेन धर्मादिकं किमप्यङ्गीकार्यमिति भावः । – प्र.दी.

(टी) न निरूपणमपेक्षते धर्मसद्भावः[१] । सर्वाभिमतत्वात् । अतस्तदभाव एव प्रमाणमपेक्षते । स च न प्रत्यक्षेण सिद्ध्यति । धर्मस्याप्रत्यक्षत्वात् । अतः प्रत्यक्षैकवादिनो धर्मापलापोऽपि न शक्य इति भावेन परिहरति – **नेत्यादिना** ॥

**(भा) न । सर्वाभिमतस्य प्रमाणं विना निषेद्धुमशक्यत्वात् ।**

(टी) ननु सर्वाभिमतेरपि मूलभूतप्रमाणं निरूपणीयमेव । वस्तुसिद्धेः प्रमाणाधीनत्वात् । तदभावस्तु प्रमाणाभावादेव सिद्ध्यतीति भावेन चोदयति – **न चेति** ॥

**(भा) न च सिद्धिरप्रमाणिकस्येति चेत् ।**

(टी) न च तन्मूलप्रमाणानुमानं सर्वाभिमत्या, अपि तु सैव प्रमाणमिति परिहरति – **नेत्यादिना** ॥

**(भा) न । सर्वाभिमतेरेव प्रमाणत्वात् ।**

(टी) न केवलं चक्षुरादिप्रत्यक्ष्यैकप्रमाणवादिनः परं प्रति धर्माभावोक्तिरयुक्ता । किन्तूक्तिरेवायुक्तेत्यभिप्रायेणाह – **अन्यथेति**[२] ॥

**(भा) अन्यथा सर्ववाचिकव्यवहारासिद्धेश्च ।**

---

१. धर्मसद्भावस्य – पा

२. प्राचीनटीकायां तु ''न केवलं प्रत्यक्षैकप्रमाणवादिनश्चार्वाकस्य धर्माद्यभावोक्तिरयुक्ता । किन्तूक्तिरेवायुक्तेत्यभिप्रायेणाह - अन्यथेति ॥'' इति चशब्दार्थ उक्तः ।

**– भावरत्नकोशे**

यद्यागमस्यानुमानस्य च न प्रामाण्यं स्यात्, तदा सर्वस्य वाचा निर्वर्त्यस्य व्यवहारस्यासिद्धिः स्यात् । परप्रत्यायनार्थो हि वाग्व्यवहारः । स यदि न परं प्रत्याययेत्, व्यर्थो न क्रियेतैवेति । चशब्दः प्रमाणसामान्यसिद्ध्या तद्विशेषसिद्धेः समुच्चये ।**– प्र.दी.**

(टी) 'त्वदुक्तं मया श्रुतम्' इत्यत्र न हि तव प्रत्यक्षमस्ति । अतो न वक्तव्यं त्वयेत्यभिप्रायेणाह – **न चेति** ॥

**(भा) न च मया श्रुतमिति तव ज्ञातुं शक्यम् ।**

(टी) न च प्रत्युत्तरान्यथानुपपत्त्या प्रत्यक्षैकप्रमाणवादिनस्तवैतत् ज्ञातुं शक्यम्[१] । अतः प्रत्युत्तरमपि तव निश्चायकं न स्यादित्याह – **अन्यथा चेति** ॥

**(भा) अन्यथा च[२] प्रत्युत्तरं स्यात् ।**

(टी) प्रत्यक्षेतरप्रमाणाभावादेव युष्मदस्मदुक्त्योरुक्तिप्रत्युक्तिरूपत्वं यत्प्रतीयते तत्रापि तव भ्रान्तिरस्तु संशयो वेत्याह – **भ्रान्तिर्वेति** ॥

**(भा) भ्रान्तिर्वा तव स्यात् ।**

(टी) तदेवं प्रत्यक्षैकप्रमाणवादिनः परं प्रत्युक्तेरेवासम्भवात्, धर्मादेः सर्वलौकिकपरीक्षकसम्मतत्वेन बलवत्प्रमाणोपन्यासं विनाऽभावोक्त्यसम्भवाच्च न धर्माद्यभावः ।

यच्चान्यत् ते मनसि वर्तते 'धर्माद्यभावोक्त्या[३] धनव्ययदेहायासादिपरिहारे सर्वसुखकारणत्वात् कथमहमप्रयोजकः स्वसमये पुरुषाणाम्?' इति, तत्राह – **सर्वदुःखकारणत्वं वेति** ॥

**(भा) सर्वदुःखकारणत्वं वा स्यात् ।**

(टी) धनव्ययादिपरिहारेण सुखकारणत्वं वा परस्परहिंसादिना दुःखकारणत्वं वाशब्दार्थः ।

---

१. एतज्ज्ञात्वैव शङ्क्यम् – पा

२. 'अन्यथा वा' प्रचलितपाठः । भावप्रदीपिकाप्रमेयदीपिकासम्मतश्च ।

३. धर्माभावोक्त्या – पा

ननु यो धर्माद्यभावोक्त्या सुखदुःखकारणं प्रबलदुर्बलयोस्तेनासौ स्वसमयप्रयोजक एव स्यात् । न काचिद्धानिस्तस्येत्यत आह – एको वेति ॥

(भा) एको वाऽन्यथा स्यात् ।

(टी) यो हि[१] धर्माद्यभावोक्त्या वध्यघातकनिमित्तत्वेन दुःखकारणं ययोस्तावुभावपि तं प्रत्यन्यथा स्याताम् । धर्माद्यभावात् । तयोर्मध्ये यस्य सुखकारणं स **एको वाऽन्यथा स्यात्** प्रतिकूलः स्यात् । घातकः स्यादित्यर्थः । तदेवं स्वजीवनविरुद्धोक्तिः[२] कथं बुद्धिमान् प्रतीयते[३] । तत् तु अनादरणीयमेव धर्माद्यभावमतम्[४] ।

नन्वस्तु नाम धर्मादिः । पौरुषेयवाक्येनैव तत्सिद्धिः किमिति न स्यात्? इति काणादाद्याः । तान् प्रत्याह – **रचितत्वे चेति** ॥

(भा) रचितत्वे च धर्मप्रमाणस्य कर्तुरज्ञानादिदोषशङ्का स्यात् ।

(टी) प्रत्यनुमानादिपराहतत्वेन सर्वज्ञत्वाद्यनुमानासम्भवात् । तस्याज्ञानादि-दोषाभावस्तद्वाक्येनैव वक्तव्या । तथा च सत्यन्योन्याश्रय इति भावेनाह – **न चादोषत्वमिति** ॥

(भा) न चादोषत्वं स्ववाक्येनैव सिद्ध्यति ।

---

१. स्वयं यो हि – पा

२. यस्य धर्माधर्मौ न स्तः तत्सिद्धान्ते किं प्रयोजनम् ? अतः स्वव्याहतेरेवोपेक्ष्यः ।
– ब्र.सू.भा. (२/२/६)

३. कथं बुद्धिमान् ? अबुद्धिमत् प्रतीयते – पा

४. ययोश्चार्वाक उपकारकोऽनुपकारकस्तावुभावपि चार्वाकं प्रत्यन्यथा स्याताम्, धर्माद्य-भावात् । यस्योपकारकस्तस्यान्यथाभावेऽपि य उपकारकः स एको वा चार्वाकं प्रत्यन्यथा प्रतिकूलो घातकः स्यात् । अतः स्वजीवनविरोधोक्तिरुपेक्ष्य एवेत्यर्थः – **भावप्रदीपिका**

(टी) तदेवं कर्तुरप्रसिद्धेः[१] स्वत एवापौरुषेयत्वसिद्धौ वेदस्य[२], नातिप्रसङ्ग इति भावेनाह – **नच येन केनचिदित्यादिना** ॥

**(भा) न च येन केनचिदपौरुषेयमित्युक्तमुक्तवाक्यसमम् । अनादिकाल-परिग्रहसिद्धत्वात् ।**

(टी) सिद्धे वाऽपौरुषेयत्वे दोषाभावात् प्रामाण्यसिद्धिरित्याह – **अत इति** ॥

**(भा) अतः प्रामाण्यं श्रुतेः ।**

(टी) सिद्धे च वेदप्रामाण्ये तेन देहव्यतिरिक्तात्मसिद्धेः[३] धीरो धीमान्[४] तत्र न मुह्यतीत्याह – **अतः कुतर्कैरिति** ॥

**(भा) अतः कुतर्कैः धीरस्तत्र न मुह्यति ।**

(टी) 'न त्वेव' इत्यादिश्लोकद्वयं प्रकारान्तरेणापि[५] व्याचष्टे[६] – **अथवेत्यादिना** ॥

**(भा) अथवा, जीवनाशं देहनाशं वाऽपेक्ष्य शोकः ? न तावत् जीव-नाशम् । नित्यत्वादित्याह – नत्वेवेति ॥ नापि देहनाशमित्याह– देहिन इति ॥ यथा कौमारादिदेहहानेन जरादिप्राप्तावशोकः, एवं जीर्णादिदेहहानेन देहान्तर-प्राप्तावपि ॥१३॥**

---

१. ०स्तत्कथनायोश्च .... – इत्यधिकं क्वचित् ।

२. अपौरुषेयत्वं च स्वत एव सिद्धम् । वेदकर्तुरप्रसिद्धेः । – विष्णुतत्त्वनिर्णये

३. देहातिरिक्तात्मसिद्धेः – पा

४. अतस्तैः कुतर्कैः धीरः धीमान् तत्र देहातिरिक्तनित्यात्मसद्भावविषये न मोहमापद्यते । – प्र.दी.

५. प्रकारान्तरेण – पा

६. अनेकार्था गीतेति दर्शयितुं श्लोकद्वयं प्रकारान्तरेण व्याचष्टे । – प्र.दी.

(टी) अस्मिन् पक्षे 'गतासून्' इत्यत्रापि गतासवो देहान्निर्गता भवन्त्यसवो येभ्य इति कृत्वा गतासवो जीवाः । न हि तेभ्यः असवो गच्छन्ति मृतावपि 'भागतोऽनुव्रजन्ति तम्'[१] इति वचनात् ॥१३॥

ननु बन्धूनां जरादिप्राप्तावपि पूर्वदेहदर्शनान्न शोकः, देहान्तरप्राप्तौ तु तददर्शनाच्छोक इत्याशङ्क्य, परिहारत्वेन[२] उत्तरश्लोकमवतारयति – **तथाऽपीत्यादिना** ॥

(भा) तथाऽपि तद्दर्शनाभावादिना शोक इति चेत्, नेत्याह – मात्रास्पर्शा इति ॥

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥१४॥**

(टी) तत्र तावत् पूर्वार्धं व्याचष्टे – **मीयन्त इत्यादिना** ॥

(भा) मीयन्त इति मात्राः विषयाः । तेषां स्पर्शाः सम्बन्धाः ।

(टी) तुशब्दार्थमाह – **एवेति** ॥

(भा) त एव हि शीतोष्णसुखदुःखदाः ।

(टी) अभिप्रायं कथयति – **देह इत्यादिना** ॥

(भा) देहे शीतोष्णादिसम्बन्धाद्धि शीतोष्णाद्यनुभव आत्मनः । ततश्च सुखदुःखे । न ह्यात्मनः स्वतः सुखदुःखादि सम्भवति ।

(टी) शीत उष्णः समशीतोष्णो वा[३] । एवं सुरूपः सुरसः सुगन्धः सुखरूपी परितो देह इति देहे साक्षाद्विषयसम्बन्धः, तदुपयोगिद्वारो वा ।

१. ब्रह्मसूत्रभाष्योदाहृतब्राह्मवचनम् (३/१/४)
२. इत्याशङ्कापरिहारत्वेन – पा
३. समशीतोष्णौ – पा

तत एव **शीतोष्णाद्यनुभव आत्मनः** । **ततः** तस्मादनुभवात् **सुखदुःखे** । न हि स्वप्नजाग्र-दुःखादिकमात्मनो जडदेहसम्बन्धविषयानुभवं विनेत्यर्थः ।

देह एव कुतो मात्रासंसर्गाः, आत्मनि किं न स्युः? इत्याशङ्कापरिहारत्वेनोत्तरपदं हेतुत्वेनावतारयति – **कुत इत्यादिना** ॥

**(भा) कुतः? आगमापायित्वात् ।**

(टी) 'आगमापायि'शब्दार्थं सूचयन्नेव तद्धेतुत्वं घटयति – **यदिति** ॥

**(भा) यद्यात्मनः स्वतः स्युः सुप्तावपि स्युः ।**

(टी) विषयसम्बन्धानामागमापयित्वकथनेन तेषां देहान्वयव्यतिरेक उक्तः । अतस्ते देहनिमित्ता एवेत्याह – **अतो यत इति** ॥

**(भा) अतो यतो मात्रास्पर्शा जाग्रदादावेव ते सन्ति नान्यदेति तदन्वयव्यतिरेकित्वात् तन्निमित्ता, एव नात्मनः स्वतः ।**

(टी) मा भूत् संसारिणः स्वतः शुभाशुभविषयसम्बन्धः । देहनिमित्तस्त्वङ्गीक्रियत एव । अतस्ताभ्यां सुखदुःखे स्यातामित्यत आह – **आत्मनश्चेति** ॥

**(भा) आत्मनश्च तैर्विषयविषयिभावसम्बन्धादन्यः सम्वन्धो नास्ति ।**

(टी) **अन्यः** तादात्म्यादिरित्यर्थः[१] ।

यदैवं विषयसम्बन्धानामागमापायित्वमेवात्मनि तेषां तादात्म्यादिभावं वारयति, किं पुनरनित्यत्वम्? इति भावेनोत्तरपदमवतारयति – **न चागमापायित्वेऽपीति** ॥

---

१. अन्यः साक्षात्सम्बन्धः । – **भावप्रदीपिका; प्रमेयदीपिकायां तु** – उपलक्षणं चैतत् । ईश्वराधीनं स्वामित्वमपि ग्राह्यम् । तादात्म्यसमवायनिरासे तात्पर्यात् ।

(भा) न चागमापायित्वेऽपि प्रवाहरूपेणापि नित्यत्वमस्ति । सुप्तिप्रलयादावभावादित्याह – अनित्या इति ।

(टी) यत एव देहदैहिकयोरेव शुभाशुभविषयसम्बन्धो नात्मनः । अतस्तत्रात्मीयत्वाभिमान एव सुखदुःखकारणमित्याह[१] – **अत आत्मन इति ॥**

**(भा) अत आत्मनो देहाद्यात्मभ्रम एव सुखदुःखकारणम् ।**

(टी) भ्रमशब्दोऽत्राभिमानपरो वर्णनीयः[२] । तथा च वक्ष्यति 'अतोऽभिमानं परित्यज्य' इति ।

यतः देहगेहबन्ध्वादावात्मीयत्वाभिमान[३] एव तद्वृद्धिह्रासादिना सुखदुःखकारणम् । अतस्तेष्वहंममेत्यभिमानहीनस्यैते सुखदुखे न भवत इत्याह – **अतस्तद्विमुक्तस्येति ॥**

**(भा) अतस्तद्विमुक्तस्य बन्धुमरणादिदुःखं न भवति ।**

(टी) यत एवं देहादावात्मीयत्वाभिमान[४] एव सुखदुःखादिकारणम्, यतश्च तद्विमुक्तस्यैते सुखदुःखे न स्याताम्, अतस्तत्रात्मीयत्वाभिमानं[५] परित्यज्य तान् देहादिगतशीतोष्णादीन् सहस्वेत्याह[६] – **अतोऽभिमानमिति ॥१४॥**

---

१. तथा च प्राचीनटीका ''देहादावात्मीयत्वेऽभिमान एव'' इति । – **भावरत्नकोशे**

२. ''अत्र भ्रमशब्दोऽभिमानपरो वर्णनीयः'' इति प्राचीनटीका । – **भावरत्नकोशे**

उक्तप्रकारेण देहादावात्मनो ममैवैतत् इत्यादिभ्रम एव । भ्रमसहिता एव मात्रास्पर्शा इत्यर्थः । – **प्र.दी.**

३. देहगेहसम्बन्धादावात्मात्मीयत्वाभिमान एव – पा

४. देहादावात्मात्मीयत्वाभिमान – पा

५. आत्मात्मीयत्वाभिमानम् - पा

६. 'तांस्तितिक्षस्व भारत' इति गीताभाष्यटीकायां 'तितिक्षस्व सहस्वेति व्याख्यातम् । तदसत्' इत्युक्तम् । तद्व्याख्यानरूपगीतातात्पर्ये 'तद्दर्शनादिनिमित्तं दुःखं सोढव्यम्'

(भा) अतोऽभिमानं परित्यज्य तान् शीतोष्णादीन् तितिक्षस्व ॥१४॥

(टी) एवं [1]तावद्देहादावहङ्कारादिपरित्यागेन तदन्तशीतोष्णादिसहनात्[2] तन्निमित्तदुःखाभावस्तात्कालिकः प्रयोजनमित्युक्तम् । अधुनैवंविधो दुःखाभावो न प्रयोजनमन्ततः । अपि तु साधयति च महत्फलं कैवल्याख्यमिति भावेनोत्तरं श्लोकमवतार्य व्याचष्टे – अतः प्रयोजनमित्यादिना ॥

(भा) अतः प्रयोजनमाह – यं हीति ॥

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥**

(भा) यमेते मात्रास्पर्शा न व्यथयन्ति । पुरिशयमेव सन्तम् । शरीरसम्बन्धाभावे सर्वेषामपि व्यथाभावात् पुरुषम् इति विशेषणम् ।

(टी) अतः अस्माद्दुःखाभावादित्यवगन्तव्यम् । 'यं न व्यथयन्ति सोऽमृतत्वाय' इत्यन्वयात् ।

ननु तन्वाभिमानाभावेनादुःखित्वं कथम्? विरिञ्चेतरेषां तन्वभिमानस्यापि भावात्[3] । तथाहि शक्तिविवेके –

---

इत्युक्तम् । सोढव्यमित्यस्य सहनीयमित्यर्थकत्वाद्विरोधः ॥ मैवम् । 'तान्' इत्यस्य मात्रास्पर्शविवक्षया सहस्वेति व्याख्यानस्य दूषितत्वात् । तेषां विफलीकरणस्यैव पूर्वोक्तवाक्ययोरुक्तत्वात् । विषयसम्बन्धस्य सहनयोग्यत्वाभावेन सहनासम्भवाच्च । तात्पर्ये दुःखविवक्षया सोढव्यमित्युक्तत्वात् । 'तान्' इत्यस्य शीतोष्णादीनित्यभिप्रेतत्वात् ॥
– इति गूढकर्तृके विरोधोद्धारे

१. तावद्देहाहङ्कारपरित्यागेन- पा ; २. तद्गतशीतो० - पा

३. एतदेव मनसि निधाय ''अत्र चतुर्मुखादन्येषां धैर्येणातिव्यथाराहित्यमेव । लिङ्गभङ्गात् प्राग्देहाद्यभिमानराहित्याभावात् । उक्तं च –
'ब्रह्मा निरभिमानित्वात् शरीर्यप्यशरीरवान् ।

'ब्रह्मा निरभिमानत्वात् शरीर्यप्यशरीरवान् ।
रुद्राद्यास्तन्वाभिमानात्[१] बहिरर्थयुजः तथा ॥'

इत्यभिप्रायेण पृच्छति – **कथमिति** ॥

**(भा) कथं न व्यथयन्ति?**

(टी) अस्त्वितरेषाम् ईषत्तन्वाभिमानात् दुःखित्वम् । तथाऽप्यतिव्यथाभावः समदुःखसुखानामिति[२] भावेनावान्तरपदमवतारयति – **समदुःखसुखत्वादिति** ॥

**(भा) समदुःखसुखत्वात् ।**

(टी) नन्वनुकूलप्रतिकूलयोः सुखदुःखयोः कथं पुंसः समत्वम्? इत्याशङ्क्य, तदुत्तरत्वेनोत्तरपदमवतारयति – **तदित्यादिना** ॥१४॥

**(भा) तत् कथम्? धैर्येण ॥१५॥**

(टी) चोदयति – **नित्य इत्यादिना** ॥

**(भा) नित्य आत्मेत्युक्तम् । किमात्मैव नित्य आहोस्विदन्यदपि? अन्यदपि । तत् किमिति[३]?**

(टी) अयं भावः – किमात्मैव नित्यः? अन्यदपि वा ? नाद्यः । कारणाभावेन[४] जगदुत्पत्त्याद्यभावप्रसङ्गात् । न च जीवात्मैव कारणम्,

---

रुद्राद्यास्तन्वभीमानाद्बहिरर्थयुजस्तथा ॥' '' – इत्याहुः **विद्याधिराजतीर्थश्रीचरणाः** । अत्र **नरहरितीर्थीये** ''ब्रह्मा निरभिमानित्वात्'' इति स्मृतिमुदाहृत्य चतुर्मुखादन्येषाम् अतिव्यथाराहित्यमेव । लिङ्गभङ्गात् प्राग्देहाद्यभिमानभावादित्युक्तम् ।

– इति **गीतार्थसङ्ग्रहे राघवेन्द्रतीर्थश्रीचरणाः** ।

१. 'तन्वभीमानात्' इति प्रचलितपाठः ।
२. **समुदुःखसुखीनामिति** – पा.
३. तत्किमित्यत आह – इति प्रचलितपाठः ।
४. **कारणाभावात्** – पा

परतन्त्रत्वात् । अतोऽन्यदपीति वक्तव्यम् । तत् किं चेतनम्? अचेतनं वा ? साचेतनचेतनं वा ? नाद्यः । तस्यापरिणामित्वात्[1] । न मध्यमः । सुतरां परतन्त्रत्वात् । नान्त्यः । उपादानत्वेनाचेतनाकाङ्क्षायां परतन्त्रत्वेन कुलालादिवदसर्वकर्तृत्वापत्तेरिति ।

'द्रव्यं कर्म च' इत्यादिना प्रकृतिसत्ताप्रवृत्त्यादीनां भगवदधीनत्वावगमात् तामुपादाय कर्तृत्वेऽपि न भगवतः सर्वकर्तृत्वहानिरिति भावेनोत्तरश्लोकमवतार्य परिहरति – **आहेति** ॥

**(भा)** आह - नासत इति ॥

**नासतो विद्यतेऽभावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥**

**(टी)** तद्व्याचष्टे[2] – **असत इत्यादिना** ॥

**(भा)** असतः **कारणस्य** सतः ब्रह्मणश्च अभावो न विद्यते ।

**(टी) कारणस्य** इत्युपादानत्वविवक्षया ।

प्रकृतिपुरुषयोरभावो न विद्यत इति प्रतिज्ञातार्थम् 'उभयोरपि' इत्यनेन साधयता, भगवता 'अपि'शब्देन तत्प्रतिज्ञातार्थस्य युक्त्यादिप्रसिद्धत्वं[3]

---

१. स्वस्यापरिणामित्वात् – पा.

२. तं व्याचष्टे – पा

३. अपिशब्दसमुचितप्रमाणमाह – प्रकृतिरिति ॥ – **भावप्रदीपिका**
'उभयोरपि' इत्यत्र अपिशब्दस्य यथाश्रुतान्वयं अभिप्रेत्य व्याख्यातमिदं भाष्यं **प्रमेयदीपिकायाम्** । अनूदिता च प्राचीनटीका – 'केचित् अपिशब्दस्य भिन्नक्रमत्वमङ्गीकृत्य तेन सूचितं प्रमाणं प्रागुदाहृतम् इति वर्णयन्ति' इति ।
'अपिशब्दस्य तत्वदर्शिभिरित्यनेन सम्बन्धः । प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम इत्यादिवाक्येन समुच्चीयते' इति विद्याधिराजतीर्थाः ।

सूचितम् । तत्र तावत् जगदुत्पत्त्यन्यथानुपपत्तियुक्तिसिद्धत्वं[१] **किमात्मैव नित्यः** इत्याद्याशङ्काभाष्येणैवार्थादुक्तम् । अधुनैतत्प्रतिज्ञातार्थमागमसिद्धोऽपीत याह – **प्रकृतिः पुरुषश्चैवेति** ॥

**(भा) 'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम' । इति वचनात् श्रीविष्णुपुराणे । पृथक् विद्यत इत्यादरार्थः ।**

---

'अपि हि पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु इति सूत्रे अपि सिञ्च अपि स्तुहि इत्युदाहरणे सिञ्च च स्तुहि च इत्यर्थ इत्यङ्गीकारादत्रापि अपि दृष्ट इत्यस्य दृष्टश्चेत्यर्थाङ्गीकारे यथाश्रुतक्रमो न दोषमावहति इति स्वाभिप्रायः ।'
– इति **उमर्जि कृष्णाचार्याः प्रमेयदीपिका टिप्पण्याम्** ।

नरहरितीर्थास्तु तत्त्वदर्शिभिरपीत्यपिपदं भिन्नक्रममुपेत्य "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम" इत्यागमोऽत्रार्थे मानत्वेन समुच्चीयत इत्याहुः ।
– इति **गीताविवृत्तौ राघवेन्द्रतीर्थीये** ।

तथा च **नरहरितीर्थभट्टारकाः** "प्रकृतिपुरुषयोरभावो न विद्यत इति प्रतिज्ञातार्थमुभयोरपीत्यनेन साधयता भगवताऽपिशब्देन स्वप्रतिज्ञातार्थस्य युक्त्यादिसिद्धत्वं सूचितम् । तत्र तावज्जगत्कारणत्वान्यथानुपपत्तिरूपयुक्तिसिद्धत्वं किमात्मैव नित्य इत्यादिशङ्काभाष्येणैवार्थादुक्तम् । अधुनैष प्रतिज्ञातार्थ आगमसिद्धोऽपीत्याह – प्रकृतिः पुरुषश्चैवेति । उत्तरार्धयोजनां सूचयति सम्प्रदायतश्च इत्युत्तरभाष्येण । न केवलमुक्तयुक्त्यागमसिद्धोऽनयोरुभयोर्निर्णयः किन्तु तत्त्वदर्शिभिरपि दृष्ट इति भावः" इति । न केवलं प्रकृतिपुरुषयोरन्यतरस्यैव । किन्तु तयोरुभयोरप्यनादिनित्यत्वनिर्णयो दृष्ट इति यथाश्रुतान्वयपक्षे पृथग्विद्यते इति भाष्यरीत्या अनुमानमूलभूतव्याप्तावादरः सूचितो भवति । सदसतोः पृथगुभयत्र साध्यसाधनत्ववचनेनेवात्र पृथगुभयत्र प्रमाणदर्शनेनाप्यादरसूचनसम्भवात् । सति चैवं भिन्नक्रमत्वाश्रयणं नातीव मनोहरमित्यनुशयं सूचयितुं केचिदित्युक्तम् । अत एव प्राक्टीकायामुभयोरपीति यथाश्रुतप्रतीक एव गृहीतः ।
– **भावरत्नकोशे**

'तर्ह्येतद्व्याख्यानसमयेत्रैवाप्यपिशब्दसूचितप्रमाणस्य वक्तव्यतया आदौ तत्कथनम् असङ्गतमित्यस्वरसः केचिदित्यनेन सूचितो द्रष्टव्यः' इति **वेणुपल्लीटिप्पण्याम्** ।

**१. जगत्कारणान्यथानुपपत्ति – पा**

(टी) तथा ह्युत्तरार्धस्य योजनां सूचयति **सम्प्रदायतश्चेत्युत्तरभाष्येण** । न केवलं युक्त्यागमसिद्धोऽनयोरुभयोर्निर्णयः । किन्तु तत्त्वदर्शिभिरपि दृष्ट इति भावः । 'असतः' इत्येतत्कारणस्येति व्याख्यातम् । कथं कारणस्यासच्छब्द-वाच्यता? इत्याकाङ्क्षायां श्रुतिपुराणयोः प्रयोगादव्यक्तत्वयुक्तेश्चेत्याह – **असतः कारणत्वमित्यादिना** ॥१६॥

(भा) **असतः कारणत्वं च 'सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः'** – **इति श्रीभागवते**[१] **। 'असतः सदजायत'**[२] **इति च । अव्यक्तेश्च । सम्प्रदायतश्चैतत् सिद्धमित्याह** – उभयोरपीति । अन्तो **निर्णयः** ॥१६॥

(टी) यदेतत्सूचितं प्रकृत्यादिनित्यत्वमागमादपि सिद्धमिति, तदागमविशेषस्य नित्यत्व एव घटते, नान्यथेति भावेनोत्तरश्लोकमवतार्य व्याचष्टे – **किं बहुनेत्यादिना** ॥

(भा) **किं बहुना ? यद्देशतोऽनन्तं तन्नित्यमेव वेदाद्यन्यदपीत्याह** – अविनाशीति ॥

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ॥१७॥**

(टी) युगपदनेकदेशेष्वभिधीयमानप्रत्यभिज्ञयैकत्वावगतेर्देशतोऽनन्तत्वं वेदस्य । देशतोऽनन्तत्वं ह्यनन्तदेशवर्तित्वम् । अतस्तन्न्यायेन देशस्यापि नित्यत्वमिति, **आदिशब्देन** देशः । कालश्च, तस्यापि सर्वगतत्वात्[३] ।

---

१. १/२/३१
२. ऋग्वेदे १०/७२/२
३. वेदशब्देन वर्णा गृह्यन्ते । आदिपदेनाकाशादयः । एतेषां च प्रत्यभिज्ञादिना नित्यत्व-सिद्धिः । – प्र.दी.

शापेन युगभेदेन वा विस्मरणादिरेव वेदस्य, न नाश इत्याह – **नापीति ॥**

(भा) **नापि शापादिना विनाश इत्याह** – विनाशमिति ॥

(टी) न केवलमविनाशः, किन्तु ह्रासोऽपि नास्तीत्याह – **अव्ययं चेति** ॥१७॥

(भा) अव्ययं च तत् ॥१७॥

(टी) ननु प्रतिबिम्बत्वात् जीवस्य, तन्नित्यत्वे तदुपाधेर्देहस्यापि कस्यचित् नित्यत्वं स्यादित्याशङ्कापरिहारायोत्तरश्लोकमवतारयति – **भवत्विति ॥**

(भा) भवतु देहस्यापि कस्यचिन्नित्यत्वमिति । नेत्याह – अन्तवन्त इति ॥

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युद्ध्यस्व भारत ॥१८॥**

(टी) नन्वादर्शाद्युपाधिनाशात् तदनतिभिन्नप्रतिबिम्बनाशवत् देहाख्योपाधिनाशात् जीवनाशोऽस्तीत्याशङ्कापरिहारायावान्तरपदमवतारयति – **अस्त्विति ॥**

(भा) **अस्तु तर्हि दर्पणनाशात् प्रतिबिम्बनाशवदात्मनाश इत्यत आह** – नित्यस्येति ॥

(टी) देहनाशेऽपि प्रतिबिम्बरूपात्मनित्यत्वमङ्गीकुर्वतां देहातिरिक्तात्मोपाधिरस्तीत्यभिप्रायः ।

नित्यस्यानित्यदेहत्वं जीवस्यैव नेश्वरस्येत्येतत् शरीरिण इति विशेषणाल्लब्धमित्याह – **शरीरिण इतीति ॥**

(भा) शरीरिणः इतीश्वरव्यावृत्तये ।

(टी) ननु सत्यप्यादर्शाद्युपाधौ क्वचित् तद्गतप्रतिबिम्बस्य नैमित्तिकनाशवत्, जीवोपाधौ च सति नैमित्तिको जीवनाशः किं न स्यात्? इत्याशङ्कापरिहारायोत्तरं पदमवतारयति – न चेति ॥

(भा) न च नैमित्तिक इत्याह – अनाशिन इति ॥

(टी) प्रतिज्ञातो नैमित्तिकनाशाभावो कुतः इति हेत्वाकाङ्क्षां कृत्वोत्तरपदं हेतुत्वेनावतारयति – अप्रमेयेश्वरसरूपत्वादिति ॥

(भा) कुतः? अप्रमेयेश्वरसरूपत्वात् ।

(टी) सति चोपाधौ समाशङ्क्यमानो नैमित्तिकः प्रतिबिम्बनाशः, उपाधेर्बिम्बसन्निधिनाशनिमित्त एव । न चासौ नित्यसर्वगतेश्वरप्रतिबिम्बस्य जीवस्येति भावः[१] । स्थिरोपाधिकप्रतिबिम्बनाशे बिम्बसन्निधिनाशं विना न निमित्तान्तरं शङ्कनीयमित्याह – न हीति ॥

(भा) नह्युपाधिबिम्बसान्निध्यनाशे प्रतिबिम्बनाशः, सति च प्रदर्शके ।

(टी) सति च प्रदर्शके आदर्शे प्रतिबिम्बनाशः उपाधेर्बिम्बसन्निधिनाशेन हीत्यर्थः ।

ननु जीवस्य तत्प्रदर्शकस्योपाधेश्च नित्यत्वकल्पने कल्पनागौरवं स्यादित्यत आह – स्वयमेवेति ॥

---

१. उपाधिनाशेन नाशाभावेऽपि उपाधिबिम्बसन्निधिनाशान्निमित्तात् प्रतिबिम्बस्यात्मनो नाशो भविष्यति । न चासिद्धिः शङ्क्या । परिच्छिन्नस्यैव प्रतिबिम्बसम्भवेन सन्निधिनाशध्रौव्यादिति पुनः प्रतिपक्षिते तत्प्रतिषेधायेदमिति भावः ...... स चाप्रमेयः सर्वगत इति कथं तस्योपाधिसन्निधिनाश इति । – प्र.दी.

**(भा) स्वयमेवात्र प्रदर्शकः । चित्त्वात् ।**

**(टी)** चेतनत्वाज्जीवस्य न जडस्तदुपाधिः[१] । यावदुपाधिभाविनः प्रतिबिम्बस्य[२] ततो [३]भेदानिरूपणात्, चिज्जडयोरेकत्वायोगादिति भावः[४] । तथा ह्यन्यत्र –

'उपाधेश्चैव नित्यत्वान्नैव जीवो विनश्यति ।
स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पना'[५] इति ।

ननु मुक्तावुपाधिविलयात् कथं तस्य जीवस्वरूपत्वम्? इत्यत आह – **नित्यश्चेति**[६] ॥

**(भा) नित्यश्चोपाधिः कश्चिदस्ति ।**

**(टी)** नित्यश्च अनित्यश्च जीवोपाधिः । तत्रानित्यस्यैव नाशो मुक्तौ नित्यस्यावशेष इति भावः[७] ।

तत्र प्रमाणमाह – **प्रतिपत्ताविति** ॥

**(भा) 'प्रतिपत्तौ विमोक्षस्य नित्योपाध्या स्वरूपया ।
चिद्रूपया युतो जीवः केशवप्रतिबिम्बकः ॥' – इति भगवद्वचनात् ॥**

---

१. विलक्षणत्वादिति भावः । – **भावप्रदीपिका**

२. **बिम्बप्रतिबिम्बस्य** - पा

३. **भेदाभेदनिरूपणात्** – पा

४. लोकेऽदृष्टमिदं कथमङ्गीकार्यमित्यत आह – चित्त्वादिति । जडेष्वयावद्वस्तुभावित्वात् सर्वत्र भेदाभेदौ । चित्स्वरूपे तु यावद्वस्तुभावित्वादभेद एवेति भावः । – **प्र.दी.**

५. **भागवततात्पर्यम्** - १/१२/५५

६. स्वस्यैवोपाधित्वे मुक्तावात्मनिवृत्तिः स्यात् । उपाधिनिवृत्तिलक्षणत्वान्मुक्तेरित्यत आह – नित्यश्चेति । – **प्र.दी.**

७. द्विविध उपाधिरात्मनः । नित्योऽनित्यश्च । तत्र नित्यस्यावस्थानम्, अन्यस्य निवृत्तिर्मुक्ताविति । – **प्र.दी.**

(टी) स्कान्दे च –

'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव च ।
बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु स्थितिः ॥'
सर्वोपाधिविनाशे हि प्रतिबिम्बः कथं भवेत् ।
कथं चात्मविनाशाय प्रयत्नः सेत्स्यति क्वचित् ।
अपुमर्थता च मुक्तेः स्यादभावात् पुंस एव तु ॥'[१] इति ॥१८॥

तर्हि वध्यघातकभावव्यवहारस्य का गतिः? इत्यत आह – **व्यवहारस्त्विति** ॥

(भा) व्यवहारस्तु भ्रान्त इत्याह – य एनमिति ॥

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥**

(भा) कुतः? उक्तहेतुभ्यो नायं हन्ति न हन्यते ।

(टी) अप्रमेयेश्वरप्रतिबिम्बत्वम्, नित्योपाधिकत्वम्, 'नित्यो नित्यानाम्'[२] इत्यादिवेदान्तप्रसिद्धेश्च – इत्युक्तहेतवः[३] ।

ननु भवतु नामाहन्यमानत्वमात्मस्वरूपस्योक्तहेतुभ्यः । अत एव न हन्तृत्वं कस्यचित् । अतस्तद्व्यवहारस्य भ्रान्तत्वम् । तथाऽपि देहवियोजनाख्यं हन्तृत्वं जीवस्यापि स्यात् । तदभावे प्रायश्चित्तोक्त्यादिविरोधादित्यत आह – **न हीति** ॥

---

१. भागवततात्पर्यम् ४/२२/२६
२. काठकोपनिषत् २/२/१
३. ननु नित्यत्वे बिम्बनित्यत्वादयो हेतव उक्ताः । अस्वातन्त्र्ये तु न कोऽपि । तत्कथमुक्तहेतुभ्य इत्युक्तमिति चेन्न । प्रतिबिम्बत्वस्योक्तत्वात् । – प्र.दी.

(भा) न हि प्रतिबिम्बस्य क्रिया । स हि बिम्बक्रिययैव क्रियावान् ।

(टी) प्रतिबिम्बत्वाद्देहवियोजनेऽपि न स्वतः कर्तृत्वं जीवस्य, किन्तु बिम्बाधीनत्वेन । अतो न प्रायश्चित्तादिविरोध इति भावः ।

(भा) 'ध्यायतीव'[१] इति श्रुतेश्च ॥१९॥

(टी) ध्यायतीवेति ॥ इवशब्दात् न स्वतन्त्रं ध्यानादिकर्तृत्वं जीवस्य[२] ॥ 'न त्वेवाहम्' इत्यादिना यत्प्रतिज्ञातं जीवस्य नित्यत्वमीश्वरनित्यत्वदृष्टान्तेन, तदेव 'अन्तवन्त' इत्यादिना समुत्थितम् – प्रतिबिम्बत्वाज्जीवस्य, उपाधिनाशात् बिम्बसन्निधिनाशाद्वा नाश इत्याशङ्क्य, नित्योपाधिकत्वान्नित्यसर्वगतेश्वरप्रतिबिम्बत्वादिति । अधुनैतदेव दृढीकर्तुमुदाहृतं मन्त्रवर्णमवतारयति – **अत्रेति** ॥

(भा) अत्र [३]**मन्त्रवर्णोऽप्यस्तीत्याह** – न जायत इति ॥

**न जायते म्रियते वा कदाचि न्नाऽयं भूत्वा भविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥२०॥**

(टी) अयं भावः – 'ना' संसारी स्वरूपेण 'न जायते' । देहवियोगेऽपि साकल्येन प्राणवियोगाभावात् 'न म्रियते' इत्युच्यते । 'प्राणा भागतस्त्वेनमनुगच्छन्ति सर्वदा'[४] इति वचनात् । ज्ञानिजीवस्यातोऽपि विशेषः ।

---

१. बृहदारण्यकोपनिषत् ४/३/७
२. ईश्वरो जीवं ध्याययतीत्यर्थः । इवशब्दोऽल्पार्थे । – प्र.दी.
३. न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमानेऽपि देहे ।
– इति काठकोपनिषत् १/६/४
४. ब्रह्माण्डे च –
मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च ।
भागतो भागतस्त्वेनमनुगच्छन्ति सर्वशः ॥ इति' – ब्र.सू.भा. ३/१/४

तथा हि काठकोपनिषद्भाष्ये[१] 'विपश्चितस्तु देहसम्बन्धाभावात् न जायते न म्रियते वा' इति[२] ।

न चोत्पत्तिनाशमात्रेणेश्वरज्ञानवदयं पूर्वं सम्पूर्ण एव सन् भविता देहसंयोगत एव । जन्यज्ञानादिबहुपरतन्त्रविशेषलाभादिति भावेनावान्तरपदमव-तारयति – न चेति ॥[३]

**(भा) न चेश्वरज्ञानवद्भूत्वा भविता ।**

(टी) ईशज्ञानं तु 'देशतः' इत्यादिनाऽविलुप्तत्वेन प्रतीयमानत्वात्, 'तदैक्षत' इति तस्य भवनोक्तावपि पूर्वं सम्पूर्णमेव सम्भूत इत्युच्यत इत्याह – **तद्धीति ॥**

**(भा) तद्धि 'तदैक्षत'[४] 'देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः । अविलुप्तावबोधात्मा'[५] इत्यादि श्रुतिस्मृतिसिद्धम् ।**

---

१. 'देहोत्पत्तिविनाशाख्यौ ज्ञानिनोऽप्युद्भवाभवौ ।
न कुतश्चिद्यतो विष्णुर्जायतेऽतस्तदीक्षणात् ।
भावाभावौ न विदुषो यस्माज्जीवो न कश्चन ।
जायते म्रियते वाऽपि स्वरूपेण कथञ्चन ।
अजो नित्योऽविकारश्च जीवः पुरमणन्नपि ।' इति च ।

अयं भगवान् कुतोऽपि न बभूव यस्मात् अतस्तद्वेत्ताऽपि विपश्चिन्न जायते न म्रियते च । यतः कश्चिज्जीवः स्वतो न बभूव देहसम्बन्धाद्धि जायते । विपश्चितस्तु देहसम्बन्धाभावान्न जायते न म्रियते च – इति **तद्भाष्ये ।**

२. एतदनुसारेण **विद्याधिराजतीर्था** अपि –' ज्ञानी च देहेनापि न जायते न म्रियते च । अभिमानाभावेन देहसम्बन्धाभावात् ।' इति ।

३. ननु जीवः स्वरूपेण भूत्वा देहसम्बन्धेन भवितैव । तत्कथमुच्यते भूत्वा भविता नेति? इत्यतोऽन्यथा व्याचष्टे – न चेति ॥ **– प्र.दी.**

४. **छान्दोग्योपनिषत्** ६/२/३

५. **भागवते** ३/७/५

(टी) उत्पत्तिनाशाभावश्चोक्तो[१] जीवस्य । तदुभयं पृच्छति – **कुत** इति ॥

(भा) **कुतः?**

(टी) तथाविधेशप्रतिबिम्बत्वम् उत्पत्तिनाशाभावः । प्रतिबिम्बत्वादेव न बिम्बसर्वसाम्यमिति भावेनोत्तरार्धमवतार्य परिहरति – **अजादीति** ॥

(भा) **अजादिलक्षणेश्वरसरूपत्वात्** । शाश्वतः **सदैकरूपः** । **पुरं देहमणतीति** पुराणः ।

(टी) स्वरूपेण सदैकरूपोऽपि देहाद्देहान्तरं याति ।

एवमप्यौषधात् कलहदाहवत्(?) देहनाशेऽपि न नश्यत्यात्मेत्याह – **तथाऽपीति** ॥२०॥

(भा) तथाऽपि न हन्यते हन्यमानेऽपि देहे ॥२०॥

(टी) यस्यात्मनित्यत्वं नित्येश्वरप्रतिबिम्बरूपत्वं[२] निश्चितं न तस्यात्मनि वध्यघातकभ्रम[३] इति भावेनोत्तरं श्लोकं व्याचष्टे – **अत इति** ॥

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥२१॥**

(भा) अतो य एवं वेद स कथं कं घातयति हन्ति वा ? अविनाशिनं **नैमित्तिकनाशरहितम्** । नित्यं **स्वाभाविकनाशरहितम्** । **अथवा**, अविनाशिनं **दोषयोगरहितम्**, नित्यं **सदाभाविनम्** इति **सर्वत्र विवेकः** । **दोषयुक्तपुरुषादिषु नष्टशब्दप्रयोगात्** ॥२१॥

---

१. 'तथाविधेशप्रतिबिम्बत्वम्, उत्पत्तिनाशाभावश्चोक्तो' इति स्यात् । उत्तरवाक्ये तथा वक्ष्यमाणत्वात् । 'तदुभयम्' इत्यस्यानन्वितत्वाच्च ।

२. नित्येशप्रतिबिम्बत्वम् – पा

३. वध्यघातकभावः – पा

(टी) नित्येशप्रतिबिम्बत्वान्न हन्यते[१] । अत एव [२]पारतन्त्र्यान्नाहमस्मीति भावस्तस्येति भावः ।

दोषयोगराहित्याभिधानस्यायं प्रकृतोपयोगः । यथा भीष्मद्रोणादिचैतन्यानां नित्यत्वान्न त्वया हननं घातनं वा । तद्वत् तेषामदोषयोगित्वात् न त्वया दोषयोगः क्रियते कार्यते वेति[३] ॥२१॥

आत्मनो देहे व्याप्तत्वात् प्रायः प्राणिनां व्यवहारापाटवात्[४] भेदज्ञानेऽपि तयोरङ्गारवह्निवदविविक्तव्यवहारो भवतीति दृष्टान्तमुखेनापि तद्विवेकमनुभवरूपं[५] दृढीकरोतीत्याह – देहेति ॥२२॥

(भा) देहात्मविवेकानुभवार्थं दृष्टान्तमाह – वासांसीति ॥२२॥

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥२२**

(टी) ननु नैमित्तिकनाशस्यापि निरस्तत्वात् किमुत्तरश्लोकेनेत्यत आह – स्वत इति ॥२३॥

(भा) **स्वतः प्रायो निमित्तैश्चाविनाशिनोऽपि केनचिन्निमित्तविशेषेण स्यात्,**

---

१. व्याहन्येत – पा ।

२. पारतन्त्र्यान्नाहंतास्मीति – पा

३. एतदनुसारेण श्रीविद्याधिराजतीर्थाश्च ''यथा भीष्मादिचेतनानां नित्यत्वान्न त्वया हननं घातनं वा क्रियते तद्वत् तेषामदोषयोगित्वात् न त्वया दोषयोगः क्रियते कार्यते च'' इति ।

४. व्याप्तत्वादात्मनो देहे व्यवहारेष्वपाटवात् ।
भेदज्ञानेऽपि चाङ्गारवह्निवत् स्वाविविक्तवत् ।
भवन्ति व्यवहाराश्च नहि प्रत्यक्षगानपि ।
अर्थान्यथानुभवतः प्रतिपादयितुं क्षमाः । – अनुव्याख्याने ३/२/७०,७१

५. अनुभवारूढं करोति – पा

ककच्छेदवत्[१], इत्यतो विशेषनिमित्तानि निषेधति – नैनमिति ॥२३॥

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२३॥**

(टी) ननु 'नैनं छिन्दन्ति' इति छेदनादेः वर्तमानत्वमेव निषिध्यते । अतः स्यादुत्तरत्र । विशेषप्रतिषेधस्य विशेषाभ्यनुज्ञानविषयत्वादित्याशङ्क्य, परिहारत्वेनोत्तरश्लोकमवतारयति – **वर्तमाननिषेधादिति** ॥

(भा) **वर्तमाननिषेधात् स्यादुत्तरत्रेत्यत** आह – अच्छेद्य इति ॥

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**

(टी) ननु 'अच्छेद्यः' इत्यादि छेदनाद्ययोग्यत्वोक्त्या छेदनाद्यभावस्य सर्वकालीनत्वावगतेः 'नैनम्' इत्यादि वर्तमानछेदनादिप्रतिषेधेन किम्? इत्यत आह – **वर्तमानादर्शनादिति** ॥

(भा) **वर्तमानादर्शनाद्युक्तमयोग्यत्वमिति सूचयति वर्तमानापदेशेन** ।

(टी) नन्विदानीमच्छिद्यमानस्यापि कालान्तरे छेदादिदर्शनात् कुतः छेदाद्ययोग्यत्वम्? इत्याक्षिप्य तत्समाधानत्वेनोत्तरार्धमवतारयति[२] – **कुत इत्यादिना** ॥

(भा) **कुतोऽयोग्यता? नित्यसर्वगतादिविशेषणेश्वरसरूपत्वात्** ।

**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥२४॥**

(टी) नित्यं सर्वेषु शस्त्रपावकाम्बुवाय्वादिषु स्थितो नित्यसर्वगतः[३] । न तु

---

१. ककच्छेदः दक्षशिरच्छेदः । – **भावप्रदीपिका**

२. वर्णयति – पा

३. एतदनुसारेण 'पुनरुक्तिप्रसङ्गात् सामर्थ्याद्भिन्नपदोपात्तमपि नित्यत्वं सर्वगतत्वविशेषणं

नित्यश्चासौ सर्वगतश्चेति । तथा सति पुनरुक्तिः स्यादिति वक्ष्यति – **नित्यत्वं सर्वगतत्वविशेषणमित्यादि** ॥ [1]न ह्याकाशवत् सदा शस्त्रादिस्थो विष्णुस्तच्छेदनाद्यर्हति । काष्ठादिस्तु न सदा पावकादिस्थः । अतस्तैर्दाहाद्याप्नोति । नित्यसर्वगतत्वं [2]हीशस्यैवाच्छेद्यत्वादिप्रदर्शकम् । जीवस्य[3] तत्प्रतिबिम्बत्वादेवाच्छेद्यत्वादि ।

विद्यमानस्यैव हानिवृद्धिरहितत्वेन सदैकरूपावस्थानमात्रं 'शाश्वत'-शब्दोक्तम् । 'स्थाणुत्व'शब्दोक्तं तु शस्त्राग्न्यादिनिमित्तमप्यन्यथात्वं नेत्यतो न पुनरुक्तमित्याह – **शाश्वत इतीति** ॥

(भा) शाश्वतः इत्येकरूपत्वमात्रमुक्तम् । **स्थाणुशब्देन नैमित्तिकमन्यथात्वं निवारयति । नित्यत्वं सर्वगतत्वविशेषणम् । अन्यथा पुनरुक्तेः** ।

(टी) ननु 'अप्रमेयस्य' इत्यनेनैव बिम्बप्रतिबिम्बसारूप्यस्योक्तत्वात् किमिति पुनः 'नित्यः सर्वगतः' इत्यादिनोच्यते? इत्यत आह – **ऐक्योक्ताविति** ॥

(भा) **ऐक्योक्तावप्यनुक्तविशेषणोपादानान्नेश्वरैक्ये पुनरुक्तिः** ।

(टी) ऐक्यं सारूप्यम्[4] । अनुक्तविशेषणं स्थाणुत्वादि ।

---

नित्यं सर्वेषु शस्त्रपावकादिषु स्थितः सर्वगतः' इति श्रीविद्याधिराजतीर्थभट्टोपाध्यायाः ।

१. नत्वाकाशवत् – पा

२. त्वीशस्य – पा

३. जीवस्य तु – पा

४. तथा च प्राचीनटीका ''ऐक्यं सारूप्यमि''ति । – **भावरत्नकोशे**

ऐक्यमत्र गौणं विवक्षितम् । विशेषणभेदाद्विशिष्टभेद इति भावः । नन्वेतदपि नास्ति । शाश्वत इत्युक्तस्यैव स्थाणुशब्देन ग्रहणादित्याशङ्कानिरासाय शाश्वत इत्येकरूपत्वमात्रमित्यादिकः प्राचीनो ग्रन्थः । – **प्र.दी.**

ननु प्रतिबिम्बे बिम्बधर्मसाकल्यादर्शनात् स्थाणुत्वाद्यपि न स्यात् । न चेत् सर्वगतत्वाद्यपि स्यात् । अतः सारूप्यमात्रस्य पूर्वमेवोक्तत्वात् पुनरुक्तिस्त- दवस्थेत्यत आह – युक्ता इति ॥

**(भा) युक्ताश्च विम्वधर्माः प्रतिविम्वेऽविरोधे ।**

(टी) मा भूत् बिम्बधर्मसाकल्यं प्रतिबिम्बे । तथाऽप्यविरुद्धधर्मान्तर-स्वीकाराय पुनरुक्तिरित्यदोषः ।

ननु वादिविप्रतिपत्तेः प्रतिबिम्बतैव कुतो जीवस्य? इत्यत आह – तत्तेति ॥

**(भा) तत्ता च 'रूपं रूपं प्रतिरूपो वभूव'[१], 'आभास एव च'[२] इत्यादिश्रुतिस्मृतिसिद्धा ।**

(टी) भगवतो रूपं प्रति जीवाख्यः प्रतिबिम्बो बभूवेति 'सदेव सोम्येदमग्र आसीत्'[३] इतिवदनादित्वार्थे ।

ननु 'अंशो नानाव्यपदेशात्'[४] 'ममैवांशः'[५] इत्यादावंशत्वोक्तेर्जीवस्य न प्रतिबिम्बतेत्यत आह – न चेति ॥

**(भा) नचांशत्वविरोधः । तस्यैवांशत्वात् ।**

(टी) प्रतिबिम्बस्यैव जीवस्य भगवदेकांशत्वात् नांशत्वविरोध इति भावः ।

---

१. कठोपनिषत् २/२/९,१०
२. ब्र.सू. २/३/५०
३. छान्दोग्योपनिषत् ६/२/१
४. ब्र.सू. २/३/४३
५. गी. १५/७

ननु देहांशस्य हस्तादेर्न देहावयवसाकल्यम् । देहप्रतिबिम्बस्य तु तत्साकल्यात् नांशतेत्यत आह – **न चैकरूपेति** ॥

**(भा) नचैकरूपैवांशता ।**

(टी) न चास्माभिः प्रतिबिम्बस्यांशत्वं कल्प्यते । येनेतरांशत्ववैरूप्याद्विरुद्ध्येत । किन्तु वचनादेवाङ्गीक्रियत इत्याह – **प्रमाणं चेति** ॥

**(भा) प्रमाणं चोभयविधवचनमेव ।**

(टी) ननु भगवदंशानां ब्रह्मादीनां [१]भगवत्प्रतिबिम्बत्ववदिन्द्राद्यंशानां गाध्यादीनामपि तत्तत्प्रतिबिम्बत्वं कल्प्यताम् । अविशेषादित्यत आह – **न चेति** ॥

**(भा) न चांशस्य प्रतिबिम्बत्वं कल्प्यम् । गाध्यादिष्वप्यंशबाहुल्यदृष्टेः ।**

(टी) गाध्यादिषु जीवांशेषु केषाञ्चिदंशानां [२]नरवानराद्याकारवैचित्र्यदर्शनात् न तेषां प्रतिबिम्बत्वम् । न ह्येकवस्तुप्रतिबिम्बानामाकारवैचित्र्यं मिथः[३] ।

न चायमाकारभेदः शरीरस्यैव नात्मन इति वाच्यम् । 'स एकधा भवति, त्रिधा भवति'[४], 'कामान्नी कामरूप्यनुसञ्चरन्'[५] इत्यादिषु मुक्तावप्येकैकस्य विचित्रानेकाकारदर्शनात् । न च तत्रापि शरीरोपाधिक इति वाच्यम् ।

---

१. ततः सुवंशे शशिनः प्रसूतो गाधीति शक्रः – म.भा.ता.नि. ४/४

२. नरवानरान्तराद्याकार – पा

३. गाध्यादिषु नरवानरादिविविधरूपत्वदृष्टेरितरत्रांशिन्यदृष्टेर्न बिम्बप्रतिबिम्बत्वभावस्तेषामित्यर्थः । – **भावप्रदीपिका**

४. छान्दोग्योपनिषत् ७/२६/२

५. तैत्तिरीयोपनिषत् ३/१०

भगवत्प्रसादात् सत्यकामानां तेषां स्वरूपेणैकाकारोपपत्तावौपाधिककल्पनायाः क्लिष्टत्वात् । न चैवमेकबिम्बप्रतिबिम्बानां ब्रह्मादीनामाकारवैचित्र्यदृष्टिः । 'रूपं रूपम्' इत्यादि बिम्बभूतभगद्रूपाणामनेकविधत्वावगमादित्यभिप्रायेणाह – इतरत्रेति[१] ॥

(भा) इतरत्रादृष्टेः ।

(टी) बिम्बभूतानां भगवद्रूपाणां परस्परमानन्दसाम्येऽपि तत्प्रतिबिम्बभूतानाम् ब्रह्मादीनामानन्दादिगुणतारतम्यमनाद्यविद्याकर्मवैचित्र्यादित्युक्तम् 'अदृष्टानियमात्'[२] इत्यत्र । प्रतिबिम्बभूतानां ब्रह्मादीनामानन्दादिगुणतारतम्येऽपि तद्बिम्बभूतानां भगवद्रूपाणामानन्दादिसर्वगुणसाम्यमादित्यादि-

---

१. प्राचीनटीकायां तु – ''ननु 'अंशो नानाव्यपदेशात्' 'ममैवांशो जीवलोके' इत्यादावंशत्वोक्तेः जीवस्य न प्रतिबिम्बतेत्यत आह – न चेति ॥ प्रतिबिम्बस्यैव जीवस्य भगवदेकांशत्वात् नांशत्वविरोध इति भावः । ननु देहांशस्य हस्तादेर्न देहावयवसाकल्यम् । देहप्रतिबिम्बस्य तु तत्साकल्यात् नांशतेत्यत आह – न चैकरूपैवेति ॥ न चास्माभिः प्रतिबिम्बांशत्वं कल्प्यते । येनेतरांशवैरूप्याद्विरुद्ध्येत । किन्तु वचनादेवाङ्गीक्रियत इत्यत आह – प्रमाणं चेति ॥ ननु भगवदंशानां ब्रह्मादीनां भगवत्प्रतिबिम्बत्ववदिन्द्राद्यंशानां गाध्यादीनामपि तत्तत्प्रतिबिम्बत्वं कल्प्यताम् । अविशेषादित्यत आह – न चेति ॥ गाध्यादिषु जीवांशेषु केषाञ्चिदंशानां नरवानराद्याकारवैचित्र्यदर्शनात् न तेषां प्रतिबिम्बत्वम् । न ह्येकवस्तुप्रतिबिम्बानामाकारवैचित्र्यं मिथः सम्भवति । न चायमाकारभेदः शरीरस्यैव नात्मन इति वाच्यम् । 'स एकधा भवति, स त्रिधा भवति, कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिषु मुक्तावप्येकस्य विचित्रानेकाकारदर्शनात् । न चात्रापि स शरीरोपाधिक इति वाच्यम् । भगवत्प्रसादात् सत्यकामानां तेषां स्वरूपेणैकाकारोपपत्तावौपाधिकत्वोपगमायोगादित्यभिप्रायेणाह – इतरत्रेति ॥'' इति । – **भावरत्नकोशे**

२. प्रतिबिम्बानां मिथो वैचित्र्ये कारणमाह – ॐ अदृष्टानियमात् ॐ । अनादिविद्याकर्मादिवैचित्र्याद्वैचित्र्यम् । – **ब्रह्मसूत्रभाष्ये २/३/५१**

वदाधिक्यादित्युक्तं 'स्थानविशेषात् प्रकाशादिवत्'[१] इत्यत्र । अतो नास्य तदधिकरणद्वयविरोध इत्येषा दिक् ।

ननु कथमीशस्य स्थाणुत्वम्? तत्क्षणादावीक्षणादिक्रियावगतेरित्यत आह – **स्थाणुत्वेऽपीति** ॥

**(भा) स्थाणुत्वेऽपि 'ऐक्षत'[२] इत्याद्यविरुद्धमीश्वरस्य । उभयविधवाक्यात् ।**

(टी) वाक्योक्तत्वादेव न विरुद्ध्यते । 'यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं[३] शक्नुयात् क्वचित्' इति न्यायात् ।

इतश्चैवमित्याह –**अचिन्त्यशक्तेरिति**[४] ॥

**(भा) अचिन्त्यशक्तेः ।**

(टी) मायी तु भगवन्महिमानमसहमानः स्थाणुत्वमेव सत्यम्, ईक्षितृत्वादिकं मायामयम् इति मन्यते । तन्निराकरोति – **न चेति** ॥[५]

१. परानन्दमात्रत्वे कथं ब्रह्माद्यानन्दादीनां विशेष इत्यत उच्यते – ॐ स्थानविशेषात् प्रकाशादिवत् ॐ ॥ यथाऽऽदित्यस्य दर्पणादिस्थानविशेषात् प्रतिबिम्बविशेष एवमानन्दादेरपि । 'ब्रह्मादिगुणवैशेष्यादानन्दः परमस्य च । प्रतिबिम्बत्वमायाति मध्योच्चादिविशेषतः' इति वाराहे । **– ब्र.सू.भा. ३/२/३५**

२. छान्दोग्योपनिषत् ६/२/३

३. युक्तिविरुद्धम् – पा

४. प्राचीनटीकायां ''वाक्योक्तत्वादेव न विरुध्यते । 'यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात् क्वचित्' इति न्यायात् । इतश्चैवमित्याह – अचिन्त्यशक्तेरितीति व्याख्यानेपि भाष्ये चशब्दाभावात् स्वयमन्यथा योजयति – अन्यत्रेति ।'' – इति **भावरत्नकोशे** अन्यत्र सहादृष्टं स्थाणुत्वं कर्तृत्वं च कुतो भगवतीत्यत आह – अचिन्त्येति । **– प्र.दी.**

सर्वत्र मुद्रितपुस्तकेषु 'अचिन्त्यशक्तेश्च' इत्येव पाठः ।

५. मायावादी तु कर्तृत्वस्थाणुत्वयोरेकं कर्तृत्वं मायामयम् । स्थाणुत्वं च पारमार्थिकम् । काल्पनिकपारमार्थिकयोश्च गगने नीलत्वनीरूपत्वयोरिव न विरोध इति विरोधसमाधानं

(भा) न च माययैकम् – 'त्वयीश्वरे ब्रह्मणि नो विरुद्ध्यते', 'न योगित्वादीश्वरत्वात्', 'चित्रं न चैतत् त्वयि कार्यकारणे' इत्याद्यैश्वर्येणैव विरुद्धधर्माविरोधोक्तेः ।

(टी) लोकेऽनीहस्य कर्तृत्वं विरुद्धमपि त्वयि न विरुद्ध्यते । ईश्वर इति हेतुगर्भविशेषणम् ।

[१]अशेषगुणपूर्णत्वात् सर्वसृष्ट्यादिकर्तृत्वाच्च सत्यम् । रूपं रूपान्तरं न[२] च्यवतीति रूपाच्युतः । तथा त्वं न योगित्वात् । किन्त्वीश्वरत्वात् । यथा कश्चिदशक्तोऽपि कार्यविशेषमुपायतः साधयति समर्थोपासनया वा, तथा न । किन्तु स्वसामर्थ्येनेत्यर्थः[३] ।

अप्रयासेन विश्वोद्भवादिकर्तृत्वं त्वयि न चित्रम् । कार्यकारण इति हेतुगर्भम् । कार्यमात्रस्वतन्त्रकारणत्वादित्यर्थः[४]।

एवं मानतः प्राप्तानां [५]भगवद्धर्माणां लोकदृष्ट्या विरुद्धानां भगवदैश्वर्यघटितत्वस्यागमोक्तत्वात् न वृथाऽन्यतरमिथ्यात्वकल्पनं युक्तमित्यर्थः[६] ।

---

मन्यते । तदसदित्याह – न चेति ॥ – प्र.दी.

१. 'न तस्य प्राकृता मूर्तिर्मांसमेदोस्थिसम्भवा ।
न योगित्वादीश्वरत्वात् सत्यरूपाच्युतो विभुः ।'
इति पूर्णपाठः भाष्यकारेणैव पठित उत्तरत्र (२/७२) ।

२. रूपं रूपान्त- पा

३. ''तथा त्वं न योगित्वात् किन्त्वीश्वरत्वात् यथा कश्चिदशक्तोऽपि कार्यविशेषमुपायतः साधयति समर्थोपासनया वा, तथा न । किन्तु स्वसामर्थ्येन'' इति प्राचीनटीकानुसारेणाह – न योगित्वात् किन्त्वीश्वरत्वादिति । – भावरत्नकोशे

४. 'कार्यमात्रस्वतन्त्रकारणत्वमर्थः' इति प्राचीनटीका । – भावरत्नकोशे
कार्यकारणे सकलकार्योत्पादनसामर्थ्योपेते । – प्र.दी.

५. भगवत्कर्मणाम् – पा

६. तथा च बादरायणीयं मतमवलम्बमानस्यैवं विरोधसमाधानमसाम्प्रदायिकमिति भावः ।

इतोऽपि न युक्तमित्याह – **महातात्पर्याच्चेति** ॥

**(भा) महातात्पर्याच्च ।**

(टी) मोक्षो हि महापुरुषार्थः । स च विष्णुप्रसादादेव सिद्ध्यति । तत्प्रसादश्च तद्गुणोत्कर्षज्ञानादेव विशेषतः । अतस्तद्गुणोत्कर्ष एव महातात्पर्यमागमानाम् । यत्रैवं महातात्पर्यमागमानां[१] तस्यैव मिथ्यात्वकल्पनमतिकष्टमिति । तत्र तावत् मोक्षस्य महापुरुषार्थत्वमागमैः साधयति – **मोक्षो हीति** ॥

**(भा) मोक्षो हि महापुरुषार्थः –**

**'तत्रापि मोक्ष एवार्थः'[२]**

**'अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।**
**अन्तप्राप्तिं सुखं प्राहुर्दुःखमन्तरमेतयोः ॥'**

(टी) धर्मादिमोक्षान्तानां धर्ममोक्षावन्तौ, तयोः । प्रतिपुरुषबहुवचनम् ।[३]

न चैतावता धर्मस्य मोक्षसामर्थ्यम्, अनित्यत्वादिति भावेनाह – **पुण्येति** ॥[४]

**(भा) 'पुण्यचितो लोकः क्षीयते' इत्यादिश्रुतिस्मृतिभ्यः ।**

(टी) मोक्षस्य विष्णुप्रसादसाध्यत्वे सर्वकर्मदुर्दर्शनविप्रतिपत्तेर्ब्रह्मागमैस्तत्साधयति – **स चेति** ॥

---

– प्र.दी.

१. यत्रैव सर्वागममहातात्पर्यं – पा

२. भागवते ४/२२/३५

३. अन्तेषु धर्ममोक्षेषु मध्येष्वर्थकामेषु । अन्तयोरन्तरं मध्यम् । – प्र.दी.

४. नैतावता धर्मो मोक्षसमः । क्षयिफलत्वादित्याह – पुण्येति ॥ – प्र.दी.

**(भा) 'तस्य न लोम च मीयते' इति श्रुत्यन्तराच्च ।**

**(टी) न लोम चेति न लोमापीत्यर्थः ।**[१]

न केवलं मोक्षसाधनभगवत्प्रसादजनकत्वात् तदुत्कर्षज्ञानस्य, तदुत्कर्षे तात्पर्यमागमानां कल्प्यते । किन्तु उच्यत एव सर्ववेदेषु बह्वितिहासपुराणयोरिति भावेनाह – **यो मामित्यादि ॥**

**(भा) 'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्'**[२] **इति तदुक्तेश्च ।**

(टी) तस्योक्तिः तदुक्तिः ।

**(भा) 'सत्यं सत्यं पुनः सत्यं शपथैश्चापि कोटिभिः ।**
**विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा ।**
**पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा ।**
**नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः' इति नारदीये ।**

(टी) ननु रुद्रादेरपि सर्वोत्कर्षः श्रूयते 'विश्वाधिको रुद्रो महर्षिः'[३] इत्यादिवेदादौ । विष्ण्वाधिक्यं च 'एकः परः पुरुष इहास्य धत्ते स्थित्यादये हरिविरिञ्चिहरेति सञ्ज्ञाः'[४] इति । अतः कथं विष्णोः सर्वोत्कर्ष एव सर्वागमानां महत्तात्पर्यम्? इत्यत आह – **अन्योत्कर्ष इत्यादि ॥**

**(भा) अन्योत्कर्षे ऐक्यं च– 'तथैव सर्वशास्त्रेषु महाभारतमुत्तमम्',**[५] **'को**

---

१. अहल्याधर्षणेन तस्येन्द्रस्य लोमापि न क्षीयत इत्यर्थः । – प्र.दी.
२. गी १५/१९
३. महानारायणोपनिषत् १०/३, तैत्तिरीयारण्यके १०/१०/३
४. सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेति सञ्ज्ञाः श्रेयांसि तत्र खलु सत्वतनौ नृणां स्युः ॥
– भागवते १/२/२४
५. भारते १८/२२४/८ BORI

ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ।'[1] इत्यादिग्रन्थान्तरसिद्धोत्कर्षमहाभारत-विरुद्धम् ।

(टी) एतदेव प्रदर्शयति – तत्र हीति ॥

(भा) तत्र हि –

'नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम्'[2],
'यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः ।'[3]

'न त्वत्समोऽस्ति'[4] इत्यादिषु साधारणप्रश्नावसर एव महान्तमुत्कर्षं विष्णोर्वक्ति । अन्यत्र यत्किञ्चिदुक्तावप्यसाधारण एवावसरे ।

---

१. पश्चात्तनत्वात् कृष्णस्य वैशेष्यात् तत्र निर्णयः ।
प्रादुर्भावमिमं तस्मात् गृहीत्वा भारतं कृतम् ॥
उक्ता रामकथाऽप्यस्मिन् मार्कण्डेयसमास्यया ।
तस्माद्यद्भारते नोक्तं तद्धि नैवास्ति कुत्रचित् ॥
अत्रोक्तं सर्वशास्त्रेषु न हि सम्यगुदाहृतम् ।
इत्यादि कथितं सर्वं ब्रह्माण्डे हरिणा स्वयम् ॥
मार्कण्डेयेऽपि कथितं भारतस्य प्रशंसनम् ।
देवतानां यथा व्यासो द्विपदां ब्राह्मणो वरः ॥
आयुधानां यथा वज्रमोषधीनां यथा यवाः ।
तथैव सर्वशास्त्राणां महाभारतमुत्तमम् ॥
वायुप्रोक्तेऽपि तत् प्रोक्तं भारतस्य प्रशंसनम् ।
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ॥
को ह्यन्यः पुण्डरीकाक्षात् महाभारतकृद्भवेत् ।
एवं हि सर्वशास्त्रेषु पृथक् पृथगुदीरितम् ॥
उक्तोऽर्थः सर्व एवायं माहात्म्यक्रमपूर्वकः । – म.भा.ता.नि. २/५०-५६

२. भारते आदि १/१८

३. भारते शान्ति ३४१/१२

४. गी. ११/४३

(टी) तत्र इति ॥ सर्वोत्तमशास्त्रे । साधारणप्रश्नावसर इति ॥ कः सर्वपुरुषार्थ इति प्रश्नोत्तरप्रसङ्गे । न तु पुरुषविशेषं प्रक्रम्योक्ते । महान्तमिति ॥ न केनापि प्रमाणेन सङ्कोचार्हम्[१]। अन्यत्रेति ॥ मध्यम अधमे च शास्त्रे । यत्किञ्चिदिति ॥ मानान्तरेण सङ्कोचयोग्योत्कर्षोक्तौ । असाधारण इति ॥ पुरुषविशेषप्रकरणरूपे ।[२]

तत्तत्प्रकरणे तत्तदुत्कर्षः कस्य नास्ति ? अग्न्यादेरपीष्टत्वादाह – तद्धीति ॥

(भा) तद्ध्यग्न्यादेरपि वेदादावस्ति –

'त्वमग्न इन्द्रो वृषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः'[३],
'विश्वस्मादिन्द्र उत्तरः'[४] इत्यादिषु ।

(टी) इतोऽपि विष्णोरन्यस्य रुद्रादेः सर्वोत्कर्षो विष्ण्वैक्यं वा नाशङ्कनीयमित्याह – तद्ग्रन्थविरोधादिति ॥

(भा) तद्ग्रन्थविरोधाच्च । तथा हि स्कान्दे शैवे –

'यदन्तरं व्याघ्रहरीन्द्रयोर्वने यदन्तरं मेरुगिरीन्द्रविन्ध्ययोः ।
यदन्तरं सूर्यसुरेड्यबिम्बयोस्तदन्तरं रुद्रमहेन्द्रयोरपि ॥
यदन्तरं सिंहगजेन्द्रयोर्वने यदन्तरं सूर्यशशाङ्कयोर्दिवि ।

---

१. ''महान्तं केनापि प्रमाणेन सङ्कोचानर्हम्'' इति प्राचीनटीका । – भावरत्नकोशे
२. तत्र महाभारते । इत्यादिवाक्येषु वक्ति भगवान् व्यासः । इतोऽपि महाभारतस्य पुराणबाधकत्वं युक्तमित्युक्तम् । साधारणेति ॥ कः सर्वोत्कृष्ट इति साधारणप्रश्नरूपेऽवसरे विष्णुप्रशंसामनुक्रम्य स्वरूपकथनावसर इति यावत् । पुराणेऽप्येवमेवान्योत्कर्षाद्युक्तौ साम्यमेवेत्यत आह – अन्यत्रेति ॥ अन्यत्र पुराणे । यत्किञ्चिदुक्तावप्यन्योत्कर्षाद्युक्तावपि । असाधारण एवावसरे तत्स्तुतिप्रसङ्गे । तदुक्तमिति शेषः । – प्र.दी.
३. ऋग्वेदे २/१/३
४. ऋग्वेदे १०/८६/१

यदन्तरं जाह्नविसूर्यकन्ययोस्तदन्तरं ब्रह्मगिरीशयोरपि ।
यदन्तरं प्रलयजवारिविप्रुषोर्यदन्तरं स्तम्बहिरण्यगर्भयोः ।
स्फुलिङ्गसंवर्तकयोर्यदन्तरं तदन्तरं विष्णुहिरण्यगर्भयोः ।

(टी) रविगुरुबिम्बयोः, न तु तयोः । अधिकत्वात् गुरोः [१]। दिवि प्रकाशे, न तु सर्वगुणेषु । समत्वात् तयोः[२] ।

(भा) अनन्तत्वान्महाविष्णोस्तदन्तरमनन्तकम् ।
माहात्म्यसूचनार्थाय ह्युदाहरणमीरितम् ॥
तत्समोऽभ्यधिको वाऽपि नास्ति कश्चित् कदाचन ।
एतेन सत्यवाक्येन तमेव प्रविशाम्यहम्' ॥ इत्याद्याह ।

तत्रैव शिवं प्रति मार्कण्डेयवचनम् – 'संसारार्णवनिर्मग्न इदानीं मुक्तिमेष्यसि' इत्यादि ।

पाद्मे शैवे मार्कण्डेयकथाप्रबन्धे शिवान्निषिध्य विष्णोरेव मुक्तिमाह – "अहं भोगप्रदो वत्स मोक्षदस्तु जनार्दनः" इत्यादि ।

(टी) यत् ब्राह्मं पुराणं विष्णुशिवस्कन्दसूर्यविनायकदर्शनानां समानं 'नाहं न च शिवोऽन्ये च'[३] इत्येतद्ग्रन्थविरोधादपि न विष्ण्वन्यस्य सर्वोत्कर्षः, तदैक्यं वा शङ्कनीयमित्याह – समब्राह्मविरोधादिति[४] ॥

---

१. सूर्यसुरेड्यबिम्बयोः इत्यत्र रविगुरुबिम्बयोरिति प्राचीनटीका। ... 'सुरेड्यबिम्बशब्देनेन्द्रस्वरूपमुच्यते' इति व्याख्यानं तु बिम्बपदास्वारस्यात् प्राचीनटीकाविसंवादाच्चायुक्तम् ।
– भावरत्नकोशे

२. सूर्यशशाङ्कयोर्दिवि इत्यत्र दिवि प्रकाशे न तु सर्वगुणेषु । समत्वात् सूर्याचन्द्रमसोरिति प्राचीनटीका । – भावरत्नकोशे

३. जिज्ञासाधिकरणसूत्रभाष्योदाहृतब्रह्मवैवर्तवचनम् ।

४. यद्ब्राह्मं पुराणं विष्णुशिवस्कन्दसूर्यविनायकदर्शनानां समानं तत्र 'नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः । बालः क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः' इत्यादिरूपं

**(भा) समब्राह्मविरोधाच्च ।**

(टी) ननु भवतु नाम सर्वशास्त्रोत्तमभारतोक्तविष्णुमहोत्कर्षविरोधिदेवतान्तरोत्कर्षार्पणाक्षमं पुराणादि । 'विश्वाधिको रुद्रः' इत्यादिवेदस्तु नित्यत्वेन मूलप्रमाणत्वात् कथं तदक्षमः? इत्याशङ्क्याह –**वेदश्चेति** ॥

**(भा) वेदश्चेतिहासाद्यविरोधेन योज्यः । 'यदि विद्यात्' इत्यादिवचनात् ।**

(टी) भारताद्युक्तविष्णुमहोत्कर्षानुरोधेन योजनायामपि वेदस्य प्रामाण्याहानेः । अन्यथा 'यदि विद्याच्चतुर्वेदान्'[१] 'इतिहासपुराणाभ्याम्'[२] इत्यादिवाक्याप्रामाण्येन, तत्प्रामाण्यग्राहकस्य 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इत्यादिवेदस्याप्रामाण्यापत्तेरिति भावः ।

न केवलं 'यदि विद्यात्' इत्यादिवचनबलात् भारताद्यनुरोधेन सर्ववेदनिर्णयः, किन्त्वन्यथानिर्णयाभावाच्चेत्याह – **अनिर्णयादिति** ॥

**(भा) अनिर्णयाच्चेन्द्रादिशङ्कयाऽन्यथा ।**

(टी) 'विश्वाधिको रुद्रः' इत्यादिना रुद्रोत्कर्षे 'विश्वस्मादिन्द्र उत्तरः' इत्यादिनेन्द्रस्यापि किं न स्यात् । 'न यस्येन्द्रः' इत्यादिना सूर्यादेरपीत्यर्थः ।

एवं तावद्रुद्राद्युत्कर्षस्य 'नास्ति नारायणसमम्' इत्यादीतिहासादिविरोधात्, तद्विना निर्णयाभावात्, वेदेऽप्यसिद्धिरुक्ता । न तथा विष्णूत्कर्षस्य । तस्येतिहासादिसिद्धत्वात् । तद्बलात् 'विश्वाधिको रुद्रः' इत्यादीनां यथायोग्यं

---

वचनं तद्विरोधादपि न विष्ण्वन्यस्योत्कर्षादीति प्राचीनटीकां हृदि कृत्वाऽऽह समं शैवेति ॥ – **भावरत्नकोशे**

समं शैववैष्णवपक्षयोः । 'नाहं न च शिवोऽन्ये च' इत्यादि तद्वचनम् । – **प्र.दी.**

१. भारते आदि २/३८२

२. भारते आदि १/२६८

सङ्कोचात्, 'न ते विष्णो' इत्यादि वेदेषु सिद्धेः । इदानीं केवलेऽपि वेदे तत्सिद्धिरित्याह – तत्रापीति ॥

(भा) **तत्रापीष्टसिद्धिः । नामवैशेष्यात् ।**

(टी) इष्टः सिद्धान्तो विष्णूत्कर्षः । वेदेऽपि तत्सिद्धिरितिहासादिकं विना । **नामवैशेष्यात्** तन्नामाधिक्याद्रुद्रेन्द्रादिसर्वनामवाच्यत्वात्, नामभिराधिक्यादिति वा । सर्वनामवाच्यत्वेन विष्णोराधिक्यात् नात्रातिप्रसङ्ग इन्द्रादिशङ्क्येत्यर्थः [१]।

गुणोत्कर्षज्ञानादेव लौकिकपुरुषपरितोषवत् मोक्षसाधनभगवत्प्रसादोऽपि तद्गुणोत्कर्षज्ञानादेवेति तत्रैव महातात्पर्यं वेदानामित्युक्तमुपसंहरति – **अत इति ॥**

(भा) **अतो भगवदुत्कर्ष एव सर्वागमानां महातात्पर्यम् ।**

(टी) ननु यदि केवलेऽपि वेदे विष्णोरुत्कर्षः सिद्ध्यति लौकिकपुरुषवच्च तस्य प्रसादः । तर्हि संवादाद्यभावात् लोकवदेवाविद्यमानगुणोत्कर्षोक्तावपि भगवत्प्रसादः स्यादित्यत आह – **तथाऽपीति ॥**[२]

(भा) **तथाऽपि स्वतः प्रामाण्यात् सन्नेवोच्यते ।**

(टी) यद्यपि लौकिकपुरुषपरितोषायासन्नपि गुणोत्कर्ष उच्यते । गुणोत्कर्षोक्त्यैव परमपुरुषपरितोषः संवादाद्यभावश्च भगवदुत्कर्षे ।

---

१. प्राचीनटीकायां ''सर्वनामवाच्यत्वेन विष्णोर्वैशेष्यादाधिक्यान्नात्रातिप्रसङ्ग इन्द्रादिशङ्क्या शङ्कितुमित्यर्थः'' इत्यप्युक्तम् । – **भावरत्नकोशे**

रुद्रादिसर्वनामवत्त्वादित्यर्थः । – **प्र.दी.**

२. अस्त्वेवम् । तथाऽपीक्षितृत्वादेर्न मायामयत्वे तद्विरोधः । गुणोत्कर्षस्य सत्त्वे हि स स्यात् । न च वेदतात्पर्यविषयत्वमात्रेण सत्यता । मोक्षापेक्षयेश्वरं प्रसादयितुमुक्तस्य राजाद्युत्कर्षस्येवासत्त्वसम्भवात् । संवादाभावेन सत्त्वनिश्चयायोगादित्यत आह – तथाऽपीति ॥ – **प्र.दी.**

तथाऽपि[१] भगवतः सर्वगुणोत्कर्षः सन्नेवोच्यते वेदैः । स्वतः प्रामाण्यात् तेषामपीति भावः ।

ननु वेदोक्तयोरन्योत्कर्षैक्ययोरिदानीमेव निरस्तत्वात् कथमत्रापि विश्वास इत्यत आह – **अविरोधादिति**[२] ॥

**(भा) अविरोधात् ।**

(टी) अन्योत्कर्षैक्ययोक्तयोर्भारतादिविरोधात्, अत्राविरोधादिति भावः ।

ननुसर्वोत्कर्षस्याप्यन्यत्रादृष्टेः,तद्वद्धिमतोऽपिनसर्वोत्कृष्टः[३]पुरुषत्वादित्यनुमानविरोधादित्यत आह – **न चेति** ॥

**(भा) न च प्रमाणसिद्धस्यान्यत्रादृष्ट्याऽपह्नवो युक्तः । धर्मवैचित्र्यादर्थानाम् ।**

(टी) न ह्यनुमानं श्रुतिं निरुणद्धि । कालात्ययदोषदुष्टत्वादिति भावः[४] ।

ननु भवत्पक्षे वेदानामपौरुषेयत्वेनाप्तोक्तत्वगुणाभावात् तदुक्तनिश्चयायान्यन्मानं वक्तव्यमित्यत आह – **स्वत इति** ॥

**(भा) स्वतः प्रामाण्यानङ्गीकारे मानोक्तावप्यदोषत्वं च साधयेदित्यतिप्रसङ्गः ।**

---

१. तत्रापि – पा

२. प्राचीनटीकायां तु ''ननु वेदोक्तयोर्ब्रह्मरुद्रोत्कर्षयोरिदानीमेव निरस्तत्वात् कथं वेदोक्ते विष्णूत्कर्ष आश्वास इत्यत आह – अविरोधादिति । अन्योत्कर्षयोर्भारतादिविरोधादत्राविरोधात् युक्त आश्वासः'' इति व्याख्यातम् । – **भावरत्नकोशे**

एवं सति बौद्धाद्यागमविषयस्यापि सत्वं स्यादिति चेन्न । प्रसक्तस्यापि तत्प्रामाण्यग्रहणस्य बलवद्विरोधेनापोदितत्वात् । न च तथा प्रकृतेऽपीत्याह – अविरोधादिति । **– प्र.दी.**

३. .... **अन्यत्रादृष्टत्वात् भगवानपि न सर्वोत्कृष्टः** – पा

४. नन्वन्यत्र पुरुषे सर्वोत्कर्षस्यादर्शनात् तद्दृष्टान्तेनेश्वरेऽपि तदभावस्य साधयितुं शक्यत्वादनुमानविरोधोस्तीत्यत आह – न चेति ॥ कालातीतमनुमानमिति भावः । **– प्र.दी.**

(टी) अपौरुषेयत्वेनानाशङ्कितदोषवेदप्रमितेऽपि प्रमाणान्तरोक्तावत एवादोषत्वनिश्चयेऽप्यदोषत्वं च साधयेदित्यतिप्रसङ्गः । अतः स्वत एव प्रामाण्यमङ्गीकार्यमिति भावः [१]।

एवं तावज्जीवमोक्षापेक्षया भगवद्गुणोत्कर्षे महातात्पर्यं सर्वागमानामित्युक्तम् । अधुना विनाऽप्यन्यापेक्षां तत्रैव महातात्पर्यम्, 'नारायणपरा वेदाः' इत्यादौ व्यवधानाप्रतीतेरित्याह – **अनन्यापेक्षयेति** ॥

(भा) **अनन्यापेक्षया च तत्परत्वं सिद्धमागमानाम्** –

**'नारायणपरा वेदाः'**[२]

**'सर्वे वेदा यत्पदमामनन्ति'**[३]

**'वासुदेवपरा वेदाः'**[४] इति ।

(टी) अनेनाविद्यमानगुणोत्कर्षोक्तिशङ्कैव वारितो भवति ।

ननु सर्वेषामागमानां जीवमोक्षापेक्षया भगवद्गुणोत्कर्षे तात्पर्यमुक्तम् । अतस्तेषामेवानन्यापेक्षया तत्रैव तात्पर्यं विरुद्धमित्यत आह – **न चेति** ॥

(भा) **न चैतद्विरुद्धम् । ईश्वरनियमात् ।**

---

१. प्राचीनटीकायां तु ''भवत्पक्षे वेदानामपौरुषेयत्वेनाप्तोक्तत्वगुणाभावात् तदुक्तनिश्चयायान्यन्मानं वक्तव्यमित्यत आह – स्वत इति । अपौरुषेयत्वेनानाशङ्कितदोषप्रमितेऽपि प्रमाणान्तरोक्तावत एवादोषत्वनिश्चयेऽप्यदोषत्वं च साधयेदित्यतिप्रसङ्गः । अतः स्वत एव प्रामाण्यमङ्गीकर्तव्यमिति भावः'' इति व्याख्यातम् । – **भावरत्नकोशे**

भवेदेवं यदि स्वत एव प्रामाण्यग्रहः स्यात् । तदनङ्गीकारे किमुत्तरमित्यत आह – स्वत इति । संवादाधीनः प्रामाण्यग्रह इत्यङ्गीकारे तु प्रामाण्यनिश्चयाय संवादकमानोक्तौ तस्यादोषत्वं प्रामाण्यमन्यसंवादेन साधयेदित्यनवस्थालक्षणोऽतिप्रसङ्ग इत्यर्थः । – **प्र.दी.**

२. भारते शान्ति ३४७/८२

३. **कठोपनिषत्** १/२/१५

४. **भागवते** १/२/२८

(टी) मध्यमभक्तान् प्रति तन्मोक्षाय स्वगुणोत्कर्षपरत्वेनागमान् नियामयति भगवान् । एकान्तान् प्रत्यनन्यापेक्षयैव । तेषां मोक्षस्यापि निरन्तरभगवद्भक्त्या-नार्थत्वादित्यविरोधः[१] ।

नन्वनादिनित्ये वेदे या वाचकत्वशक्तिस्तात्पर्यलक्षणा स्वाभाविकी[२], तामीशोऽपि कथं प्रयोजयेत्? अनन्याधीनत्वान्नित्यस्वभावयोरित्यत आह – **अनादौ चेति ॥**

**(भा) अनादौ च तत् सिद्धम् –'द्रव्यं कर्म च कालश्च'[३] इत्यादौ । प्रयोजकत्वं तु पूर्वोक्तन्यायेन ।**

(टी) 'द्रव्यं कर्म च' इत्यादिवाक्यपर्यालोचनयाऽनादिनित्येऽप्यन्य-प्रयोज्यत्वसिद्धौ सत्यां तत्प्रयोजकत्वमीशस्य [४]पूर्वोक्ताचिन्त्यशक्तित्वनयेन सिद्ध्यतीत्यर्थः ।

एवमविरोधात् साक्षादेव भगवत्परोक्तेश्च सर्वागमानामनन्यापेक्षयाऽपि तत्परत्वं सिद्धमित्युक्तमुपसंहरति – **अत इति ।**

**(भा) अतः सिद्धमेतत् ।**

(टी) ननु तर्ह्येतदेवास्तु । जीवमोक्षापेक्षया चेत् भगवतोऽप्राधान्यं स्यादित्यत आह – **तच्चेति ॥**

---

१. 'सर्वे वेदास्तु देवार्था देवा नारायणार्थकाः ।
नारायणस्तु मोक्षार्थे मोक्षो नान्यार्थ इष्यते ।
एवं मध्यमभक्तानामेकान्तानां न कस्यचित् ।
अर्थे नारायणो देवस्त्वन्यत् सर्वं तदर्थकम् ।' इति गीताकल्पे – **गी.भा. ७/२९**

२. **-लक्षणस्वाभाविकी** – पा

३. भागवते २/१०/१२

४. अनादेर्नियामकत्वं त्वीश्वरस्याचिन्त्यशक्त्या युक्तम् । – **प्र.दी.**

(भा) तच्चानन्यापेक्षाचिन्त्यशक्तित्व एव युक्तम् ।

(टी) गुणोत्कर्षज्ञानात् प्रसन्नो भगवान् मुक्तिं ददातीति हि मोक्षार्थताऽपि भगवदुत्कर्षस्य । तत्र पारार्थ्यमात्रेणाङ्गत्वं भगवतः स्यात् । तर्हि मोक्षार्थतैव तस्य न स्यात् । उत्कर्षज्ञानं विना तत्प्रसादाभावात् । अतो यज्जीवमोक्षापेक्षयाऽपि भगवदुत्कर्षे तात्पर्यमागमानाम्, तदपि तस्यानन्यापेक्षयाऽचिन्त्यशक्तित्व एव युक्तम् ।

एतेनैतदपि प्रत्युक्तम् । यदाहुरन्ये – [1]उद्देश्यदेवतानां यागार्थत्वात् तदङ्गत्वमिति । यागादेरपि तदधीनत्वादिति भावः ।

यत एवं भगवति स्वतन्त्राचिन्त्यशक्त्यैव विरुद्धधर्मयोरविरोधः, अतो नान्यतरमिथ्यात्वकल्पनमित्युपसंहरति – अत इति ॥

(भा) अतो न मायामयमेकम् ।

(टी) ननु तर्ह्युत्तरपदेन क्रियानिषेधः कथमित्यत आह – अचलत्वं त्विति ॥

(भा) अचलत्वं तु – 'अप्रहर्षमनानन्दम्' 'असुखम्' 'अप्रज्ञम्'[2] 'असद्वा'[3] इत्यादिवत् । क्रियादृष्टेः – 'तपो मे हृदयं साक्षात् तनुर्विद्या क्रियाऽऽकृतिः'[4] इत्याद्युक्तेः ।

(टी) यथा 'अप्रहर्षमनानन्दम्' इत्याद्युक्तावपि, नाप्राकृतापरिमितस्वरूपानन्दज्ञानसत्वानां निराकृतिः । 'आनन्दं ब्रह्मणो विद्वान् न बिभेति'[5] 'विज्ञानं

---

१. उद्देश्यत्वेन देवतानां - पा
२. माण्डूकोपनिषत् २/१ (नप्रज्ञम्)
३. तैत्तिरीयोपनिषत् २/७
४. भागवते ३/९/२४
५. तैत्तिरीयोपनिषत् २/९

ब्रह्म चेद्वेद'[१] 'सदेव सोम्येदमग्र असीत्'[२] इत्यादितद्दृष्टेः । एवमचलत्वोक्तावपि, नाप्राकृतस्वरूपानन्तगमनादिक्रियानिषेधः । अपि त्वप्राप्तप्राप्तिपूर्वदेशवियोगादिनिषेधः 'अनेजदेकं मनसो जवीयः'[३] 'आतेन यातम्'[४] इत्यादिक्रियादृष्टेः ।

'क्रियाऽऽकृतिः'* इत्यस्य 'शृङ्गाराद्याकृतिगतः क्रियात्मा पाकशासनः'[५] इति व्याख्यानेऽप्यङ्गदेवताधर्माणां भगवद्गतत्वस्य [६]समाहारसूत्रसिद्धत्वादत्रोदाहरणमिति भावः [७]।

---

१. तैत्तिरीयोपनिषत् २/११
२. छान्दोग्योपनिषत् ६/२/१
३. ईशावास्योपनिषत् ४
४. ऐतरेयोपनिषत् ३/८/७　　*इति भागवते ६/४/४६
५. भा.ता. ६/४/४६
६.ॐ समाहारात् ॐ - ब्र.सू. ३/३/६५

'अङ्गैः पराद्ये हि देवा विसृष्टास्तत्तद्गुणान् परमे संहरेत ।
तांश्चापि तत्रैव विचिन्त्य देवान् स्थानं मुमुक्षुः परमं व्रजेत ॥'

– इति काषायणश्रुतौ समाहारवचनाच्च । – इति तद्भाष्ये

७. ननु –

तपोभिमानी रुद्रस्तु विष्णोर्हृदयमाश्रितः ।
विद्यारूपा तथैवोमा विष्णोस्तनुमुपाश्रिता ।
श्रृङ्गाराद्याकृतिगतः क्रियात्मा पाकशासनः ।

इति(भाग.ता.) प्रमाणमुदाहृत्य तपोभिमानी रुद्रो मम हृदयाज्जातस्तदाश्रितश्च । विद्याभिमानिन्युमा तनोर्जाता तदाश्रिता च । क्रियाभिमानी पाकशासन आकृतिः शृङ्गाराद्याकारजातः तदाश्रितश्चेत्येवं भगवत्पादैरिदं वचनमन्यथा व्याख्यातमिति कथमेतद्भगवतः क्रियावत्त्वे प्रमाणमिति चेत् ।

अत्राऽऽहुर्नृहरितीर्थश्रीमच्चरणाः । ''अङ्गदेवताधर्माणां भगवद्गतत्वस्य समाहारसूत्रसिद्धत्वात् क्रियाऽऽकृतिरित्यस्यात्रोदाहरणम्'' इति । अयं भावः । 'अङ्गैः पराद्ये हि देवा विसृष्टास्तत्तद्गुणान् परमे संहरेत । तांश्चापि तत्रैव विचिन्त्य देवान् स्थानं मुमुक्षुः परमं व्रजेत' इति समाहारसूत्रभाष्ये 'न केवलमङ्गेषु तत्तद्देवताभावनया पूर्यते, किन्तु

यत एवं चलादिमिथ्यात्वनयेन सत्यज्ञानादेः[१] सर्वस्यापि मिथ्यात्वम्, असत्यादिव्यावृत्तिरपि सत्यज्ञानादिविशेषे सत्येव, अतः 'सत्यं ज्ञानम्'[२] इत्यादिवत् सार्वज्ञसर्वैश्वर्यसर्वकर्तृत्वादिधर्मजातं सर्वं च न मायामयमित्याह – **अतश्चेति** ।।[३]

**(भा) अतश्च न मायामयं सर्वम् ।**

(टी) इतश्च तन्न मायामयमित्याह – **ऐश्वर्यादीति** ।।

**(भा) ऐश्वर्यादिवाचिभगशब्देनैव सम्बोधनाच्च – 'तं त्वा भग'[४] इत्यादौ ।**

(टी) चशब्दो न मायामयं सर्वमित्यस्यानुकर्षणार्थः ।

नन्वनेन भगशब्दार्थैश्वर्यादेर्भगवत्स्वरूपत्वमवगम्यते । न त्वमायामयत्वमित्यत आह – **स्वरूपत्वादिति** ।।

**(भा) स्वरूपत्वान्न मायामयत्वं युक्तम् ।**

(टी) बाधकप्रत्ययासम्भवाच्च न मायामयत्वं भगवच्छक्तिविग्रहाणामिति भावेन तेषामनन्तत्वप्रतिपादकं भागवतवचनद्वयमुदाहरति– **विज्ञानशक्तिरिति** ।।

---

तत्तदङ्गदेवगुणसमाहारश्च तत्तदङ्गेषु कर्तव्यः । यथा चक्षुर्मनआदिषु सूर्यसोमादिगुणा महाप्रकाशकत्वाह्लादकरत्वादयः' इति (मुद्रितपुस्तके वाक्यभेदः प्रामादिकः) तत्त्वप्रदीपोक्तरीत्याऽत्र पाकशासनादिक्रियाणामपि भगवदाकृतौ भावनीयत्वावसायेन भगवतः क्रियावत्त्वे भवतीदं वचनं प्रमाणमिति । – **भावरत्नकोशे**

१. **सत्वज्ञानादेः** - पा

२. तैत्तिरीयोपनिषत् २/१

३. क्रियाद्यमायामयत्वप्रत्युक्त्यैवाशेषभगवद्गुणमायामयता प्रत्युक्तेत्याह – अतश्चेति ।।
– **भावप्रदीपिका**

४. **तैत्तिरीयोपनिषत्** १/११

(भा) 'विज्ञानशक्तिरहमासमनन्तशक्तेः'[१]
'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे'[२]

(टी) [३]करणदोषासम्भवाच्च न मायामयत्वं भगवच्छक्त्यादीनामिति भावेन तेषामनादित्वप्रतिपादिकां श्रुतिमुदाहरति – **परेति** ॥

(भा) **'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'**[४]
**– इत्यादिवचनात् ॥२४ ॥**

(टी) न ह्यनादिवस्तुनः स्वाभाविको धर्मः सादिर्भवति ॥२४॥

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२५॥**

(टी) ननु भक्तैर्दृश्यत्वाद्ध्येयत्वाद्विविधावताररूपत्वाच्च भगवतः कथमसावव्यक्तोऽचिन्त्योऽविकार्यश्चेत्युच्यत उत्तरश्लोकेन? इत्यत आह – **अत एवेति**[५] ॥

(भा) **अत एवाव्यक्तादिरूपः ॥२५॥**

(टी) यत एवमनाद्यनन्ता परा शक्तिरवसीयते भगवतः श्रुतिपुराणाभ्यां यतश्च क्रियावतोऽप्यचलत्वोपपत्तिः, अत एवाव्यक्तत्वाद्युपपत्तिः [६]दृश्यादिरूपस्येत्यर्थः ॥२५॥

---

१. भागवते ब्रह्मवचनम् ३/९/२४;    २. भागवते ६/४/४८
३. कारणदोषासम्भवाच्च – पा    ४. श्वेताश्वतरोपनिषदि ६/८
५. श्रवणादिना व्यक्त्यादिप्राप्नुवतो हरेः कथमव्यक्तत्वादि? इत्यत आह – अत एवेति ॥
– भावप्रदीपिका

ननु भगवान् ज्ञानिभिर्दृश्यते चिन्त्यते च । तत्कथमुच्यते 'अव्यक्तोऽयमचिन्त्योऽयम्' इति ? तत्राह – अत एवेति ॥ – प्र.दी.

६. दृश्यादिरूपश्चेत्यर्थः – पा

ननूक्तप्रकारेणात्मनित्यत्वेऽपि देहवियोगात्मकमरणाच्छोको देहाभिमानिनां स्यादित्याशङ्क्य तदुत्तरत्वेनोत्तरश्लोकत्रयं क्रमेणावतारयति – **अस्त्वेवमिति** ॥२६-२८॥

(भा) अस्त्वेवमात्मनो नित्यत्वम्; तथाऽपि देहसंयोगवियोगात्मकजनिमृती स्त एवेत्यत आह – अथेति ॥२६॥

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।**
**तथाऽपि त्वं महाबाहो नैनं शोचितुमर्हसि ॥२६॥**

(भा) कुतोऽशोकः? नियतत्वादित्याह – जातस्येति ॥२७॥

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७॥**

(भा) तदेव स्पष्टयति – अव्यक्तादीनीति ॥२८॥

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥२८॥**

(टी) पुनरीश्वरसारूप्याभिधानस्योपसंहारार्थत्वान्न पुनरुक्तिर्दोषायेति[१] दर्शयन् उत्तरश्लोकद्वयमवतार्य व्याचष्टे – देहयोगवियोगस्येत्यादिना ॥[२]

(भा) 'देहयोगवियोगस्य नियतत्वात्, आत्मनश्चेश्वरसरूपत्वात् सर्वथाऽनाशान्न शोकः कार्यः' इत्युपसंहर्तुमैश्वरं सामर्थ्यं पुनर्दर्शयति – आश्चर्यवदिति ॥

**आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।**
**आश्चर्यवच्चैनमन्यः श्रुणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥२९॥**

---

१. पुनरुक्तिः तेषां – पा

२. आश्चर्यवदिति श्लोकस्य न प्रकृतसङ्गतिर्दृश्यते । तदुत्तरश्लोकश्च पुनरुक्त इत्यत आह – देहयोगेति ॥ – प्र.दी.

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।**
**तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥**

(टी) सर्वथाऽनाशादिति ॥ स्वरूपेण वा, बिम्बवियोगाख्यनिमित्ताद्वा[१], शस्त्रपावकाम्ब्वादिनिमित्तविशेषाद्वा नाशाभावात् । 'देही' इत्यनेनोपसंहर्तुमाश्चर्यवदित्यनेनैश्वरं सामर्थ्यं दर्शयति । 'अप्रमेयस्य', 'अजो नित्यः शाश्वतः', 'नित्यः सर्वगतस्थाणुः' इत्यादिना दर्शितत्वात् पुनरित्यर्थः[२] ।

ननु जीवस्यैवाल्पत्वात् कथं तद्द्रष्टुराश्चर्यता? इत्यत आह – **दुर्लभत्वेनेति** ॥

(भा) **दुर्लभत्वेनेत्यर्थः ।**

(टी) दुर्लभत्वस्याश्चर्यत्वे हेतुत्वं च लोकतः सिद्धमित्याह– **तद्धीति**[३] ॥

(भा) **तद्ध्याश्चर्यं लोके ।**

(टी) ननु स्वं स्वमात्मानं सर्वेऽपि पश्यन्ति । अतः कथं तद्द्रष्टा दुर्लभः?[४] येनाश्चर्यतेत्यत आह – **दुर्लभोऽपीति** ॥

(भा) **दुर्लभोऽपीश्वरसरूपत्वात् सूक्ष्मत्वाच्चात्मनस्तद्द्रष्टा ॥२९-३०॥**

(टी) न हि यः कश्चिदात्मानम् [५]'अप्रमेयत्वादिलक्षणेश्वरस्य सरूपत्वान्नित्योऽहम्' इति पश्यति । अतस्तादृशात्मद्रष्टाऽऽश्चर्यो दुर्लभश्च । एवंविधा-

---

१. बिम्बनाशाभावादिभिः सर्वैः प्रकारैः । – प्र.दी.
२. अप्रमेयस्येत्यादिना प्रागुक्तत्वात् पुनरिति । – प्र.दी.
३. कथं तद्धीति – पा । तथा च 'कथम्? तद्ध्याश्चर्यं लोके' इति भाष्यपाठः स्यात् ।
४. दुर्लभोऽपि – पा
५. अप्रमेयादि० – पा

त्मद्रष्ट्राश्चर्यत्वकथनेनैश्वरमेव[1] सामर्थ्यमभिहितं भवतीत्यर्थः[2] ।

यद्वा तद्द्रष्टाऽपि दुर्लभ इत्यन्वयः । ईश्वरज्ञातृवक्तृवत् 'आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा आश्चर्योऽस्य ज्ञाता'[3] इति तस्याश्चर्यत्वश्रुतेः । ईश्वर-प्रतिबिम्बत्वात् जीवस्येत्यर्थः ॥२९-३०॥

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥३१॥**

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥३२॥**

**अथ चेत् त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥३३॥**

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।**
**सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥३४॥**

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥**

**अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥३६॥**

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥३७॥**

---

१. -श्चर्यत्वदुर्लभत्वकथनेनैश्वरमेव- पा

२. जीवस्यैवं सामर्थ्ये तद्बिम्बेश्वरस्यातिशयितं सामर्थ्यमुक्तं भवति । —भावप्रदीपिका
यत्प्रतिबिम्बस्य जीवस्य द्रष्टाऽपि दुर्लभः किं तत्सामर्थ्यं वर्णनीयमितीश्वरसामर्थ्य-प्रदर्शनम् । — प्र.दी.

३. काठकोपनिषत् १/५/७ ('आश्चर्यो ज्ञाता' इति प्रचलितपाठः)

**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥३८॥**

**एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥३९॥**

(टी) 'साङ्ख्य''योग'शब्दयोरन्यत्र प्रसिद्धेः, तत्परिहाराय सम्यगर्थं सप्रमाणकमाह – **साङ्ख्यमिति** ॥

(भा) **साङ्ख्यं ज्ञानम् । 'शुद्धात्मतत्त्वविज्ञानं साङ्ख्यमित्यभिधीयते' – इति भगवद्वचनाद्व्याससमृतौ । योगः उपायः । 'दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयःप्रसिद्धये' इति प्रयोगाद्भागवते**[१] ।

(टी) ननु 'साङ्ख्य''योग'शब्दयोरन्यत्र प्रयोगमात्रेण कथमत्र प्रसिद्धार्थपरित्यागः? इत्यत आह – **नेतराविति** ॥

(भा) **नेतरौ साङ्ख्ययोगावुपादेयत्वेन विवक्षितौ कुत्रचित् सामस्त्येन ।**

(टी) अत्र साङ्ख्ययोगयोरुपादेयत्वमवगम्यते । 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' इति । न चेतरौ साङ्ख्ययोगावुपादेयत्वेन विवक्षितौ कुत्रचित् । अपि तु हेयत्वेनैव तत्र तत्र । 'अक्षपादकणादौ च साङ्ख्ययोगौ च हैतुकाः'[२] इति । 'सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह'[३] इति च[४] ।

---

१. ४/१८/३

२. गीतातात्पर्योदाहृतनारदीयवचनम् २/३९

३. भागवततात्पर्योदाहृतपाद्मवचनम् (१/३/१०)

४. 'कुत्रचिदागमे'(-गमः इति प्रामादिकः) इत्यनन्तरम् ''अपि तु हेयत्वेनैव 'अक्षपादकणादौ च साङ्ख्ययोगौ च हैतुकाः' इति 'सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह' '' इति 'तत्र तत्र' इति प्राचीनटीकायां भाष्यं व्याख्यातम् । – **भावरत्नकोशे**

'ज्ञानं कर्म च' इत्यारभ्य 'प्रोच्यते गुणसङ्ख्याने' इत्युक्त्वा [१]'तज्ज्ञानं विद्धि सात्विकम्' इति साङ्ख्योक्तत्रैगुण्यकथनात् कथं तस्यानुपादेयत्वमित्याशङ्क्योक्तम् – **सामस्त्येनेति** ॥ यद्यपि तदुक्तावविरुद्धार्थैकदेशप्रत्यभिज्ञाऽस्मिन् शास्त्रे । तथाऽपि न तदुपादेयत्वेन विवक्षितम् गुणसङ्ख्यानशब्देन किन्तु परमसाङ्ख्यशास्त्रम्[२]। इतरसाङ्ख्ययोगयोः निरीश्वरत्वाद्विहितहिंसाया अप्यनर्थहेतुत्वाङ्गीकाराच्च । अस्य त्वीश्वरप्रतिपादकत्वात्, 'कर्मबन्धं प्रहास्यसि' इति मोक्षार्थत्वेनैव युद्धविधानाच्चेति भावः ।

'साङ्ख्ययोगौ पृथक् बालाः'[३] इत्यत्र वक्ष्यमाणयोगेऽपि च 'कर्मयोगः विशिष्यते' इति प्रयोगाच्च योगशब्दोऽत्रोपायवाचीत्याह – **कर्मयोग इति** ॥

**(भा) कर्मयोगः इत्यादिप्रयोगाच्च ।**

(टी) भारत एवोपरि निन्दितत्वान्नेतरावत्र विवक्षितावित्याह – **निन्दितत्वादिति** ॥

**(भा) निन्दितत्वाच्चेतरयोः मोक्षधर्मेषु भिन्नमतत्वमुक्त्वा पञ्चरात्रस्तुत्या ।**

(टी) निन्दितानामन्यतमस्तुत्या द्वेषान्निन्दा भवत्येवेति भावः ।

तर्हि वेदानामपि निन्दा स्यादित्यत आह – **वेदानामिति** ॥

**(भा) वेदानां त्वेकार्थत्वान्न विरोधः ।**

(टी) वेदैक्येऽपि पञ्चरात्रस्य यत् पृथक्त्वं तत्र निर्दिष्टेभ्यः 'ज्ञानेष्वेतेषु

---

१. गीता १८/१९-२०

२. गुणसङ्ख्याने परमसाङ्ख्यशास्त्रे । – गी.ता. १८/१९

गुणसङ्ख्याने गुणगणनप्रकरणे । – गी.भा. १८/१९

३. गीता - ५/४

राजेन्द्र सर्वेष्वेतद्विशिष्यते'[१] इति, तत् तु साङ्ख्याद्यपेक्षया घटत इत्याह – **पार्थक्यमिति** ॥

**(भा) पार्थक्यं तु साङ्ख्याद्यपेक्षया युक्तम् ।**

(टी) इतो न वेदपञ्चरात्रयोः पृथक्त्वशङ्का इत्याह – **तत्रेति** ॥

**(भा) तत्रैव चित्रशिखण्डिशास्त्रे पञ्चरात्रमूले वेदैक्योक्तेश्च ।**

(टी) 'ये हि ते यतयः ख्याता सप्त चित्रशिखण्डिनः ।
तैरेकमतिभिर्भूत्वा यत् प्रोक्तं शास्त्रमुत्तमम् ॥
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ॥'[२] इत्यारभ्य,
'प्रवृत्तौ च निवृत्तौ च योनिरेतद्भविष्यति ।
ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥'[३] इति ।

तत्रैव मोक्षधर्म एवेत्यर्थः[४] ।

एवं हेयवाचिसाङ्ख्ययोगशब्दस्यान्यपरत्वेऽप्युपादेयवाचिनः क्वचिदन्यथा वर्णनीय इत्याह – **एवमेवेति** ॥

**(भा) एवमेव सर्वत्र साङ्ख्ययोगशब्दार्थ उपादेयवाचको वर्णनीयः ।**

---

१. भारते शान्ति ३४९/६९
२. भारते शान्ति ३३५/२७,२८
३. भारते शान्ति ३३५/४९
४. तत्रैवेति ॥ मोक्षधर्म एव ।
ये हि ते यतयः ख्याता सप्तचित्रशिखण्डिनः ।
तैरेकमतिभिर्भूत्वा यत् प्रोक्तं शास्त्रमुत्तमम् ॥
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ॥
इत्यादिना चित्रशिखण्डिशास्त्रस्य वेदैक्योक्तेश्च । असङ्गतमेतदित्यत आह – पञ्चरात्रेति ॥ पञ्चरात्रमूलकस्येत्यर्थः । एतच्च वैखानससंहितोपक्रम एव प्रसिद्धम् । **–प्र.दी.**

(टी) उक्तवक्ष्यमाणपर्यालोचनयाऽपि ज्ञानतदुपायवाचित्वमेव 'साङ्ख्य'-'योग'शब्दयोरित्याह – **युक्तेश्चेति ॥**

**(भा) युक्तेश्च । ज्ञानं हि जैवमुक्तम्[1] । उपायश्च वक्ष्यते ।**

(टी) साङ्ख्ययोगशब्दयोः ज्ञानतदुपायवाचित्वे बुद्धिशब्दान्वयो[2] दुर्घटः स्यात् । तस्यापि ज्ञानवाचित्वात् । अतः शास्त्रोदिता बुद्धिर्योगशास्त्रोदिता बुद्धिरित्येव स्यादित्यत आह – **बुध्यत इति ॥**

**(भा) बुद्ध्यतेऽनयेति बुद्धिः । साङ्ख्यविषयो यया वाचा बुद्ध्यते सा वागभिहितेत्यर्थः ॥३९॥**

(टी) बुध्यतेऽनयेति बुद्धिशब्देनात्र करणव्युत्पत्या वागुच्यते[3] । 'साङ्ख्ये' 'योगे' इति च विषयसप्तमी[4] । अतोऽस्मत्पक्षे अन्वयः सुघट इत्यर्थः ॥३९॥

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥४०॥**

(टी) नन्वत्र योगशब्देन करणव्युत्पत्या ज्ञानोपायभूतं कर्म विवक्षितम् । बुद्धिशब्देन तद्धीविषया वाक् । सा च मतभेदाद्वादिभिरन्यथाऽन्यथोच्यते[5] । अतः कथं भगवदुक्तायामेव वाचि परिनिष्ठा? इति भावेनाशङ्क्य, उत्तरश्लोकमवतारयति – **योग इमामिति ॥**

---

१. अत एव 'ज्ञानं हि जैवमुक्तम्' इत्यत्र जीवाश्रितज्ञानं परमात्मविषयमिति ज्ञातव्यम् । इत्युत्तरत्र(३/१) भावप्रकाशिकायामस्यामेव ।

२. **बुद्धिशब्दादन्वयो** – पा

३. करणव्युत्पत्त्या बुद्धिशब्देनात्र वागुच्यत इति प्राचीनटीकां 'यथा वाचा' इति भाविभाष्यं च हृदि कृत्वाऽऽह – वागिति शेष इति ॥ – **भावरत्नकोशे**

'वागिति शेषः' – प्र.दी.

४. साङ्ख्यं चासौ विषयश्च । अनेन विषयसप्तमीयमित्याह । – प्र.दी.

५. **वादिभिरन्यथोच्यते** – पा

(भा) योग इमां बुद्धिं श्रुण्वित्युक्तम् । बह्व्यो हि बुद्धयो मतभेदात् । तत् कथमेकत्र निष्ठां करोमि? इत्यत आह – व्यवसायात्मिकेति ॥

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥४१॥**

(टी) यद्यपि सम्यग्युक्तिनिर्णयरहितानि तान्यनन्तानि । साङ्ख्यादिमतानां परिगणितत्वेऽपि प्रत्येकं [१]प्रतिपुरुषमतिवैचित्र्येणानन्तशाखत्वात् । तथाऽपि सम्यग्युक्तिनिर्णीतं भगवन्मतमेवेति तत्रैव निष्ठा कार्येति भावेन तं व्याचष्टे – सम्यगिति ॥४१॥

(भा) सम्यग्युक्तिनिर्णीतानां मतानामैक्यमेवेत्यर्थः ॥४१॥

(टी) न तु वैदिकानां स्वमतानामित्यनेन[२] सम्बन्धः[३] । मतानामनन्तानां सम्यग्युक्तिनिर्णयराहित्याशङ्काभावात् तत्रैव विप्रतिपत्तौ पुनः कथमेकत्र परिनिष्ठा? इति भावेनाशङ्क्य, उत्तरश्लोकमवतारयति – **स्युरिति** ॥

(भा) स्युरवैदिकानि मतान्यव्यवसायात्मकानि, न तु वैदिकानि । तेऽपि हि केचित् कर्माणि स्वर्गादिफलान्येवाहुरित्यत आह – यामिमामिति ॥

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥४२॥**

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥४३॥**

---

१. प्रतिपूरुष – पा

२. असङ्ख्यानन्तमताना० – पा

३. अत्र वाक्यमिदमारभ्य सर्वेषु कोशेषु सप्ताष्टानि पत्राणि पृथक्पृथक्स्थलेषु सर्वथाऽनन्वितानि, पूर्वापरीकारप्रचुराणि, लेखकप्रमादबहुलानि पठ्यन्ते । तानि यथामति संशोध्य भाष्यवाक्यैः सह संयोज्य अत्र मुद्रितानि ।

**भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥४४॥**

(टी) तेऽपि केचित् वैदिकाः कर्माणि स्वर्गादिफलान्येवाहुः । नतु 'ज्ञानात् पूर्वाणि कर्माणि शुभानि ज्ञानसिद्धये' इत्याद्युक्तव्यवस्थामङ्गीकुर्वन्तीति भावः ।

'तया' भोगैश्वर्यगत्येत्यपि शङ्का स्यात् । सा मा भूदित्याह **यामाहुरिति** ॥

(भा) **यामाहुस्तयेत्यन्वयः** ।

(टी) 'ननु स्वर्ग एव परः पुरुषार्थस्तदन्यं मोक्षाख्यं फलं नास्ति' इति वादिनः ते पुष्पयुक्तामेव वाचं प्रवदन्ति । वस्तुतो मोक्षापेक्षया स्वर्गादेः पुष्पतुल्यत्वादिति भावेन तृतीयपदं व्याचष्टे – **मोक्षफलमिति** ॥

(भा) **मोक्षफलमपेक्ष्य स्वर्गादिपुष्पयुक्तां** वाचं प्रवदन्ति ।

(टी) अविपश्चित्वाविरोधेन तदुत्तरपदमनूद्य व्याचष्टे– **वेदवादरता इति** ॥

(भा) वेदवादरताः **कर्मादिवाचकवेदवादरताः** ।

(टी) ननु ज्ञानोपायत्वेन कर्मणामपि वेदोक्तत्वाङ्गीकारात् कथं तद्रता-नामविपश्चित्वम्? इत्यत आह – **वेदैरिति** ॥

(भा) **वेदैर्यन्मुखत उच्यते तत्रैव रताः** ।

(टी) मुखत इत्यसम्यक्पर्यालोचनयेत्यर्थः ।

उत्तरपदावतारणेनैवैतत्प्रकटयति – **नान्यदिति** ॥

(भा) नान्यदस्तीति वादिनः ।

(टी) अन्यत् मोक्षफलं विष्णुसामीप्यरूपम्, तद्दाता च विष्णु-र्जगत्पतिर्नास्तीति वादिन इत्यर्थः[१] ।

---

१. विष्णुर्जगत्पतिर्नास्तीत्यर्थः । – पा

कथं वेदवादरतानां भगवदभावबुद्धिः? इत्याकाङ्क्षायां तस्यापरोक्षेण वेदैरुच्यमानत्वादित्याद्येतत्सप्रमाणकमाह – **परोक्षविषया इत्यादि** ॥

**(भा) 'परोक्षविषया वेदाः', 'परोक्षप्रिया इव हि देवाः'[१], 'मां विधत्तेऽभिधत्ते माम्'[२] इत्यादिभिः परोक्षेण हि प्रायो[३] भगवन्तं वदन्ति ।**

(टी) इवशब्दस्योभयार्थत्वात्[४] क्वचिदपरोक्षप्रियाश्च[५] । अन्यथा योग्याना-मप्यज्ञानप्रसङ्गात् । अत एवाह – **परोक्षेण हि प्राय इति** ॥ मां प्रति सर्वाणि कर्माणि विधत्ते । यत इन्द्रादिसर्वनामभिर्मामभिधत्ते[६] । अनेन कर्मादि-वाचकसर्ववेदानां [७]परोक्षेण भगवद्वाचकत्वप्रकारो दर्शितः ।

भोगैश्वर्यावगतिरित्यपि प्रतीतिः स्यात्, सा मा भूदित्याह – **तत्प्राप्ति-मिति** ॥

**(भा) भोगैश्वर्यगतिं प्रति तत्प्राप्तिं प्रति ।**

(टी) ननु वेदोक्तानुष्ठानात् भोगैश्वर्यस्यापि सम्भवात्, कोऽयमेवंवादिनां

---

१. बृहदारण्यकोपनिषत् ४/२/२, ऐतरेयोपनिषत् ३/१४
२. भागवते श्रीकृष्णवचनमुद्धवं प्रति ११/२१/४३
३. 'पारोक्ष्येण प्रायः' – प्रचलितपाठः ।
४. किञ्चित्वे चोभयत्वे च संशये सदृशे तथा ।
इवशब्दः प्रयुज्येत न्यक्कारेऽपि च पण्डितैः ॥ इति **कर्मनिर्णयोदाहृतशब्दनिर्णयवचनम्**
५. इवेत्युक्तत्वात् प्राय इत्युक्तम् । तत्र विष्णुसूक्तादिव्यावृत्तये । – **भावप्रदीपिका**
क्वचित् प्रकटवचनादिव इत्युक्तम् । अत एव प्राय इत्याह । – **प्र.दी.**
६. 'मां विधत्तेऽभिधत्ते माम्' इति भागवतवचनार्थं दर्शयति । 'आत्मानमेव लोकमुपासीत', 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'ब्राह्मणो न हन्तव्यः' इत्यादि मामुद्दिश्यैव विधत्ते श्रुतिः । 'न ते विष्णो जायमानो न जातः' 'अग्न इन्द्र वरुण मित्र देवाः' इत्यादि मामभिधत्ते । – तत्त्वप्रदीपिका(१/१/४)
७. **पारोक्ष्येण** – पा

दोषः? इत्याशङ्क्य, ते तु तदेकार्थत्वं वदन्ति, अतो दोषिण इति भावेनाह – **तत्प्राप्तिफला इति ॥**

**(भा) तत्प्राप्तिफला एव वेदा इति वदन्तीत्यर्थः ।**

(टी) एवमवैदिकत्वात् तेषां सम्यग्युक्तिनिर्णयात्मिका बुद्धिर्भगवता न क्रियत इत्याह – **तेषामिति ॥**

**(भा) तेषां सम्यग्युक्तिनिर्णयात्मिका बुद्धिः समाधौ समाध्यर्थे न विधीयते ।**

(टी) सम्यङ्निर्णयस्य समाधानकारणत्वं प्रसिद्धमित्याह – **सम्यङ्निर्णीतार्थानां हीति ॥**

**(भा) सम्यङ्निर्णीतार्थानां हीश्वरे मनःसमाधानं सम्यग्भवति ।**

(टी) भगवत्प्रसाद एव [1]सर्वपुरुषार्थदः, अन्यत् सर्वं तदर्थमिति निर्णये, तत्रैव मनः समाहितं भवति, अन्यथाऽन्यत्र धावतीति प्रसिद्धमिति भावः ।

तत्समाधानमेव मोक्षसाधनमित्येतदपि प्रसिद्धमित्याह – **तद्धीति ॥**

**(भा) तद्धि मोक्षसाधनम् ।**

(टी) अन्यथाऽन्यकरणात् पुनर्बन्धवृद्धेरिति भावः ।

न केवलं युक्तिप्रसिद्धमेव तदुभयमित्याह – **उक्तं चेति ॥**

**(भा) उक्तं चैतदन्यत्र[2] –**

**'न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन् ।**
**स्वप्ने निरुक्त्या गृहमेधसौख्यं न यस्य हेयानुमितं स्वयं स्यात्' इति ॥**

---

१. सम्यक्पुरुषार्थदो – पा.; २. भागवते ५/११/३

(टी) गृहमेधसौख्यमित्युपलक्षणम् । **यस्य पुंसो** भगवतोऽन्यद्यत्किञ्चिदपि तत्सेवाङ्गत्वं विनोपादेयत्वबुद्धिगोचरः **तस्य वरीयस्यो** वेदादिवाचोऽपि तत्त्वं न ग्राहयन्ति, अतोऽसावन्यत्र धावति । कुरुते च तदर्थानि कर्माणि बन्धायेत्यर्थः[१] ॥४२-४४॥

'त्रैगुण्यविषया वेदाः' इत्यादि 'योगमवाप्स्यसि' इत्यन्तं प्रघट्टकमवतारयति – **तामिति** ॥

**(भा) तां योगबुद्धिमाह – त्रैगुण्यविषयाः इत्यादिनेतरदपोह्य ।**

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥४५॥**

(टी) या सम्यग्युक्तिनिर्णयात्मिका बुद्धिरेकैवासद्वाक्यैः[२] सम्मोहितधियां न लभ्यत इत्युक्ता, तामाह । निर्णयात्मिकां बुद्धिमापाद्येत्यर्थः ।

ननु वेदेश्वरः कथं वेदार्थपरित्यागमाचष्टे? इत्यत आह – **वेदानामिति** ॥

**(भा) वेदानां परोक्षार्थत्वात् त्रिगुणसम्बन्धि स्वर्गादि प्रतीतितोऽर्थ इव भवति । 'परोक्षवादी वेदोऽयम्' इति ह्युक्तम् । अतः प्रातीतिकेऽर्थे भ्रान्तिं मा कुर्वित्यर्थः ।**

(टी) **प्रातीतिके** अविचारप्रतीते इत्यर्थः ।

ननु 'त्रैगुण्यविषयाः' इति त्रैगुण्यविषयीकरणं वेदानां प्रतीयते । तत्कथं त्रिगुणसम्बन्धिस्वर्गादिः प्रातीतिकार्थत्वम्? इत्यत आह – **वादो विषयकत्वमिति** ॥

---

१. वरीयसीः वरीयस्यः । सुपां सुलुगित्यादिना जसः पूर्वसवर्णः । वाचो वेदवाचः । स्वप्ने निरुक्त्या स्वप्नप्रतीतार्थदृष्टान्तेन । हेयानुमितं हेयत्वेनानुमितम् । इदमेव हि सम्यङ्निर्णीतार्थत्वं यत् हेयोपादेयविवेकेन हेयहानम् उपादेयोपादानं च । – प्र.दी.

२. बुद्धिरेकैर्वाऽसद्वाक्यैः – पा

(भा) 'वादो विषयकत्वं च मुखतो वचनं स्मृतम्' इत्यभिधानम् ।

(टी) एतदेवाभिधानं मनसि निधाय 'वेदवादरताः' इत्यत्र वेदैर्यन्मुखत उच्यते तत्रैव रताः इति व्याख्यातम्[१] ।

'वेदवादरताः' 'त्रैगुण्यविषयाः' इत्यनयोरुक्तव्याख्यानाङ्गीकारे वेदपक्षस्यैव निषेधः स्यात् । न चासौ वेदेश्वरेण क्रियत इत्याह – नन्विति ॥

(भा) न तु वेदपक्षो निषिध्यते ।

(टी) नापि वेदांशो निषिध्यत इत्याह – वेद इत्यादिना ॥

(भा) 'वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ।'[२]
'सर्वे वेदा यत्पदम्'[३]
'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनो रुचिरेव च ।'[४]
'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ।'[५]
इति वेदानां सर्वात्मना विष्णुपरत्वोक्तेः ।
तद्विहितस्य तद्विरुद्धस्य च धर्माधर्मत्वोक्तेश्च ॥४५॥

(टी) 'वेदे रामायणे' इत्यादिना सर्ववेदानां काण्डत्रयरूपेणापि परब्रह्म-परत्वोक्तेः, तज्ज्ञानाङ्गत्वेन तद्विहितनिषिद्धयोर्धर्माधर्मत्वोक्तेश्च कथं त्रैगुण्य-

---

१. गी.भा. २/४२
२. जिज्ञासाधिकरणभाष्योदाहृतहरिवंशवचनम्
३. कठोपनिषत् १/२/१५
४. मनुस्मृतिः २/६
५. भागवते ६/१/५०

विषयत्वमंशतोऽपि। एवमपि वेदपक्षनिषेधे धर्मब्रह्माद्यभावेन चार्वाकतापत्तिरिति भावः ॥४५॥

ननु यद्यपि त्रिगुणसम्बन्धिस्वर्गादौ भ्रमतां काम्यकर्मिणां ज्ञानाभावेन तत्फलस्य मुक्तेरभावात्, न कामना कार्येत्युच्यते । तथाऽपि काम्यकर्मिणां फलं ज्ञानिनां न भवतीति साम्यमेवेत्याशङ्कापरिहारत्वेनोत्तरश्लोकमवतारयति – **तथाऽपीति** ॥

**(भा) तथाऽपि काम्यकर्मिणां फलं ज्ञानिनां न भवतीति साम्यमेवेत्यत आह** – यावानर्थ इति ॥

**यावानर्थ उदपाने सर्वतः सम्प्लुतोदके ।**
**तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥४६॥**

**(भा) यथा यावानर्थः प्रयोजनम् उदपाने कूपे भवति तावान् सर्वतः सम्प्लुतोदकेऽन्तर्भवत्येव, एवं सर्वेषु वेदेषु यत् फलं तत् विजानतो ज्ञानिनो ब्राह्मणस्य फलेऽन्तर्भवति ।**

(टी) **सर्वेषु वेदेष्विति** ॥ सर्ववेदोक्तकाम्यकर्मस्वित्यर्थः[१] ।

ज्ञानिक्षत्रियव्यावृत्तिर्मा भूदित्याह – **ब्रह्माणतीति**[२] ॥

**(भा) ब्रह्माणतीति ब्राह्मणः । अपरोक्षज्ञानी । स हि ब्रह्म गच्छति ।**

(टी) तर्हि ब्राह्मणपदेनालं किमुत्तरपदेन? इत्यत आह – **विजानत इतीति** ॥

---

१. तदुक्तकाम्यकर्मसु । – **भावप्रदीपिका**
तदुक्तकाम्यकर्मिणामित्यर्थः । – **प्र.दी.**

२. क्षत्रियादिव्यावृत्त्यर्थं न ब्राह्मणपदमित्याह – ब्रह्मेति । – **श्रीपद्मनाभतीर्थाः**
ब्राह्मणस्य इति न क्षत्रियादिव्यावृत्तिः शङ्क्येति भावेनाह – ब्रह्मेति ॥ वर्णविपर्ययो निरुक्तत्वात् । – **प्र.दी.**

(भा) विजानतः इति ज्ञानफलत्वं तस्य[१] दर्शयति ॥४६॥

(टी) परोक्षज्ञानफलत्वमपरोक्षज्ञानस्येत्यर्थः ॥४६॥

.....[२] निन्दा कृता। इतरफलकामे सति ईश्वरमनःसमाधानाभावेनामुक्तिप्रसङ्गादिति । तन्न । 'स्वर्गकामो यजेत' इत्यादौ यागवत् कामस्यापि विहितत्वाद्विहितमनुतिष्ठता मुक्त्यभावोऽपि गुण एव स्यात् । किं तया सुखादिहान्या? इति भावेनाशङ्क्य, तत्परिहारायोत्तरश्लोकमवतार्य व्याचष्टे – **कामात्मनामिति** ॥

(भा) **कामात्मनां निन्दा कृता, कथमेषाम् ? 'स्वर्गकामो यजेत' इत्यादौ कामस्यापि विहितत्वादित्यत आह – कर्मण्येवेति** ॥

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥४७॥**

(टी) **ननु एषां कामात्मनां कथम् 'अविपश्चितः' इत्यादेः निन्दा कृता इत्यनेन सम्बन्धः ।**

(भा) **ते इत्युपलक्षणार्थम् । तव ज्ञानिनोऽपि न फलकामकर्तव्यता । किम्वन्येषाम् । न त्वस्ति केषाञ्चिन्न तेऽस्तीति । स हि ज्ञानी नरांश इन्द्रश्च ।**

(टी) ज्ञानिनोऽप्यकाम्यशुभकर्मभिर्मुक्तावानन्दवृद्ध्युक्तेः तस्यापि न [३]फलकामकर्तव्यता किम्वज्ञानिनां[४] ज्ञानाभावेन मुक्तेरेवाभावप्रसङ्गादिति कैमुत्य-

---

१. 'ज्ञानफलत्वमस्य' इति भावप्रदीपिकासम्मतः ।

२. ग्रन्थपातः स्यादिति भाति । कोशे न तथा दृश्यते । किन्त्वियमानुपूर्वी निबद्धाऽत्र सम्पादकायत्ता । वाक्यापूर्णतामात्रादिदमनुमानम् ।

३. तत्फल० – पा

४. -ज्ञानिना – पा

न्यायेनान्येषामपि फलकामनिषेधोपलक्षणार्थः 'ते' इतिशब्दः । न केषाञ्चिदस्ति फलकामकर्तव्यता ते[१] नास्तीति विशेषप्रतिषेधनार्थः । नरांशयुक्तेन्द्रत्वेन ज्ञानित्वावगमात् तस्य विशेषप्रतिषेधानुपपत्तेरिति भावः[२] ।

नन्विन्द्रत्वादर्जुनोऽपि ज्ञानी चेत्, अर्जुनस्यैव कथं मोहादिर्महाधर्मादौ? इत्यत आह – **मोहादिरिति** ॥

(भा) **मोहादिस्त्वभिभवादेः ।**

(टी) नन्विन्द्रादीनां ज्ञानसिद्धौ पश्चान्मोहादेर्गतिर्वक्तव्या । तदेव कुतः? इत्यत आह – **यदीति** ॥

(भा) **यदि तेषां शुद्धसत्त्वानां न स्याज्ज्ञानम्, कान्येषाम् ?**

(टी) इतोऽपि तेषां ज्ञानं सिद्धमित्याह – **उपदेशादेरिति** ॥

(भा) **उपदेशादेश्च सिद्धं ज्ञानं तेषाम् ।**

(टी) 'एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच'[३] इत्यादिरुपदेशः[४] ।

न केवलं इन्द्रावतारत्वादर्जुनो ज्ञानी, किन्तु ज्ञानिषु गणनाच्च इत्याह – **पार्थेति** ॥

---

१. तव – पा

२. 'नरांशयुक्तेन्द्रत्वेन ज्ञानित्वावगमः' इति तु प्राचीनटीका । – **भावरत्नकोशे**

'हि'शब्दसूचितां प्रमाणप्रसिद्धिमेव दर्शयति – नरांश इति ॥ – **प्र.दी.**

३. **ऐतरेयोपनिषत्** २/४/२

४. 'एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच' इत्याद्युपदेशः । – **भावप्रदीपिका**

'एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच' इत्यादिरुपदेशः । आदिपदेन प्रजापतौ ब्रह्मचर्यम् । – **प्र.दी.**

(भा) 'पार्थार्ष्टिषेण-'[१] इत्यादिज्ञानिगणनाच्च ।

(टी) यद्यप्यस्मिन् श्लोके मा फलेष्वधिकार इत्येवोच्यते न तु कामेष्विति । तथाऽपि अत्र कामनिषेध एव क्रियते 'तस्मान्नेष्टियाजुकः स्यात्'[२] इति श्रुतेः, फलस्य स्वप्रयत्नानधीनत्वेन निषेधायोगादिति भावेनाह – **कामनिषेध इति ॥**

**(भा) कामनिषेध एवात्र । फलानि ह्यस्वातन्त्र्येण भवन्ति ।**

(टी) स्वप्रयत्नानधीनत्वमेव फलस्यान्वयव्यतिरेकाभ्यां दर्शयति – **न हीति ॥**

**(भा) न हि कर्मफलानि कर्माभावे यत्नतोऽपि भवन्ति । भवन्ति च काम्यकर्मिणो विपर्ययप्रयत्नेऽप्यविरोधे ।**

(टी) **अविरोधे** विरोधिभगवदपरोक्षाद्यभावे । अपरोक्षज्ञानिनस्त्वनिष्टपुण्यस्यास्पर्शादिति भावः ।

यत एवं प्राप्तस्य[३] निषेधः, अतः कर्माकरण एव प्रत्यवायोक्तिः, तदभावोक्तिश्च कामाकरणे । न त्वकाम्यफलाप्तौ घटते, यथा[४] भगवदपरोक्षज्ञानादिनेत्याह – **अत इति ॥**

**(भा) अतः कर्माकरण एव प्रत्यवायः । न तु ज्ञानादिना वाऽकामनया वा फलाप्राप्तौ ।**

(टी) यदकरणे प्रत्यवायः तत्रैवाधिकारो नेतरत्रेत्याह **अतः कर्मण्येवेति ॥**

---

१. भागवते २/७/४५
२. बृहदारण्यकोपनिषत् १/५/२
३. कामस्य – पा
४. 'ज्ञानादिना' 'ज्ञाननिषेधेन' इति दृष्टान्तौ – भावप्रदीपिका
'ज्ञानादिना वा' इति । वाशब्द उपमायाम् । – प्र.दी.

(भा) अतः कर्मण्येवाधिकारः ।

(टी) यत्राधिकारः तदेव कार्यं नेतरदित्याह – **अतस्तदेवेति ॥**

**(भा) अतस्तदेव कार्यम् । न तु कामेन ज्ञानादिनिषेधेन वा फलप्राप्तिः ।**

(टी) अत्रापि **ज्ञानादिनिषेधेन** इत्येतद्दृष्टान्तत्वेन[१] ।

ननु यदि कामनिषेधः तर्हि 'स्वर्गकामः' इत्यादीनां का गतिः? इत्यत आह – **कामवचनानामिति ॥**

**(भा) कामवचनानां तु तात्पर्यं भगवतैवोक्तम् – 'रोचनार्थं फलश्रुतिः'[२] 'यथा भैषज्यरोचनम्'[३] इत्यादौ भागवते ।**

(टी) 'गुडकामः पिबौषधम्' इत्यादिवद्यागादिप्ररोचनार्थं स्वर्गकामादिकम्[४] । उत्पन्नरुचिस्तु 'निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्'[५] इत्यादिवाक्यपर्यालोचनया स्वयमेवान्यकामं त्यजतीत्यभिप्रायः ।

यत एवं भैषज्यरोचनवदन्यार्थयागादिरुच्यर्थमुच्यते स्वर्गकामादिपदम् । न तु यागादिकं प्रति स्वर्गादेरेवोद्देश्यत्वेन । अतो यः स्वर्गादिकामः सोऽपि यजेतेति यागोऽस्यैव विधिरयम्, न तु कामी भूत्वेति मा कामस्यापीत्याह – **अत एवेति ॥**

---

१. तत्र दृष्टान्तो 'ज्ञानादिनिषेधेन वा' इति । अत्रापि वाशब्द उपमायाम् । – **प्र.दी.**

२. **भागवते ११/३/४७**

३. **भागवते ११/२१/२३**

४. **स्वर्गकामादिपदम्** – पा

५. निष्कामं ज्ञानपूर्वं च निवृत्तमिति चोच्यते ।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ॥
– इति व्यासस्मृतिवचनत्वेनोदाहृतं गीतातात्पर्ये (५/५), भारतवचनत्वेनान्यत्र, प्रथमपादं भाष्यकारस्तु अनुपदमेवोदाहरिष्यति ।

**(भा) अत एव कामी यजेतेत्यर्थः । न तु कामी भूत्वेत्यर्थः ।**

(टी) ननु यदि वेदादावकाम्यत्वेनापि कर्मणा मुक्तिः स्यात्, तर्ह्यैव कामवचनानां प्ररोचनार्थत्वम्, न तद्दृष्टान्तमात्रेणेत्यत आह – **निष्काम-मित्यादिना** ॥

**(भा) 'निष्कामं ज्ञानपूर्वं च' इति वचनात् ।**

(टी) 'योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा'[1], 'कृपणाः फलहेतवः'[2], 'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा'[3] इत्यादिवक्ष्यमाणवचनेभ्यश्च निष्कामं कर्मावगम्यत इत्याह – **वक्ष्यमाणेभ्यश्च इति** ॥[4]

**(भा) वक्ष्यमाणेभ्यश्च ।**

(टी) सर्वविधिवाक्यान्वयाभावाच्च कामवचनानाम्, क्वचित्कामानां प्ररोचनार्थत्वसिद्धिरिति भावेनाह – **वसन्ते वसन्त इति** ॥

**(भा) 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादिभ्यश्च ।**

(टी) यत एवं फलेऽनधिकारः, अतो न तदुद्देशेन कर्म कुर्वन्तीति भावेन तृतीयांशमवतारयति – **अत इति** ॥

**(भा) अतो मा कर्मफलहेतुर्भूः । कर्मफलं तत्कृतौ हेतुर्यस्य स कर्मफल-हेतुः । स मा भूः ।**

(टी) ननु तर्हीष्टसाधनत्वाभावात् स्वयमनिष्टत्वाच्च[5] कथं कार्यं कर्मेति भावेनाशङ्क्य, साभिप्रायं चतुर्थांशमवतार्य व्याचष्टे – **तर्हीति** ॥

---

१. गी. २/४८; २. गी. २/४९ ३. गी. २/५१

४. एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा इत्यादिवक्ष्यमाणवचनेभ्यश्च । – **प्र.दी.**

५. 'न करोमि स्वयं क्लेशरूपत्वात्' इति भावः । – **प्र.दी.**

(भा) तर्हि न करोमीत्यत आह – मा त इति ॥ **कर्माकरणे स्नेहो माऽस्तु इत्यर्थः ।**

(टी) तदभिप्रायं कथयति – **अन्यफलाभावेऽपीति ॥**

(भा) **अन्यफलाभावेऽपि मत्प्रसादाख्यफलभावात् ।**

(टी) ननु 'मा कर्मफलहेतुर्भूः' इति निषिद्ध्यमानत्वात् कथं भगवत्प्रसादोद्देशेनापि कर्मकरणम्? इत्यत आह – **इच्छेति ॥**

(भा) **इच्छा च तस्य युक्ता । 'वृणीमहे ते परितोषणाय'**[1] **इत्यादिमहदाचारात् ।**

(टी) स्वकृतं सुकृतजातमनूद्य 'तत् सर्वं तव परितोषणाय वृणीमहे' इति महापुरुषाणामाचारदर्शनात्[2] ।

ननु 'कृपणाः फलहेतवः' इति निन्द्यमानत्वात्, कथं प्रसादाख्यफलकामानां महत्त्वम्? इत्यत आह – **अनिन्दनाद्विशेषत इति ॥**

(भा) **अनिन्दनात्, विशेषत इतरनिन्दनाच्च ।**

(टी) नेयं भगवत्कामानां निन्दा, तद्विशेषशब्दाभावादिति भावः ।

इतरफलकामानां तु विशेषतोऽपि निन्दाऽस्तीत्याह – **विशेषत इति ॥** इदं पदमुभयतः सम्बद्ध्यते[3] । 'यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।'

---

१. भागवते ४/३०/४०

२. 'स्वकृतसुकृतजातमनूद्य तत्सर्वं तव परितोषणाय वृणीमहे' इति प्राचीनटीकामनुरुन्धान आह – सकलं कर्मेति । – **भावरत्नकोशे**

'ते तव परितोषणाय सकलं कर्म वृणीमह इति महदाचारेण भगवत्परितोषणस्य कर्तव्यतावगमात्' – **प्र.दी.**

३. नन्वकर्तव्यतायामपि कामनिन्दावचनं प्रमाणमस्तीत्युक्तमित्यत आह – अनिन्दनाद्विशेषत

'कामात्मानः स्वर्गपराः' इति प्रमूढानां 'नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति'[१] इत्यादि निन्दा ।

ननु फलमात्रनिषेधकभगवत्प्रसादाख्यफलकामविधायकयोः प्रामाण्याविशेषात् केनचिद्बाध्यत इत्यत आह – **सामान्यमिति** ॥

**(भा) सामान्यं विशेषो बाधत इति च प्रसिद्धम् – 'सर्वानानय नैकं मैत्रम्' इत्यादौ ।**

(टी) यत एवं सामान्यतः फलकामनिषेधेऽपि 'वृणीमहे' इति[२] महदाचारेण भगवत्प्रसादाख्यफलकामनायामविरोधः, अतो 'नैकात्मताम्' इत्यादिवचनेभ्यो, लोकसिद्धन्यायाच्च, भक्तिज्ञानवैराग्यकामनायाः कर्तव्यत्वमेव सिद्ध्यतीत्याह – **अत इति** ॥

**(भा) अतः 'नैकात्मतां मे स्पृहयन्ति केचित्'[३], 'भक्तिमन्विच्छन्तः'[४], 'ब्रह्मजिज्ञासा'[५], 'विज्ञाय प्रज्ञां'[६], 'द्रष्टव्यः'[७] इत्यादिवचनेभ्यः, स्वार्थसेवकं प्रति न तथा स्नेहः । किं ददामीत्युक्ते सेवादियाचकं प्रति बहुतरः स्नेह इति लोकप्रसिद्धन्यायाच्च भक्तिज्ञानादिप्रार्थना कार्येति सिद्धम् ॥४७॥**

(टी)'नैकात्मताम्' इत्यारभ्य 'भक्तिमन्विच्छन्तो गतिमण्वीं प्रयुङ्क्ते'[८] इति

---

इति ॥ यथा महदाचारो विशेषविषयो न तथा कामनिन्दावचनम् । किन्तु सामान्यविषयमेव । अतो महदाचारेण बाध्यत इति भावः । तर्हि तद्वत् स्वर्गादिकामनाऽपि कार्येति यदुक्तं तत्राह – विशेषत इति ॥ चशब्देन प्रमाणाभावं समुच्चिनोति । –प्र.दी.

१. आथर्वणोपनिषत् १/२/१०
२. इत्यादि – पा
३. भागवते ३/२५/३५
४. भागवते ३/२५/३७
५. ब्रह्मसूत्रम् १/१/१
६. बृहदारण्यकोपनिषत् ६/४/२१
७. बृहदारण्यकोपनिषत् ६/५/६
८. प्रयुङ्क्ते – पा, प्रयुज्य - पा

भक्तेरेष्टव्यत्वमतिसूक्ष्मगतिप्रदानात् प्रतीयते[१] । 'ब्रह्मजिज्ञासा' इत्यादिवचन–त्रयेण ज्ञानस्येष्टव्यत्वं विधीयते । ज्ञातुमिच्छा हि जिज्ञासेति[२] ॥४७॥

ननु मा भूत् विधितः फलेच्छा । तथाऽपि स्नेहादेव तदिच्छति । तत्कथमसौ कर्मफलहेतुर्न स्यात्? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे – **पूर्वश्लोकोक्तमिति** ॥

(भा) **पूर्वश्लोकोक्तं स्पष्टयति** – योगस्थ इति ॥

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥**

(भा) योगस्थः उपायस्थः । सङ्गं फलस्नेहं त्यक्त्वा । तत एव सिद्ध्यसिद्ध्योः समो भूत्वा । स एव च **मयोक्तो योगः** ॥४८॥

(टी) फलेच्छाविध्ययोगादितरफलोद्देशं विनैव कर्म [३]कुर्वन्नेव मत्प्रसादायेत्युक्तं पूर्वत्र । तदेवमधुना स्पष्टयति । यदि फलस्नेहो न स्यात् तर्हि तत्सिद्धावसिद्धौ च समः पुमान् । समत्वमेव भगवत्प्रसादद्वारा ज्ञानोपायः । अतस्तस्मिन्नुपाये मनःकृत्वा विहितानि कर्माणि कुर्वन्नेव[४] फलस्नेहं त्यक्त्वेति ॥४८॥

---

१. 'नैकात्म्यतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः ।
येऽन्योन्यतो भागवताः प्रसज्य सम्भाजयन्ते मम पौरुषाणि ॥
पश्यन्ति मे ते रुचिराण्येव सन्तः प्रसन्नवक्त्रारुणलोचनानि ।
रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति ॥
तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ।
हृतात्मनो हृतप्राणस्य भक्तिमन्विच्छतो गतिमण्वीं प्रयुङ्क्ते ॥– इति मुद्रितपाठः भागवते

२. ननु ब्रह्मजिज्ञासाशब्दो न ज्ञानेच्छापरः । किन्तु विचारस्योपलक्षकः । सत्यम् । तथाऽपि तत्पूर्वको विचारो लक्ष्यते । अन्यथा सम्बन्धाभावात् । – **प्र.दी.**

३. कुर्वेव – पा

४. कुर्वेव – पा

ननु फलत्वाविशेषात् स्वर्गमोक्षयोः, फलोपायज्ञानोद्देशेन कर्मकरणाद्वरं फलोद्देशेन कर्मकरणमिति मन्दाशङ्कां परिहर्तुमुत्तरश्लोकमवतार्य व्याचष्टे – इतश्चेति ॥

(भा) इतश्च योगाय युज्यस्वेत्याह – दूरेणेति ॥

**दूरेण ह्यवरं कर्म बुद्धियोगाद् धनञ्जय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥**

(भा) बुद्धियोगात् ज्ञानलक्षणादुपायात् । दूरेण अतीव । अतो बुद्धौ शरणं ज्ञाने स्थितिम् । फलं कर्मकृतौ हेतुर्येषां ते फलहेतवः ॥४९॥

(टी) न केवलं फलेच्छाविध्ययोगात् ज्ञानेच्छया कर्मकरणम् । किन्तु ज्ञानलक्षणात् मोक्षोपायात् स्वर्गादिसाधनस्य कर्मणः फलतोऽतीव नीचत्वाद-पीतरफलकार्पण्यं हित्वा ज्ञाने स्थितिं मनसः कुर्वित्यर्थः ॥४९॥

ज्ञानादत्यवरत्वात् कर्मणः फलापेक्षया ज्ञाने स्थितिं कुर्वित्युक्तम् । तत्कथम्? इत्याकाङ्क्षायां कर्मी स्वर्गादिभोगानन्तरं निरयाद्यपि गच्छति । ज्ञानी तु तदापादकं सर्वं कर्म हित्वाऽनन्तरं सुखमेवाश्नुत इति भावेनोत्तरश्लोकमवतारयति – ज्ञानफलमिति[१] ॥

(भा) ज्ञानफलमाह – बुद्धियुक्त इति ॥

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥५०॥**

---

१. कथं कर्मणो ज्ञानादतीवावरत्वमित्यतः काम्यकर्मिणः कृपणा दीनाः, 'इमं लोकं हीनतरं वा विशन्ति' इत्युक्तेरित्युक्तम् । तथाऽपि कथं दूरेणावरमित्यपेक्षायां कर्मफलाद्विलक्षणं ज्ञानफलमाहेत्यर्थः । – प्र.दी.

(टी) अत्र कश्चिज्ज्ञानिनः सर्वसुकृतहानिमाचष्टे[१] । न त्वप्रियमानुष्यादिसुकृतहानिमात्रम् । कर्ममात्रस्य फलपाकान्तत्वश्रवणात् । 'पुण्यपापे विधूय' इत्यविशेषणोभयक्षयश्रुतेश्चेति । तन्न युक्तमित्याह – **सुकृतमपीत्यादिना** ॥

**(भा) सुकृतमप्यप्रियं मानुष्यादि जहाति, न बृहत्फलमप्युपासनादिनिमित्तम् – 'न हास्य कर्म क्षीयते'[२], 'अविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति'[३] इत्यादिश्रुतिभ्यः । अतः कर्मक्षयश्रुतिरज्ञानिविषया सर्वत्र । उभयक्षयश्रुतिरप्यनिष्टविषया ।**

(टी) 'स य आत्मानमेव लोकमुपास्ते न हास्य[४] कर्म क्षीयते' इति बहुफलस्योपासनादिनिमित्तस्याक्षयत्वश्रवणात् । 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति' इत्यादिना तत्राज्ञानिकृतहोमयागतपसामन्तवत्वोक्त्या तेषामेव ज्ञानिकृतानामनन्तत्वावगमाच्च । अविदित्वेति विशेषणवैयर्थ्यादन्यथा[५] । आदिशब्देन 'अनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयते' इत्यादेश्च । अतः एतत्पर्यालोचनया, 'अनेवंवित्' इत्यादिविशेषणरहिताऽपि या कर्मक्षयश्रुतिः सा सर्वाऽप्यज्ञानिविषया । 'पुण्यपापे विधूय' इत्यादिकाऽपि 'न हास्य' इत्यादिपर्यालोचनयाऽनिष्टपुण्यविषयेत्यवगम्यते ।

---

१. उभे सुकृतदुष्कृते पुण्यपापे । – **शाङ्करभाष्यम्**
अनारब्धफले जन्मान्तरकृते शुभाशुभकर्मणी । – **भास्करभाष्यम्**

२. **बृहदारण्यकोपनिषत् १/४/१५**

३. **बृहदारण्यकोपनिषत् ३/८/१०**

४. **न ह्यस्य** – पा

५. '' 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति' इत्यादिना तत्राज्ञानिकृतहोमयागतपसामन्तवत्त्वोक्त्या तेषामेव ज्ञानिकृतानामनन्तत्वमवगम्यते । अन्यथा अविदित्वेति विशेषणवैयर्थ्यात्'' इति प्राचीनटीकामनुसृत्याह – अविदित्वेति । – **भावरत्नकोशे**
अत्रापि 'अविदित्वा' इति विशेषणाज्ज्ञानिनः सुकृताक्षयः प्रतीयते । – **प्र.दी.**

किञ्च किमसौ ज्ञानी स्वयमेवेष्टमपि पुण्यं हातुमिच्छति? मुक्तौ बलात् तद्धीयते वा ?[१] न तावदाद्यः । प्रयोजनाभावादित्याह – नहीति ॥

(भा) न हीष्टपुण्यक्षये किञ्चित् प्रयोजनम् ।

(टी) इष्टहानेरमुक्तित्वात् नेतर इत्याह – न चेति ॥

(भा) न चेष्टनाशो ज्ञानिनो युक्तः ।

(टी) न च मुक्तौ पुण्यफलविषयभोगेच्छैव नास्तीति वाच्यम् । बहुश्रुति-विरोधादित्याह – इष्टाश्चेति ॥

(भा) इष्टाश्च केचिद्विषयाः – 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति'[२], 'प्रजापतेः सभां वेश्म प्रपद्ये । यशोऽहं भवानि ब्राह्मणानाम्'[३], 'स्त्रीभिर्वा यानैर्वा'[४], 'अस्माद्ध्येवात्मनो यद्यत् कामयते तत् तत् सृजते'[५] 'कामान्नी कामरूप्यनुसञ्चरन्'[६], 'स एकधा भवति[७]' इत्यादि-श्रुतिभ्यः ।

---

१. युक्तिविरुद्धं च ज्ञानिनः सर्वसुकृतहानम् । तथा हि । उपासनादिजनितं सुकृतं ज्ञानिनः किमिष्टम्? उतानिष्टम्? आद्ये किं तत् तदिच्छया क्षीयते? उत ज्ञानस्वभावात्? आद्यं दूषयति – न हीति ॥ येन ज्ञानी तत्क्षयमिच्छेदिति शेषः । द्वितीयं निराकरोति – न चेति ॥ ज्ञानस्यापुरुषार्थताप्रसङ्गादिति भावः । नान्त्यः । अनिष्टत्वे कारणाभावात् । निष्फलत्वादनिष्टमित्यत आह – इष्टाश्चेति ॥ – प्र.दी.

२. छान्दोग्योपनिषत् ८/२/१

३. छान्दोग्योपनिषत् ८/१४/१

४. छान्दोग्योपनिषत् ८/१२/३

५. बृहदारण्यकोपनिषत् १/१४/१५

६. तैत्तिरीयोपनिषत् ३/१०

७. छान्दोग्योपनिषत् ७/२६/२

(टी) 'प्रजापतेः' [१]इत्यादेर्विरिञ्चोक्तेरयमर्थः । ब्रह्मेशानादीनां प्रजानां[२] पतेर्विष्णोः सभां वेश्म सभागृहं सभां च वेश्म चेति वा प्रपद्ये प्राप्नुयामिति हि तद्भाष्ये[३] । ब्राह्मणादिसर्ववर्णानां मध्येऽहं यशो भवेयम् । धर्मधर्म्यभेदादेव-मुक्तिः । मत्तोऽन्येषां यशो भवेदिति । 'स एकधा भवति त्रिधा भवति' इत्यादिना भूमोपासकस्य फलत्वेन यथाकामं क्रीडोच्यते मुक्तौ[४] ।

(टी) नन्वात्मसुखस्यैव बहुत्वात् किं कर्मसुखेन? इत्यत आह – **बहुत्वेऽपीति ॥**

(भा) **बहुत्वेऽप्यात्मसुखस्य पुनरिष्टत्वात् कर्मसुखे न विरोधः ।**

(टी) ननु प्राकृतकरणरहितस्य[५] कथं भोगशक्तिः? इत्यत आह – **अनुभवशक्तिरिति ॥**

(भा) **अनुभवशक्तिश्चेश्वरप्रसादात् ।**

---

१. इत्यादिविरिञ्चोक्तेः – पा

२. ब्रह्मेशानादिप्रजानां – पा

३. ब्रह्माख्यो भगवान् विष्णुस्तद्वेश्म प्राप्नुयामहम् ।
यशोऽहं सर्ववर्णानां मत्तोऽन्येषां यशो भवेत् ॥ – इति **छान्दोग्योपनिषद्भाष्ये**

४. '' प्रजापतेः ब्रह्मेशादीनां प्रजानां पत्युः विष्णोः सभां वेश्म सभागृहं सभां वेश्म वा प्रपद्ये प्राप्नुयाम्'' इति प्राचीनटीका । ... ''धर्मधर्मिभेदाभावादेवमुक्तिः'' इति तु प्राचीन-टीका । ... ''ब्राह्मणादिसर्ववर्णानां मध्ये अहं यशो भवेयम्'' इति तु प्राचीनटीका । ... '' 'स एकधा भवति स दशधा' इत्यादिना भूमोपासकस्य फलत्वेन यथाकामं मुक्तौ क्रीडोच्यते'' इति प्राचीनटीका । – **भावरत्नकोशे**

यशः यशस्वी । ब्राह्मणानां सकाशात् । मुक्तौ यद्यत् कामयते तत् तत् कर्मास्मात् परमात्मनः सृजते । इष्टविषयप्राप्तिः सुकृतफलमित्येतदप्यनया श्रुत्योच्यते । उपासनादिकमेव ज्ञानी न करोति । कृतेन वा सुकृतं न जायत इत्येतदप्यनया निराकृतम् । – **प्र.दी.**

५. कार्यकरणरहितस्य – पा

(टी) भोगश्रुतेरपि[१] तच्छक्तिः सिद्ध्यतीत्याह – श्रुतेरिति ॥

(भा) श्रुतेश्च ।

(टी) ननु श्रौतविषयाद्यन्तशरीरपातात् पूर्वमेव स्यात् । किमुत्तरत्र शक्तिकल्पनया? इत्यत आह – न चेति ॥

(भा) न च शरीरपातात् पूर्वमेतत् – 'स तत्र पर्येति'[२], 'एतमानन्दमयमात्मानमुपसङ्क्रम्य'[३] इत्याद्युत्तरत्र श्रवणात् ।

(टी) 'अस्माच्छरीरात् समुत्थाय'[३], 'अस्माल्लोकात् प्रेत्य'[४] इत्यादि शरीरपातोत्तरकालीनत्वश्रवणादित्यर्थः ।

ननु स ज्ञानी सगुणब्रह्माप्य, तद्भित्वा ततो निर्गुणमाप्नोति । तेन चैकीभूतोऽमृतः सन् अभिवर्तते । तथा हि मोक्षधर्मे[४] – 'वीतरागान् यतीन्' इत्यारभ्य,

'सत्त्वं वहति शुद्धात्मन् परं नारायणं प्रभुम् ।
प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ।
परमात्मानमासाद्य तद्भूता यतयोऽमलाः ।
अमृतत्वाय कल्पन्ते न निवर्तन्ति चाभितः[५] ।
परमा सा गतिः पार्थ निर्द्वन्द्वानां महात्मनाम् ॥'[६] इति ।

---

१. किञ्च कामरूप्यनुसञ्चरन् इत्यादिलीलाविग्रहग्रहणश्रुतेश्च मुक्तस्य विषयानुभवो युज्यत इत्याह – श्रुतेश्चेति । – प्र.दी.

२. छान्दोग्योपनिषत् ८/१२/३

३. तैत्तिरीयोपनिषत् ३/१०/५

४. समग्रमिदं मोक्षधर्मप्रकरणं ब्रह्मपुराणेऽपि (२४०/७३-९५) पठ्यते मुनीन् प्रति व्यासोपदेशात्वेन ।

५. चाभिभोः – पा

६. भारते शान्ति ३०१/७७-७९

निर्गुणेन चैकीभूतस्य कथं भोगः? इत्याशङ्क्य युधिष्ठिरेण निन्दितत्वात् तदयुक्तमित्याह – न चेति ॥

**(भा) न चैकीभूत एव ब्रह्मणा सः – 'मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत्'[१] इत्यादिनिन्दनान्मोक्षधर्मे ।**

(टी) तथाहि तद्वाक्यम् –

'स्थानमुत्तममासाद्य भगवन्तं[२] स्थिरव्रताः ।
आजन्ममरणं वा ते स्मरन्त्युत न वा न च[३]' इत्यारभ्य
'मोक्षदोषो[४] महानेष प्राप्य सिद्धिं गतानृषीन् ।
यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे ।
प्रवृत्तिलक्षणं धर्मं पश्यामि परमं नृप ।
मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत् ॥'[५]

इति । यदि मुक्तौ न भोगः, तर्हि स्थीयतेऽत्रेति स्थानं परमात्मानमासाद्य, मरणादुपरि पुनरत्र जन्मपर्यन्तं, जन्मप्रभृति पुनर्मरणपर्यन्तं, स्वर्गनरकादौ यत्सुखं दुःखमनुभूतं तत्स्मरन्ति न चास्मरन्ति चेत्, तदा सुखलेशहीनानां नष्टं महत्सुखं स्मरतां वृथा नो मुक्तिरभूदित्यनुतापः स्यात् । न चातीतदुःखं स्मरतां तदा दुःखाभावग्रहणेन[६] पुरुषार्थबुद्धिर्मुक्तौ, दुःखाभावेन पुरुषार्थत्वात् सुखाभावेनापुरुषार्थत्वस्याधिकत्वादिति प्रपञ्चितं श्रीमदनुव्याख्याने[७] ।

---

१. भारते शान्ति ३०१/८३
२. 'भगवतः' – पा
३. न वानघ – इति भावप्रदीपिकायां प्रमेयदीपिकायां च । – भारते शान्ति ३०१/८०
४. मोक्षे दोषो । – प्र.दी
५. भारते शान्ति ३०१/८२-८३; ६. स्वदुःखाभावग्रहणेन – पा
७. सुखादिधर्महानौ तु मुक्तेः किञ्च प्रयोजनम् ।
यद्यर्थो दुःखहानिः स्यादनर्थः सुखनाशनम् ।

अथ न स्मरन्ति तर्हि प्रतियोग्यस्मरणेन दुःखाभावाग्रहणात्, सुखस्यापि स्वभिन्नत्वे मिथ्यात्वात्, स्वाभिन्नत्वे कर्तृकर्मविरोधतोऽग्रहणाच्चापुरुषार्थता मुक्तेः। एवमनिष्टत्वान्मुक्तेः, यदि विज्ञानाख्ये निर्गुणे पूर्वसिद्धानृषीन् परेऽपि मुनयः प्राप्य न निवर्तन्ते, तर्हि महानेषः मोक्षदोषो वा [1]गतिदोषादपि। अत एवं नित्यानिष्टसाधनात् निवृत्तिधर्मादनित्येष्टसाधनं प्रवृत्तिसाधनं प्रवृत्तिधर्मं परं पश्यामि।

न केवलं सुखाग्रहणात् दुःखाभावाग्रहणाच्चानिष्टत्वं मुक्तेः। किन्तु दुःखमेव महत् तत्र किं न [2]भवेदभीष्टस्वपरविषयानुभवाभावेन महदज्ञानार्णवे मग्नस्य चेतनस्य दुःखानुभवरूपेण सदाऽवतिष्ठेतेत्यर्थः।

---

तयोश्च दुःखहानाद्धि सुखनाशोऽधिको भवेत्।
प्राप्यापि दुःखं सुमहत् सुखलेशाप्तये जनः।
यतते सुखहानौ हि को मोक्षाय यतेत् पुमान्।
अल्पाच्च सुखनाशाद्धि बिभेत्यतितरां जनः।
महच्च दुःखमाप्नोति सुखनाशनिवृत्तये।
न च रागनिमित्तं तद्वीतरागा अपि स्पुटम्।
नारदाद्याः सुखार्थाय सहन्ते दुःखमञ्जसा।
युद्धादिदर्शनं यस्मात् सुदुःखेनापि कुर्वते।
यदेन्द्रवैरोचनयोर्ब्रह्मास्त्राभ्यां सुतापिताः।
अपि नैवाजहुर्युद्धरसात् ते नारदादयः।
इति स्कान्दवचस्तस्मात् सुखाभावाय को यतेत्।
विमतो दुःखयुग्यस्माच्चेतनः सन् सुखोज्झितः।
प्रतिपन्नो यथेत्येव चानुमा केन वार्यते।
सर्वश्रुतिपुराणेषु सुखभावोक्तितस्तथा।
मुक्तौ न ग्राह्यमेवैतत् सुखाभावमतं बुधैः। इत्याद्यनुव्याख्याने। ४/२/९५-१०३

१. यदि दोषादपि – पा
२. भवेदतीष्ट० – पा

ननु श्रोतृत्वाद्धर्मजस्य कथं तच्चोद्यमात्रेण तदाचार्योक्तनिर्गुणैक्यनिन्दा? इत्यत आह – **परिहार इति** ॥[१]

**(भा) परिहारे पृथग्भोगाभिधानाच्च ।**

(टी) यं प्राप्यामृताः सन्तो न निवर्तन्ते यतयः स परमात्मा न नारायणादन्यो निर्गुणः । न च तेषां तदैक्यम् । तस्य तेषां च पृथक् पृथक् भोगाभिधानात् परिहारवाक्ये । न हि निर्गुणस्य भोगः । अतस्तद्भूता इति तत्र भूतास्तदाधारा इत्येव स्यात् ।

तथाहि भीष्मवाक्यं 'यथान्याय्यम्'[२] इत्यादि युक्तमुक्तम् । तत्त्वज्ञानिनो[३] वयमिति मन्यमाना अप्यत्र भ्रमन्तीति । तथाऽपि न मेऽत्र भ्रम इत्याह ।

'तथाऽपि तत्त्वं परमं श्रुणु सम्यङ्मयेरितम् ।
बुद्धिं च परमां यत्र कापिलानां महात्मनाम् ।[४]
इन्द्रियाण्यपि[५] बुद्ध्यन्ते स्वदेहं देहिनो नृप ।
करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः ।'[६]

---

१. ननु पूर्वपक्षस्थेन युधिष्ठिरेण निन्दितत्वेऽपि कथं भीष्मेणाचार्येणोक्तमसत् स्यात्? परिहारे तदुक्तदोषस्योद्धारसम्भवादित्यत आह – परिहार इति ॥ **– प्र.दी.**

२. यथान्याय्यं त्वया तात प्रश्नः पृष्टः सुसङ्कटः ।
बुधानामपि सम्मोहः प्रश्नेऽस्मिन् भरतर्षभ ॥ **– भारते शान्ति ३०१/८४**

३. **तत्त्वं ये ज्ञानिनो** – पा

४. नोदाहृतमिदं प्रमेयदीपिकायाम् । अत्राहुः सुमतीन्द्रतीर्थश्रीमच्चरणाः – 'मयेरितमित्यनन्तरं 'बुद्धिं च परमां यत्र कापिलानां महात्मनाम्' इत्यर्धः प्राचीनटीकारीत्या पठितव्योऽपि पृथग्भोगाभिधानादिलक्षणप्रकृतप्रमेये नात्यन्तमुपयोगमावहतीति न पठितः ।' इति ।

५. 'इन्द्रियाणि च' इति भावप्रदीपिकायां प्रमेयदीपिकायां च । अपिशब्दस्त्वत्र व्याख्यातः श्रीनरहरितीर्थश्रीमच्चरणैः ।

६. **भारते शान्ति ३०१/८५,८६**

इति श्रीमत्कपिलप्रोक्तविदामुपास्यं परमं तत्त्वं वासुदेवाख्यं तद्बुद्धिं च परमां श्रुणु । यत्र परमतत्वे स्थितस्य तस्य मुक्तस्य देहिन इन्द्रियाण्यपि बुध्यन्ते पश्यन्ति । तेषामपि चिन्मात्रत्वात् । न तु संसार इव तैरात्मैव बुध्यते । कम् ? स्वदेहं स्वात्मकं देहम् । देहस्यापि चिन्मात्रत्वात् । स्वशब्दवैय्यर्थ्यादन्यथा । स्वदेहं विष्णुमपि बुध्यत इति चापिशब्दान्वयः[१] । सुतरामभौतिकदेहत्वात्, स्वतन्त्रदेहत्वात् स्वरूपप्रदेच्छायुक्तत्वात्, स्वरूपप्रदचेष्टायुक्तत्वाच्च स्वदेहो विष्णुः । तानि इन्द्रियाणि तस्य करणानि तैः स सूक्ष्म आत्मा स्वयं च पूर्वोक्तं पश्यतीति चापिशब्दान्वयः । यैरन्यत् पश्यति तैस्तान्यपि पश्यतीति चापिशब्दान्वयः । नत्विन्द्रियाणामतीन्द्रियत्वं संसार इव । सर्वमेतत् तुशब्देनावधार्यते । न च मुक्तभोगः प्राकृतेन्द्रियापेक्ष इति ज्ञापयितुं तेषां विनाशमाह ।

‘आत्मना विप्रहीणानि काष्ठरूप्यसमानि तु ।
विनश्यन्ति न सन्देहः फेना[२] इव महार्णवे’[३]

इति । प्राकृतेन्द्रियाण्येव भोगसाधनानीति नियमाभावं दर्शयितुं तद्धीनयोरेव प्राणपरमात्मनोर्जीवस्य सुषुप्तौ दर्शनादिसर्वभोगं दर्शयति ।

इन्द्रियैः सह सुप्तस्य देहिनः शत्रुतापन ।
सूक्ष्मश्चरति सर्वत्र नभसीव समीरिणः ।

---

१. प्राचीनटीकायां तु, ‘‘यत्र परमतत्त्वे स्थितस्य मुक्तस्य देहिन इन्द्रियाण्यपि बुध्यन्ते । तेषामपि चिन्मात्रत्वात् । न तु संसार इव तैरात्मैव बुध्यते । कं स्वदेहं स्वात्मकं देहम् । देहस्यापि चिन्मात्रत्वात् स्वरूपभूतदेहत्वात् सुतरामभौतिकदेहत्वात् स्वतन्त्रदेहत्वाच्च । स्वदेहं स्वः स्वात्मा तं ददातीति स्वदा तादृशी ईहा यस्य तं स्वदेहं विष्णुमपि बुध्यन्ते’’ इति व्याख्यातम् । – भावरत्नकोशे

२. फणा – पा

३. भारते शान्ति ३०१/८७

स पश्यति[१] यथान्यायं स्पर्शात् स्पृशति चाभि भोः[२] ।
बुध्यमानो यथा पूर्वमखिलेनेह भारत' इति ।

इन्द्रियाणीह सर्वाणि स्वे स्वे स्थाने यथाविधि ।
अनीशत्वात् प्रलीयन्ते सर्पाहृतविषा इव ॥
इन्द्रियाणां हि सर्वेषां स्वस्थानेष्वेव सर्वशः ।
आक्रम्य गतयः सूक्ष्मश्चरत्यात्मा न संशयः ।
सत्वस्य च गुणान् कृत्स्नान् रजसश्च गुणान् पुनः ।
गुणांश्च तमसः सर्वान् गुणान् बुद्धेश्च भारत ।
गुणांश्च मनसस्तद्वन्नभसश्च गुणांस्तथा ।
गुणान् वायोस्तु धर्मात्मन् तेजसश्च गुणान् पुनः ।
अपां गुणांस्तथा पार्थ पार्थिवांश्च गुणानपि ।
सर्वात्मना गुणैर्व्याप्य क्षेत्रज्ञः स युधिष्ठिर ॥'[३] इति ।

इन्द्रियैः सह सुप्तस्य देहिनः सर्वत्र देहेन्द्रियादौ समीरणश्चरति यथाकाशे स यथा स्वयोग्यं सम्यगेव रूपादीन् पश्यत्यभितः सर्वतः । चशब्दाद्वचनादिकं च करोति । 'विष्णुं तं भूर्भुवरित्येव शंसति' इत्यादेः । बुध्यमानो यथा पूर्वमखिलेनेति ॥ सुप्तेः प्रागिव सर्वं साकल्येन जानन् ।

न च सुप्तौ जीवेन्द्रियकृतः प्राणव्यापार इति भावेनाह– **इन्द्रियाणीति**[४] ॥

'यथाविधि यथोत्पत्तिः[५] यथा सर्पविषाहृताः ।
पुरुषा इव प्राणाग्र्य एवं तस्मिन् पुरे जाग्रति'

---

१. संपश्यति – पा २. चाभितः – पा
३. भारते शान्ति ३०१/८८-९४
४. भारतप्रतीकमिदम्
५. यच्चोत्पत्तिः – पा

इति श्रुतेः । क्षेत्रज्ञात्मा तु भगवान् सर्वेषामिन्द्रियाणामतिगतिराक्रम्य, आ समन्तात् तत्र स्थानेषु निरुध्य, सत्वादिपृथिव्यन्तानां जडानां तदभिमानिचेतनानां च गुणान् स्वगुणैर्ज्ञानादिभिर्व्याप्य साकल्येन सूक्ष्मं यथा भवति तथा चरति भुङ्क्ते अनुभवतीति यावत् । जीवस्यापीषत्क्षेत्रज्ञानात् स एवायं 'क्षेत्रज्ञः' इतिशब्दोक्त इति भ्रमो मा भूदिति भावेन तयोर्भेदमाह –

'आत्मा च याति क्षेत्रज्ञं कर्मणी च शुभाशुभे ।
शिष्या इव महात्मानमिन्द्रियाणि च तं विभो ॥'[१] इति ।

जीवात्मा च परमात्मानं क्षेत्रज्ञसञ्ज्ञं याति सुप्तौ, तं जीवात्मानं तदिन्द्रियाणि तद्धर्माधर्मौ च यान्ति । शिष्या इव महात्मानं गुरुमित्यर्थः । यथाऽयं प्राकृतेन्द्रियपुण्यपापादिसहितो हृदयस्थं क्षेत्रज्ञसञ्ज्ञं याति सुप्तौ, तथा तद्रहितश्च तमेव परमात्मसञ्ज्ञं प्रकृतेः परतः स्थितं याति मुक्तावित्याह –

'प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम् ।
परं नारायणात्मानं निर्द्वन्द्वं प्रकृतेः परम् ॥'[२] इति ।

'आत्मानम्' 'अव्ययम्' 'परम्' 'नारायणात्मानम्' इति परमात्मनो नारायणात्मकत्वोक्त्या नारायणगत्यनन्तरं परमाप्तगत्युक्तिप्राप्तां तयोर्भेदशङ्कामपाकरोति । अतस्तत्र नारायणशब्देन नराणां देहेन्द्रियप्राणानामयनत्वाद्धृद्गतः क्षेत्रज्ञ उच्यते । स देवः स्वप्रतिष्ठितं जीवं मुक्तिकाले स्वयं सर्वगतेन परमात्मनैकीभूतभावं तं प्रापयतीत्यर्थः ।

तमेवं प्राकृतगुणरहितं परमात्मानं स्वयं विशेषतः पुण्यपापमुक्तत्वेन प्रविष्टत्वान्न पुनः संसाराय निवर्तत इत्याह –

---

१. भारते शान्ति ३०१/९५
२. भारते शान्ति ३०१/९६

'विमुक्तः पुण्यपापेभ्यः प्रविष्टं तमनामयम्[१] ।
परमात्मानमगुणं न निवर्तति भारत ॥'[२] इति ॥

एवं प्राकृतदेहेन्द्रियपुण्यपापविनाशेनावशिष्टं [३]परमात्मानमवशिष्टमुक्तजीवस्वरूपभूतानि मनआदीन्द्रियाण्यन्वागच्छन्ति, यथाकालमपेक्षितभोगाय गुरुसन्देशकारिणः शिष्या इवेत्याह –

'शिष्टं त्वत्र मनस्तात इन्द्रियाणि च भारत ।
आगच्छन्ति यथाकालं गुरोः सन्देशकारिणः ॥'[४] इति ।

तदेवं मुक्तौ जीवस्य सर्वगुणरहितवस्त्वैक्येनावस्थानस्य निन्दितत्वात् प्रष्ट्रा तदुपदेष्ट्रा च, जीवपरमात्मनोः प्राकृतदेहेन्द्रियविहीनयोः स्वरूपभूतदेहेन्द्रिययोः पृथक् पृथक् सर्वभोगोक्तेर्न मुक्तौ सर्वभोगाभावः, परमात्मैक्यं वेत्यर्थः ।

जीवन्मुक्तानां भेदद्रष्टृत्वात्[५], भेदेन दृश्यमानत्वाच्च न ज्ञानी ब्रह्मणैकीभूत इत्याह – **शुकादीनामिति** ॥

(भा) **शुकादीनां पृथग्दृष्टेश्च ।**

(टी) परमं ब्रह्म गतानामप्यैश्वर्यमर्यादोक्तेर्नामर्यादैश्वर्यब्रह्मणैकीभूतो[६] ज्ञानीत्याह – **जगद्व्यापारवर्जमिति** ॥

(भा) **'जगद्व्यापारवर्जम्'[७] इत्यैश्वर्यमर्यादोक्तेश्च ।**

(टी) मुक्तानां ब्रह्मसारूप्योक्तेश्च न तेनैकीभाव इत्याह – **इदमिति** ॥

---

१. सम्प्रतिष्ठमनामयम् – पा
२. भारते शान्ति ३०१/९७
३. परमात्मानमाविष्ट – पा
४. भारते शान्ति ३०१/९८
५. भेददृष्टत्वात् – पा
६. -श्वर्येण ब्रह्मणैकीभूतो – पा
७. ब्रह्मसूत्रम् ४/४/१७

**(भा) 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः'[१] इति च ।**

(टी) न हि सरूपयोरैक्यं निर्विशेषाभेदवादिनस्तवेति भावः ।

ननु निर्गुणमुक्तावेव ब्रह्मणैकीभूतो न जीवन्मुक्तौ सगुणमुक्तौ वा, तत्रोपाध्यनाशात्, अतो नोक्तविरोध इत्यत आह – **उपाधिनाश इति** ॥

**(भा) उपाधिनाशे नाशाच्च प्रतिबिम्बस्य ।**

(टी) प्रतिबिम्बत्वादात्मन उपाधिनाशेन[२] नाश एव स्यात्, न तु बिम्बैक्यमित्यर्थः ।

अतीतज्ञानासम्भवाच्च न मुक्तो[३] ब्रह्मणैकीभूतः । तथाहि – स ब्रह्मणः पृथगेवातीतं जानाति तद्रूपेण वा । न तावदाद्य इत्याह – **न चेति** ॥

**(भा) न चैकीभूतस्य पृथग्ज्ञाने मानं पश्यामः ।**

(टी) नापि द्वितीय इत्याह – **आसमिति** ॥

**(भा) 'आसं दुःखी नासम्' इति ज्ञानविरोधाच्चेश्वरस्य ।**

(टी) एकीभूतस्यैवेशस्य 'अहं दुःख्यासम्, न क्वचिदहं दुःख्यासम्' इति ज्ञानविरोधादित्यर्थः ।

न च 'अनेन रूपेण दुःख्यासम्, रूपान्तरेण न' इत्यविरोध इत्यत आह – **अनेनेति**[४] ॥

---

१. गी १४/२

२. उपाधिनाशे – पा

३. मुक्तौ – पा

४. विवक्षाभेदेन भाष्यमिदं व्याख्याय, प्रयोजनविशेषलाभात् विवक्षाविशेषाच्चोदाहृता प्राचीनटीका श्रीजयतीर्थश्रीमच्चरणैः । तथा हि –

''अद्वैतिनस्त्वाहुः । ब्रह्मैकमेव तत्त्वम् । तदेवोपाधिभेदभिन्नं जीवभावं प्रतिपद्यते ।

गगनमिव घटाद्युपाधिभिन्नं घटाकाशादित्वम् । तत्र यस्य जीवस्य ज्ञानमुत्पन्नं स ब्रह्मणैकीभवति । घटनाशे घटाकाश इव महाकाशेनेति । तत्रैके जीवब्रह्मभेदस्योपाधेश्च मिथ्यात्वं मन्यन्ते । अन्ये च सत्यत्वम् । यदा च स ज्ञानी ब्रह्मणैकीभूतस्तदा सकलस्य क्रियाकारकफललक्षणस्य भेदस्य प्रविलयात् कुतो विषयभोगी यदर्थं सुकृतस्यावस्थानमिति । तद्दूषयति – न चेति ॥ एवशब्देन भेदाभेदौ निराकरोति ।

परमात्मानमासाद्य तद्भूता यतयोऽमलाः ।
अमृतत्वाय कल्पन्ते न निवर्तन्ति चाभि भोः ॥

इति भीष्मेण तस्मिन् भूताः तद्भूता इत्यभिप्रायेणोक्ते मुक्तास्तद्ब्रह्मैव भूता इत्यर्थान्तरमाशङ्क्य युधिष्ठिरेण – 'आजन्ममरणं वा ते स्मरन्त्युत न वाऽनघ' इति विकल्प्य पृष्टं यदि ज्ञानिनो मुक्तौ ब्रह्मणैकीभवन्ति तदैवं वाच्यम् । किं ते संसारेऽनुभूतं दुःखं स्मरन्त्युत नेति । आद्यस्य दूषणमुक्तम् –

मोक्षे दोष महानेष प्राप्य सिद्धिं गतानृषीन् ।
यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे ॥

इति । पूर्वं सिद्धिं गतान् ऋषीन् प्राप्य परेऽपि यतयो यदि तत्र मुक्तौ, विज्ञाने विज्ञानेन, प्रागनुभूतदुःखस्य स्मरणेन युक्ता वर्तन्ते तर्हि मोक्षे महानेष प्रसिद्धो दोषः । दोषं च भाष्यकार एव स्फुटीकरिष्यति । द्वितीयोऽपि दूषितः । मग्नस्य हीति । पूर्वानुभूतस्मरणाभावे परेऽज्ञाने मग्नस्य चेतनस्य दुःखतरं दुःखातिशयो न भवेत् किं, भवेदेवेति । तदेवं मोक्षधर्मेऽस्य पक्षस्य निन्दितत्वान्न ज्ञानी ब्रह्मणैकीभूत इत्यर्थः ।

ननु पूर्वपक्षस्थेन युधिष्ठिरेण निन्दितत्वेऽपि कथं भीष्मेणाचार्येणोक्तमसत् स्यात् । परिहारे तदुक्तदोषस्योद्धारसम्भवादित्यत आह – परिहार इति । न मयैतदुक्तम् । किन्तु त्वमन्यथा गृहीत्वा दूषितवानसीत्याशयेन परिहारे, भीष्मेण परमात्मनः पृथक्त्वेन मुक्तानां भोगाभिधानाच्च न ज्ञानी ब्रह्मणैकीभूत इत्यर्थः । तथाहि भीष्मवचनम् –

तथाऽपि तत्त्वं परमं शृणु सम्यङ्मयेरितम् ।
इन्द्रियाणि च बुद्ध्यन्ते स्वदेहं देहिनो नृप ।
करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः ॥

इति । यद्यपीदं दुर्बोधं तथापि स्वः स्वरूपभूतो देहः यस्य तं स्वदेहं परमात्मानं मुक्तान् अन्यान् देहिनो विषयांश्च मुक्तस्येन्द्रियाणि बुद्ध्यन्ते । किं तानि कर्तॄणि? नेत्याह – करणानीति ॥ कस्तर्हि पूर्वार्धस्यार्थः? इत्यत आह – सूक्ष्म इति ॥ इतश्च न ज्ञानिनो

(भा) अनेन रूपेणेति च । भेदाभावात् ।

---

ब्रह्मैक्यमित्याह – शुकादीनामिति ॥

अनेन वाक्यत्रयेण मुक्तानां ब्रह्मभेदे क्रमेण प्रत्यक्षानुमानागमा उपन्यस्ताः । तत्र प्रत्यक्षं न बाधकम् । शुकादयोऽपि यद्यपि ज्ञानिनः, तथापीदानीमविनष्टोपाधित्वात्, तन्निमित्त-भेदवत्तया दृश्यन्ते । प्रारब्धकर्मक्षयादुपाधिनाशे ब्रह्मैव संवृत्ता न पृथग्दृश्यन्त इत्यत आह – उपाधीति ॥ जीवास्तावद्ब्रह्मणः प्रतिबिम्बा इति समर्थितम् । तत्र यदि तदीयस्यो-पाधेर्नाशोऽङ्गीक्रियते तदा तेषां नाशः प्रसज्यते । दर्पणाद्युपाधिनाशे मुखादिप्रतिबिम्ब-नाशादर्शनादित्यर्थः । यच्चोक्तम् 'शुकादयोऽविनष्टोपाधित्वाद्ब्रह्मणः पृथग्दृश्यन्ते' इति तदप्यसदित्याह – न चेति ॥ वस्तुत एकीभूतस्योपाधिनापि पृथग्ज्ञाने न मानं पश्यामः । गगनादिदृष्टान्तस्यासम्मतत्वात् । सत्योपाधिभेदमतस्य चेदं दूषणम् ।

किञ्चौपाधिक एव जीवब्रह्मणोर्भेदो वास्तवं त्वैक्यमिति वदन् प्रष्टव्यः । किं ब्रह्म निर्दुःखं स्वरूपमेवानुसन्धत्ते न जीवगतं दुःखम् । तत् तु जीव एवानुसन्धत्त इति पक्षः ? उत तदपि? इति । आद्यं दूषयति – न चैकीभूतस्येति ॥ हस्तपादाद्युपाधिभेदेऽपि भोक्तुरेकत्वदर्शनादिति भावः । द्वितीयं निराकरोति – आसमिति ॥ लङत्र सर्वकालोप-लक्षणार्थः । जीवरूपेण दुःख्यासं स्वरूपेण तु नेति व्यवस्थयाऽनुसन्धानान्न विरोध इत्यत आह – अनेनेति ॥ इति च न युक्तमिति शेषः । कुत इत्यत आह – भेदेति ॥ उपाधेरभेदकत्वस्योक्तत्वादिति भावः ॥

**अपरे तु** ब्रह्मणैक्यमापन्नस्य मुक्तस्य पूर्वदुःखानुस्मरणमस्ति न वा । नेति पक्षे 'मग्नस्य हि' इत्युक्तो दोषः । आद्ये किमसौ पृथक्स्मरत्युत ब्रह्मात्मक एव । प्रथमस्य दूषणम् – न चैकीभूतस्येति । द्वितीयस्य 'आसम्' इत्यादीति व्याचक्षते । अनेन 'मोक्षे दोषो महानेषः' इत्युक्तो दोषः प्रदर्शितो भवति ।'' इति । **– प्र.दी.**

**अपरे नरहरितीर्थश्रीमच्चरणाः** । नेति पक्ष इति । तथा चोक्तम् – ''अथ न स्मरति पूर्वानुभूतं दुःखं तर्हि दुःखमेव महत्तरं किं न भवेत् । अभीष्टस्वपरविषयानुभवाद्यभावात् इति । मुक्तो ब्रह्मणः पृथगेवातीतं जानाति तद्रूपेण वा । न तावदाद्य इत्याह – न चेति ॥ नापि द्वितीय इत्याह – आसमिति ॥ एकीभूतस्यैवेशस्याहं दुःख्यासं न कदाचिद्दुःख्यासमिति ज्ञानविरोधादित्यर्थः'' इति प्राचीनटीकां निष्कृष्यानुवदति – आसमित्यादि । अत्र पक्षे आसमिति लङो नोपलक्षकत्वम् । प्रतीतार्थ एव सामञ्जस्यादिति ज्ञातव्यम् । अस्मिन् व्याख्याने अन्यदप्यनुकूलमित्याह – अनेनेति ॥ – **भावरत्नकोशे**

(टी) नन्वौपाधिकत्वात् स्वपरभेदस्योपाधिनाशे तज्ज्ञानाभावे नानिष्ट इत्यत आह – **न चेति** ॥

**(भा) न च प्रतिबिम्बस्य बिम्बैक्यं लोके पश्यामः । उपाधिनाशे मानं वा ।**

(टी) न च कस्यचित् प्रतिबिम्बस्योपाधिनाशेऽपि बिम्बैक्यं पश्यामः । जीवोपाधिनाशे प्रमाणं चेत्यर्थः ।[१]

एवमपि स्वपरविषयज्ञानाभावश्चेत्, दोषोऽपि तत्रोक्त इति भावेनाह– **मग्नस्येति** ॥

**(भा) 'मग्नस्य हि परेऽज्ञाने' इति दुःखात्मकत्वोक्तेश्च ।**

(टी) न केवलं जीवोपाधिनाशे मानाभावः । किन्तु नित्यत्वं च तस्योच्यत[२] इत्याह – **यावदिति** ॥

**(भा) 'यावदात्मभावित्वात्'[३] इत्युपाधिनित्यताभिधानाच्च ।**

(टी) यावत्परमात्मभावित्वात् जीवोपाधेः, न तद्विनाशोर्ध्वं जीवस्य बिम्बैक्यं पृथज्ज्ञानाभावो वा नाशङ्कनीय इत्यर्थः ।

ननु -

'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥'[४]

---

१. न पश्याम इत्यनुवर्तते । – प्र.दी.
२. नित्यत्वं तस्योच्यते – पा
३. ब्रह्मसूत्रम् २/३/३०
४. मनुस्मृतिवचनमिदम् (४/३७)

[१]इत्यत्रोद्यदादाविवोदकस्थेऽप्यादित्यादिशब्दोक्तेः सत्यप्युपाधौ बिम्बप्रतिबिम्बैक्यावगमात् न जीवोपाधिनित्यत्वेऽपि बिम्बैक्यविरोध इत्यत आह – अत इति ॥

**(भा) अतोऽन्यवचनं प्रतीयमानमप्यौपचारिकम् ।**

(टी) यतो यावदुपाधि प्रतिबिम्बस्य बिम्बत्वं न प्रतीयते तदूर्ध्वं च नश्यत्येवादित्यादिप्रतिबिम्बः । अतस्तस्य बिम्बत्वं[२] प्रतीयमानमपि प्रतिमास्विवौपचारिकमित्यर्थः[३] ।

ननु यदि मुक्तावपि केनचिदुपहितास्तर्हि प्रागिव ते किमिति पृथङ्न दृश्यन्त इत्यत आह – **दृष्टाश्चेति** ॥

**(भा) दृष्टाश्च ते भगवतो भिन्ना नारदेन ।**

(टी) तथाहि मोक्षधर्मे[४] श्रीभीष्मः –

'प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः ।
ददर्श तानेव राजन्[५] श्वेतांश्चन्द्रप्रभान् शुभान्'[६] इति ।

---

१. इत्यत्रोद्यद्यदादा० – पा
२. विम्वत्ववचनं – पा
३. प्राचीनटीकायां तु " 'नेक्षेत' इति स्मृतावुद्यदादाविवोदकस्थेऽप्यादित्यशब्दप्रयोगदर्शनेन सत्यप्युपाधौ बिम्बप्रतिबिम्बैक्यावगमान्न जीवोपाधिनित्यत्वेऽपि बिम्बैक्यविरोध इत्यत आह – अत इति ॥ यतो यावदुपाधिप्रतिबिम्बस्य बिम्बत्वं प्रतीयते अत ऊर्ध्वं नश्यत्येवादित्यादिप्रतिबिम्बम् । अतस्तस्य प्रतिबिम्बस्य स्मृत्या प्रतीयमानमपि बिम्बत्वं प्रतिमादाविवौपचारिकं व्याख्येयम्" इति 'अतः' इत्यादिभाष्यं व्याख्यातम् ।
– भावरत्नकोशे
४. ते निवृत्तसकलकर्माणो मुक्ताः । एतच्च मोक्षधर्मे स्पष्टमुक्तम् । – प्र.दी.
५. नरान् – पा
६. भारते शान्ति ३३८/१

मुक्तान् दृष्ट्वा स्तुत्वा देवं तं च ददर्शेत्याह –

"एवं स्तुतः सन् भगवान् गुह्यैस्तस्योच्चनामभिः[१] ।
तं मुनिं दर्शयामास नारदं विश्वरूपधृक् ।
किञ्चिच्चन्द्राद्विशुद्धात्मा किञ्चिच्चन्द्राद्विशेषवान्"[२] इत्यादि ।

न केवलं पृथग्दृष्टास्ते, किन्तु श्रुता अपि प्रतिशाखं पृथगित्याह – **प्रतिशाखं चेति** ॥

**(भा) प्रतिशाखं च 'स एकधा'[३] इत्यादिषु भेदेन प्रतीयन्ते ।**

(टी) 'स एकधा भवति, त्रिधा भवति' इत्यादि भूमोपासकानां मुक्ता-वैश्वर्यम् । आदिशब्देन 'सर्वान् कामानास्वाऽमृतः समभवत्', 'कामान्नी कामरूप्यनुसञ्चरन्' इत्यादि[४]।

ननु कथमेषां भेदसाधकत्वम्? 'परेऽव्यये सर्व एकीभवन्ति'[५] 'ब्रह्म वेद ब्रह्मैव भवति'[६] इत्यादिविरोधादित्यत आह – **विरोध इति** ॥

**(भा) विरोधे तु युक्तिमतामेव बलवत्त्वम् ।**

(टी) युक्तिमन्ति च भेदवाक्यान्येवेत्याह – **युक्तयश्चेति** ॥

**(भा) युक्तयश्चात्रोक्ताः 'मग्नस्य हि' इत्यादयः ।**

---

१. गुह्यैस्तथ्यैश्च नामभिः – पा
२. भारते शान्ति ३३९/१,२
३. छान्दोग्योपनिषत् ७/२६/२
४. "आदिशब्देन 'सर्वान् कामानास्वाऽमृतः समभवत् । कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिश्रुतिपरिग्रहः" इति प्राचीनटीका । – भावरत्नकोशे
५. आथर्वणोपनिषत् ३/२/७
६. आथर्वणोपनिषत् – ३/६/९

(टी) जीवन्मुक्तानां पृथग्दर्शनात्, मुक्तानां जगद्व्यापारराहित्यम्, ब्रह्मसारूप्यम्, 'आसं दुःखी' इति ज्ञानान्यथानुपपत्तिश्च, लौकिकप्रतिबिम्बाना-मुपाधिनाशेऽपि ब्रह्मैक्यादर्शनं, स्वरूपनाशश्च, नित्योपाधिश्च जीवानाम् – इत्याद्यभेदबाधका भेदसाधका आदिशब्दोक्ताः[१] ।

न चैतावतैक्यश्रुतिर्निर्विषया, सारूप्यविषयत्वादित्याह – **अत** इति ॥

**(भा) अतो जले जलैकीभाववदेकीभावः ।**

(टी) न केवलं न्यायाप्तेयं व्यवस्था, किन्तु श्रौताऽपीत्याह – **उक्तं चेति** ॥

**(भा) उक्तं च – 'यथोदकं शुद्धे शुद्धम्'[२], 'यथा नद्यः'[३] इत्यादौ ।**

(टी) ननु उदकस्योदकान्तरेण तादात्म्यमेव न सारूप्यमित्यत आह – **तत्रापीति** ॥

**(भा) तत्राप्यन्योन्यात्मकत्वे वृद्ध्यसम्भवः ।**

(टी) नन्वल्पोदक एव वृद्धिर्दृश्यते न तु[४] ब्रह्मदृष्टान्ते समुद्र इत्यत आह – **अस्तीति** ॥

**(भा) अस्ति चेषत् समुद्रेऽपि द्वारि । महत्त्वादन्यत्रादृष्टिः ।**

---

१. ''मुक्तानां जगद्व्यापारराहित्यम्, ब्रह्मसारूप्यम्, 'आसं दुःखी नाऽसम्' इतीश्वर-ज्ञानान्यथानुपपत्तिः, प्रतिबिम्बानामुपाधिनाशेऽपि ब्रह्मैक्यादर्शनं, स्वरूपानाशश्च, उपाधिनित्यत्वम् – इत्याद्या अभेदबाधिका भेदसाधिकाश्चादिशब्दोक्ता युक्तयः'' इति प्राचीनटीका । **– भावरत्नकोशे**

उपलक्षणमेतत् । प्रत्यक्षानुकूल्यं च भेदवाक्यानां प्राबल्याय ग्राह्यम् । **– प्र.दी.**

२. **कठोपनिषत्** २/१/१५

३. **आथर्वणोपनिषत्** ३/२/८

४. क्वचित् 'तु' इति नास्ति ।

(टी) यद्यपि महत्वेनान्यत्र समृद्धवृद्धिर्न दृश्यते स्थूलदृष्टिभिः[१], तथाऽपि द्वारदेशे दृश्यत एवेत्यर्थः ।

न केवलं वृद्ध्यन्यथानुपपत्त्या संश्लिष्टानामपां भेदानुमानम्, किन्तु पुनर्विश्लेषदर्शनाच्चेत्याह – ता एवेति ॥

**(भा) 'ता एवापो ददौ तस्य स ऋषिः शंसितव्रतः' इति महाकौर्मे ।**

(टी) या इन्द्रकमण्डलुस्था आपः, स्वकमण्डलौ निक्षिप्तास्ता एव तस्य ददौ वसिष्ठ इत्यर्थः[२] ।

महानद्योऽपि हि[३] परस्परमेकीभूय पुनर्वियुज्य समुद्रं गच्छन्ति । न केवलं पुनर्विश्लेषात् पूर्वभेदानुमानम् । किन्तु तदाऽपि भेदं पश्यन्ति केचिदित्याह – **समर्थानामिति**[४] ॥

---

१. स्थूलदृग्भिः – पा

२. या इन्द्रकमण्डलोरादाय स्वकमण्लूदके क्षिप्तास्ता एवापस्तस्येन्द्रस्य ददौ वसिष्ठः । **– प्र.दी.**

३. क्वचित् 'हि' इति नास्ति ।

४. 'ता एवापो ददौ तस्य स ऋषिः शंसितव्रतः' इति महाकौर्मे । समर्थानां भेदज्ञानाच्च इति योगविभागमङ्गीकृत्य व्याख्यातं प्राचीनटीकायां भावप्रदीपिकामनुसृत्य, प्रमेयदीपिकायां तु एकवाक्यत्वेन व्याख्यातम् । (अस्मत्सम्पादितपद्मनाभतीर्थीयभावप्रदीपिकासहित-गीताभाष्यपुस्तके-२००७(पृ.७१) 'प्रमेयदीपिकायां तु एकवाक्यत्वेन व्याख्यातं भावप्रदीपिकामनुसृत्य' इति प्रामादिकम्).

न केवलं वृद्धिसम्भवाज्जलभेदः, किन्तु विभागाच्चेत्याह – ता एवेति । संश्लेषकाले भेदेन प्रतीतत्वान्न च जलैक्यमित्याह – समर्थानामिति ॥ **– भावप्रदीपिका**

''प्राचीनटीकायां तु 'महापोऽपि परस्परमेकीभूय पुनर्वियुज्य समुद्रं गच्छन्ति । न केवलं पुनर्विश्लेषात् पूर्वं भेदानुमानम्, किन्तु तदाऽपि भेदं पश्यन्ति केचिदित्याह – समर्थानामिति । इति वाक्यभेदेन व्याख्यातम् ।'' **– भावरत्नकोशे**

'.... इति महाकौर्मवचनात् समर्थानां वसिष्ठादीनां जलभेददर्शनाच्च ।'–

(भा) समर्थानां भेदज्ञानाच्च ।

(टी) सममेतद्ब्रह्मसंयुक्तेष्वपि । ब्रह्मेशादिसुराणामपि मुक्तौ विष्णुत्वनिषेधादप्यैक्यवाक्यानामियमेव गतिरित्याह – **नैवेति** ॥

(भा) 'नैव तत् प्राप्नुवन्त्येते ब्रह्मेशानादयः सुराः ।
यत् ते पदं हि कैवल्यम्'[१] इति निषेधाच्च नारदीये ।

(टी) 'बहवः'[२] इत्यादिविचारपूर्वं भेदस्यैव निर्णीतत्वाच्च न स्वरूपैक्यमैक्यवाक्यार्थ इत्याह – **सविचारश्चेति**[३] ॥

(भा) सविचारश्च निर्णयः कृतो मोक्षधर्मेषु ।

(टी) ननु 'बहवः' इत्यादिवाक्यमप्यैक्यवाक्येन बाधितं किं न स्यात्? इत्यत आह – **बलवानिति** ॥

(भा) बलवांश्च सविचारो निर्णयो वाक्यमात्रात् ।

---

– इति प्रमेयदीपिकायां

१. ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते ।
तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे ॥ इति तत्त्वोद्योतोदाहृतहिरण्यगर्भवचनम् ।

२. जनमेजय उवाच –
बहवः पुरुषा ब्रह्मन् उताहो एक एव तु ।
को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति ॥
वैशम्पायन उवाच –
नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।
बहूनां पुरुषाणां हि यथैका योनिरुच्यते ॥
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ॥ – भारते शान्ति ३५०/२-३

३. इतोऽपि भेदपक्षो बलवानिति वक्तुमाह – सविचारश्चेति ॥ पूर्वोत्तरबलाबलचिन्ता विचारः । निर्णयो जीवेशभेदावधारणम् । 'बहवः पुरुषा ब्रह्मन्' इत्यादिनेति शेषः ।
– प्र.दी.

(टी) यतः सर्वजगदुत्पत्त्यादिकारणस्वतन्त्रपुरुषैक्यं सविचारान्निर्णया-दवसीयते । अतस्तदनुसारेण स्वतन्त्रान्यनिषेध[१] एवान्येनापि वाक्येन । न त्वन्यमात्रनिषेध इत्याह – **अत इति** ॥

**(भा) अतो 'यत्र नान्यत् पश्यति'[२] इत्याद्यपि तदधीनसत्तादिवाचि ।**

(टी) तदन्यस्यैव निषेधे कथं सर्ववेदोक्तं सर्वैश्वर्यसर्वज्ञत्वादिकं स्यात्? ईशितव्यज्ञेयाद्यभावादिति भावेनाह – **अन्यथेति** ॥

**(भा) अन्यथा कथमैश्वर्यादि स्यात्?**

(टी) नन्वन्योपाधिकत्वान्मायामयं तदित्याशङ्क्य, तन्निरस्तं पुरस्तादित्याह – **न चेति** ॥

**(भा) न च तन्मायामयमित्युक्तम् ।**[३]

(टी) इतोऽपि नित्यवशीकृताशेषचेतनाचेतनत्वमेव भूमलक्षणत्वेनोच्यते 'यत्र नान्यत् पश्यति' इत्यादिना । न तु तदन्यचेतनाचेतनाभावः । तथा सति तज्ज्ञानेन विमुक्तानां तत्प्रकरण एव 'स एकधा भवति त्रिधा भवति' इत्यादि पृथगैश्वर्यवचनानुपपत्तेरित्याह – **अन्यथा कथं तत्रैवेति**[४] ॥

**(भा) अन्यथा कथं तत्रैव 'स एकधा' इत्यादि ब्रूयात्?**

(टी) ननु नारददृष्टा 'स एकधा' इत्यादि प्रतिशाखमुच्यमानाश्च

१. स्वतन्त्रान्यत्वनिषेध – पा
२. छान्दोग्योपनिषत् ७/२४/१
३. गीताभाष्ये २/२४
४. यदि भूमाऽद्वितीयः स्यात्, तर्हि कथं तज्ज्ञानान्मुक्तस्य 'स एकधा' इत्यादि भेदेनावस्थानं श्रुतिर्ब्रूयात् । न तद्भूमज्ञानफलम् । किन्तु सगुणविद्योपासनफलमित्यत उक्तम् – तत्रैवेति ॥ भूमप्रकरण एव । – प्र.दी.

सशरीराः । सशरीराणां च 'न ह वै सशरीरस्य'[१] इत्यादिना प्रियाप्रियानपहत्युक्तेः संसारित्वम् । अतो न किञ्चिन्मुक्तभेदे प्रमाणमित्यत आह – न चेति ॥

(भा) न च 'न ह वै सशरीरस्य' इत्यादिविरोधः । वैलक्षण्यात् तच्छरीराणाम् ।

(टी) किं तद्वैलक्षण्यम्? येनाप्रियायोगः सर्वथेत्यत आह – अभौतिकानीति ॥

(भा) अभौतिकानि हि तानि नित्योपाधिनिर्मितानीश्वरशक्त्या ।

(टी) तत्र प्रमाणमाह – तथा चेति ॥

(भा) तथाचोक्तम् – 'शरीरं जायते तेषां षोडश्या कलयैव तु' इत्यादि नारायणकल्पे ।

(टी) चशब्दात् 'अन्यं नवतरं कल्याणतरं रूपं कुरुते' इति श्रुतावप्युक्तमिति सूचयति । अवश्यजीवरूपचिद्रूपोपाधिरेव षोडशी कलोच्यते ।

ननु मुक्तानामपि देहवत्त्वे 'अशरीरं वाव सन्तम्' इति कथं तदभावोक्तिः? इत्यत आह – वदन्ति चेति ॥

(भा) वदन्ति च लौकिकवैलक्षण्येऽभावशब्दम् – 'अप्रहर्षमनानन्दम्', 'सुखदुःखबाह्यः' इत्यादिषु ।

(टी) न केवलं लौकिकशरीरवैलक्षण्यादशरीरत्वं मुक्तशरीराणाम् । किन्तु 'शीर्यत इति शरीरम्' इति वेदोक्तनिरुक्त्यभावाच्चेत्याह – निरुक्त्यभावादिति ॥

---

१. छान्दोग्योपनिषत् ८/१२/१

(भा) निरुक्त्यभावाच्च न तानि शरीराणि । तथाहि श्रुतिः – 'अशारीतीऽ तच्छरीरमभवत्' इति ।

(टी) 'विमतं शीर्यं स्यात् करचरणादिमत्त्वात्, सम्मतवत्' इत्यनुमानं त्वागमविरुद्धमित्याह[१] – न हीति ॥

(भा) नहि तानि शीर्णानि भवन्ति । 'सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च'[२] इत्यादिवचनात् ।

(टी) ननु मुक्तस्वरूपस्य ज्ञानानन्दादिलक्षणस्याभौतिकत्वेन लौकिक-शरीरवैलक्षण्यात्, निरुक्त्यभावाच्च, कथं तत्र शरीरशब्दप्रयोगः? इत्याशङ्क्य, करचरणादिमत्वसादृश्याद्युज्यत इत्याह – साम्यादिति[३] ॥

(भा) साम्यात् प्रयोगः ।

(टी) इतोऽपि न 'शरीरं वाव' इत्यादिश्रुतिर्मुक्तानां करचरणाद्यभाव-माचष्टे । नारदैकतादिभिः(?) दृष्टदेहेष्वेव तेष्वशरीरशब्दप्रयोगदर्शनादित्याह – प्रयोगाच्चेति ॥

(भा) प्रयोगाच्च –

'अनिन्द्रिया अनाहारा अनिष्पन्दाः सुगन्धिनः'[४],
'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्'[५] इत्यादि दृष्टदेहेष्वेव ।

---

१. वाऽऽगमविरुद्ध० – पा
२. गी. १४/२
३. कथं तर्हि तच्छरीरे 'शरीरं जायते तेषाम्' इति प्रयोग इत्यत आह – साम्यादिति ।
– भावप्रदीपिका
४. भारते शान्ति ३३५/१३
५. भागवते ७/१०/३४

(टी) ननु या श्वेतद्वीपवासिनां भिन्नत्वेन दृष्टानां मुक्तिः सा गौणी मुख्यमुक्तेरन्या । मुख्यायां तु मुक्तौ सायुज्यलक्षणायां न भेद इत्याशङ्क्य, आदित्यपुराणे तदन्यमुक्तिनिषेधात् सैव सायुज्यलक्षणमुक्तिरिति भावेनाह – न चेति ॥

(भा) नचैषाऽन्या गौणी मुक्तिः ।

'बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति ।
योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः'

– इत्यादित्यपुराणे तदन्यमुक्तिनिषेधात् ।

(टी) ननु जयादीनामत्रैव भगवत्प्रवेशोक्तेः, कथं श्वेतद्वीपगमनं विना न मुक्तिः? इत्यत आह – ये त्विति ॥

(भा) ये त्वत्रैव भगवन्तं प्रविशन्ति तेऽपि पश्चात् तत्रैव यान्ति ।

(टी) ननु तथाऽपि 'केचिदत्रैव मुच्यन्ते'[१] इत्याद्युक्तेः कथं सर्वेषां तद्गमनं विना न मुक्तिरित्यत आह – योग्यत्वं चेति ॥

(भा) योग्यत्वं चात्र विवक्षितम् ।

---

१. ॐ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॐ (ब्र.सू. ४/४/१९)

तत्र भाष्योदाहृतगारुडवचनम् –

केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ।
अत्रैव च स्थितिस्तेषामन्तरिक्षे तु केचन ।
केचित् स्वर्गे महर्लोके जने तपसि चापरे ।
केचित् सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् ।
तत्रापि क्रमयोगेन ज्ञानाधिक्यात् समीपगाः ।
सालोक्यं च सरूपत्वं सामीप्यं योग एव च ।
इमामारभ्य सर्वत्र यावत्सु क्षीरसागरे ।
पुरुषोऽनन्तशयनः श्रीमन्नारायणाभिधः ॥

(टी) महाज्ञाना हि तद्योग्याः । तेषामेव तद्गमनं विना न मुक्तिरिति भावः[१]।

न च ब्रह्मणैकत्वमेव[२] सायुज्यम् । विरुद्धगुणयोरेकत्वायोगात् । न च तदर्थत्वेन ज्ञानादिसर्वगुणाभावो ब्रह्मणः कल्प्यः । तथाविधैक्यस्य युधिष्ठिरकृतप्रश्ने 'मग्नस्य हि' इत्यादिना निन्दितत्वादित्याह – युधिष्ठिरेति[३] ॥

(भा) युधिष्ठिरप्रश्न इतरनिन्दनाच्च ।

(टी) ननु 'सारूप्यैकत्वमित्युत'[४] इत्यादावेकत्वशब्देन सायुज्योक्तेः कथं

---

१. प्राचीनटीकायां तु ''ननु जयादीनामत्रैव भगवत्प्रवेश उक्तः, कथं श्वेतद्वीपगमनं विना न मुक्तिरित्यत आह – ये त्विति ॥ ननु तथाऽपि 'केचिदत्रैव मुच्यन्ते' इत्याद्युक्तेः कथं सर्वेषां तद्गमनं विना न मुक्तिरित्यत आह – योग्यत्वं चेति ॥ महाज्ञाना हि तद्योग्याः । तेषामेव तद्गमनं विना न मुक्तिरिति भावः'' इति 'ये तु' इत्यादिभाष्यं महाज्ञानानामेव श्वेतद्वीपगमनं नेतरेषाम्' इति व्याख्यातम् । 'बहुनाऽत्र' इति वचने योगीति पदं च महाज्ञानपरमित्यभिसंहितमिति प्रतीयते । तत्रायं भावः । महाज्ञानानामेव श्वेतद्वीपगमनेन तत्र सायुज्यादिलक्षणमुक्तिः । इतरेषां 'केचिदत्रैव मुच्यन्ते' 'निर्दुःखास्तु धरादिषु' इत्यादिशास्त्रप्रतिपाद्यानां तु सकृच्छ्वेतद्वीपगमनं तद्गतभगवद्दर्शनं चानुमतमेवेति । तथा च तत्त्वप्रदीपिका 'केचिदत्रैव' इति श्लोकव्याख्यानावसरे – सृष्टौ सकृच्छ्वेतद्वीपगमनात् परस्ताद्देशान्नोत्क्रामन्तीत्यर्थः । अन्यथा 'बहुनाऽत्र किमुक्तेन' इत्यादिवचनविरोधात्'' इति । – भावरत्नकोशे

ननु शिशुपालादयः श्वेतद्वीपगमनेन विनाऽत्रैव भगवन्तं प्रविश्य मुच्यन्ते । तत्कथमेतदित्यत आह – ये त्विति । ते न तदा मुच्यन्त इति शेषः । तर्हि कदेत्यत आह – तेऽपीति ॥ ततो मुच्यन्त इति शेषः । ननु केचिदत्रैव मुच्यन्ते इत्याद्युक्त्वा 'महाज्ञाना गच्छन्ति क्षीरसागरम्' इति महायोग्यतावतामेव श्वेतद्वीपगमनोक्ते कथमयं नियम इत्यत आह – योग्यत्वं चेति ॥ अत्र निवास इति शेषः । अस्ति सर्वेषां श्वेतद्वीपप्राप्तिः । महाज्ञानत्वलक्षणं योग्यत्वं त्वत्र निवासे विवक्षितमित्यर्थः । – प्र.दी.

२. **ब्रह्मणैक्यमेव** – पा

३. नन्विदं वाक्यं श्वेतद्वीपप्राप्तिं विना सगुणमुक्तिर्नास्तीत्येतत्परम् । निर्गुणमुक्तिस्त्वन्याऽस्तीत्यत आह – युधिष्ठिरेति ॥ – प्र.दी.

४. भागवते ३/३०/१३

भेदसायुज्यम्? इत्याशङ्क्य भेद एव सायुज्यं सदृष्टान्तं सप्रमाणकमाह – **सायुज्यं चेति ॥**

**(भा) सायुज्यं च ग्रहवत् । तदुक्तेश्च –**

**'भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः ।**
**तथा मुक्तावुत्तमायां बाह्यान् भोगांस्तु भुञ्जते'**

**– इति नारायणाष्टाक्षरकल्पे ।**

(टी) अतः स्वरूपभेदे विद्यमानेऽप्येकत्वशब्दो न विरुद्धः । बाह्यानपि कांश्चिद्विनेत्यभिप्रायः[1] ।

उभयक्षयश्रुतिरप्यनिष्टविषया इत्याद्युक्तमुपसंहरति – **अत इति**[2]॥

**(भा) अतोऽनिष्टस्यैव वियोगः ।**

(टी) यथा 'जहातीह उभे सुकृतदुष्कृते' इत्युक्तेऽपि कस्यचित्सुकृतस्यावशेषः, तद्वदनिष्टस्यापि कस्यचित् कथञ्चिदवशेषः किं न स्यात्? इत्याशङ्क्य, बहुश्रुतिविरोधान्नेत्याह – **सोऽपीति ॥**

---

१. बाह्येष्वपि विभागो वचनान्तरादवसेयः । – प्र.दी.

'भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः ।
तथा मुक्तावुत्तमायां विष्णुमाविश्य भुञ्जते ॥
विष्णोर्वशाश्च ते सर्वे सर्वदा दुःखवर्जिताः ।
न तु विष्णुगुणान् सर्वे भुञ्जते ते कदाचन ॥
बाह्यान् भोगान् भुञ्जते च तारतम्येन कांश्चन ।
विष्णोर्देहाद्बहिश्चापि निर्गच्छन्ति यथेष्टतः ॥'

– इत्यैतरेयोपनिषद्भाष्योदाहृतस्कान्दपुराणवचनम् वेणुपल्लिटिप्पण्यामुदाहृतम्

२. अत इतीति तु प्राचीनटीकासङ्कोचः । – भावरत्नकोशे

'सुकृतमप्यप्रियम्' इत्यादिनोक्तमर्थमुपसंहरति – अत इति ॥ – प्र.दी.

(भा) सोऽस्त्येव सर्वात्मना – 'अदुःखम्', 'सर्वदुःखविवर्जिताः', 'अशोकमहिमम्', 'यत्र गत्वा न शोचति'[१] इत्यादिभ्यः ।

(टी) नन्वासां वाचां प्राचुर्याभिप्रायेण सङ्कोचः किं न स्यात्? इत्याशङ्क्य, अल्पदुःखप्रतिपादकविशेषवचनाभावेन तत्सङ्कोचायोगादिति भावेनाह – विशेषेति[२] ॥

(भा) विशेषवचनाभावाच्च ।

(टी) ननु भगवत्प्राप्तावपि सङ्कर्षणादीनां [३]बललक्ष्मणादिस्वरूपेष्वीषदनिष्टं श्रूयते[४] । अतस्तदेव सङ्कोचे मानमित्याशङ्क्य प्रारब्धफलमेव तत् तेषाम् । तद्धानौ न किञ्चिदनिष्टमित्येतत् सप्रमाणकमाह – येषामिति ॥

(भा) येषां त्वीषद्दृश्यते ते न सायुज्यं प्राप्ताः । सामीप्याद्येव तेषाम् ।

(टी) पूर्वार्धतात्पर्यार्थमुपसंहरति – अत इति ॥

(भा) अतः प्रारब्धकर्मशेषभावात् तद्भुक्त्वा सायुज्यं गच्छन्ति ।

तच्चोक्तम् –

'सङ्कर्षणादयः सर्वे स्वाधिकारादनन्तरम् ।
प्रविशन्ति परं देवं विष्णुं नास्त्यत्र संशयः' इति व्यासयोगे ।

---

१. भारते वन १८०/२२

२. प्राचुर्याभिप्रायाण्येतानि वाक्यानि किं न स्युरित्यत आह – विशेषेति ॥ – प्र.दी.

३. बललक्ष्मणादिरूपे० – पा

४. अशू व्याप्तौ सङ्घाते चेति धातोः स्त्रियां क्तिनि 'क्तिच्क्तौ च सञ्ज्ञायाम्' इति सूत्रेण सञ्ज्ञायां वा क्तिच्प्रत्यये 'तितुत्र' इत्यादिनेण्निषेधे शकारान्तत्वात् 'व्रश्च' इत्यादिना षत्वे ष्टुत्वे चाष्टिशब्दनिष्पत्तौ सङ्गता अष्टिर्येषां ते समष्टय इति प्रक्रिया । समष्टिशब्दस्यायमर्थश्च प्राचीनटीकाद्वयपर्यालोचनयाऽवगम्यते । – भावरत्नकोशे

सङ्कर्षणादयः समष्टिजीवाः तावन्मुक्ताः । – प्र.दी.

अतोऽनिष्टस्य सर्वात्मना वियोगः ।

'परब्रह्मत्वमिच्छामि परब्रह्म जनार्दन'

– इत्यादिना ब्रह्मादिभिरपि प्रार्थितत्वात् ।

'न मोक्षसदृशं किञ्चिदधिकं वा सुखं क्वचित् ।
ऋते वैष्णवमानन्दं वाङ्मनोऽगोचरं महत्'

इत्यादेश्च ब्रह्मादिपदादप्यधिकतमं सुखं च मोक्ष इति सिद्धम् ।

(टी) उक्तहेतोर्न किञ्चिदनिष्टं मुक्तौ । सुखं च ब्रह्मादिपदादप्युत्तममुच्यमानोपपत्तिवचोभ्यो यथायोग्यमिति भावः ।

यस्मादेवं महाफलं ज्ञानम्, तस्मादुपायाय युज्यस्वेत्युत्तरार्धं व्याचष्टे – अत इति ॥

(भा) अतो योगाय युज्यस्व ज्ञानोपायाय । तद्धि कर्मकौशलम् ॥५०॥

(टी) येन ज्ञानं युज्यते तदेव हि कर्मसु कुशलत्वं नान्यदित्यर्थः ॥५०॥

किं तत्कर्मसु कुशलत्वम्? इत्याकाङ्क्षोत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे – तदुपायमिति ॥

(भा) तदुपायमाह – कर्मजमिति ॥

(टी) मोक्षसाधनज्ञानोपायम् ।

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥५१॥**

(भा) कर्मजं फलं त्यक्त्वा, अकामनयेश्वराय समर्प्य । बुद्धियुक्ताः सम्यज्ज्ञानिनो भूत्वा पदं गच्छन्ति । सयोगकर्म ज्ञानसाधनम्, तन्मोक्षसाधनमिति भावः ॥५१॥

(टी) कार्याकार्यादिनिश्चयात्मिका मनीषा । भगवत्तत्त्वज्ञानं बुद्धिः । मनीषित्वादेव 'कर्मजं फलं त्यक्त्वा' इत्यादि ।।५१।।

कियत्पर्यन्तमवश्यकर्तव्यानि कर्माण्युक्तलक्षणानि मुमुक्षुणा? अन्यथा मुक्त्यभावः । कस्मादुपरितनकर्माभावेऽपि नामुक्तिः? किन्तु तत्रानन्दवृद्ध्या एव शुभकर्माणीत्यभिप्रायाकाङ्क्षोत्तरत्वेनोत्तरश्लोकमवतारयति – **कियदिति** ।।

**(भा) कियत्पर्यन्तमवश्यं कर्तव्यानि मुमुक्षुणैवं कर्माणीति? आह – यदेति ।।**

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्ताऽसि निर्वेदं श्रोतव्यस्य श्रुतस्य च ।।५२।।**

(टी) निर्वेदशब्दश्च छान्दसत्वान्नुमागमाभावेऽपि लाभमाचष्टे प्रयोगबलादिति भावेनाह – **निर्वेदमिति** ।।

**(भा) निर्वेदं नितरां लाभम् । प्रयोगात् – 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य'[१] इत्यादि ।**

(टी) भगवदापरोक्ष्यमेव नितरां लाभ इत्युत्तरश्लोके स्पष्टयिष्यति । 'निर्विद्य' इत्यत्रापि वैराग्यार्थता किं न स्यात्? इत्यत आह – **न हीति** ।।

**(भा) नहि[२] तत्र वैराग्यमुपपद्यते । तथा सति पाण्डित्यादिति स्यात् ।**

(टी) न च प्रयोगमात्रबलान्निर्वेदशब्दस्य लाभार्थता, किन्त्वितरस्यानुपपन्नत्वात्, वचनविरोधाच्चेत्याह – **न चेति** ।।

**(भा) न च ज्ञानिनां भगवन्महिमादिश्रवणे विरक्तिर्भवति ।**

---

१. बृहदारण्यकोपनिषत् ५/५/१
२. 'न च' इति भावप्रदीपिकायाम् ।

'आत्मारामा हि मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः'[1] इति वचनात् ।

(टी) [2]श्रवणाद्यनुष्ठानदर्शनाच्च[3] शुकादीनामपरोक्षदृशां न श्रुतादौ विरक्तिरित्याह – अनुष्ठानाच्चेति[4] ॥

(भा) अनुष्ठानाच्च शुकादीनाम् ।

(टी) ननु तेषां मुक्तेः सिद्धत्वात् किमर्थं श्रवणादिः? इत्याशङ्क्य, न तावत् फलाभावात् तत्राप्रवृत्तिः । तस्यैव परमसुखरूपत्वादित्येतत् सप्रमाणकमाह – न चेति ॥

(भा) न च तेषां फलं नास्ति । तस्यैव महत्सुखत्वात् तेषाम् –

'या निर्वृतिस्तनुभृतां तव पादपद्म-
ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
किम्वन्तकासिलुलितात् पततां विमानात्'[5] ॥

– इत्यादिवचनात् ।

(टी) ब्रह्मणि स्वमहिमनि इति स्वरूपेणाविर्भूते मुक्त इत्यर्थः ।

न केवलं भगवच्छ्रवणादेरेव सुखरूपत्वाज्ज्ञानिनामपि तत्र प्रवृत्तिः । किन्तु तत्साध्यफलसद्भावाच्चेत्याह – तेषामिति ॥

(भा) तेषामप्युपासनादिफलस्य साधितत्वात् ।

---

१. भागवते १/७/१० २. श्रवणाद्यनुमान० – पा
३. अनुष्ठानाच्च श्रवणादेरिति शेषः । – प्र.दी.
४. अनुमानाच्चेति – पा
५. भागवते ४/९/१०

(टी) 'बुद्धियुक्तः' इति श्लोकव्याख्यानावसर इति शेषः[१] ।

ननु सर्वज्ञानिनां मुक्तेरेकविधत्वात् कथं पुनरुपासनादौ विशेषः? इत्यत आह – तारतम्येति ॥

(भा) तारतम्याधिगतेश्च ।

(टी) एतदेवोपपत्त्या वचनैरपि साधयति – तथाऽपीत्यादिना ॥

(भा) तथाहि – यदि तारतम्यं न स्यात्, 'नात्यन्तिकं विगणयन्त्यपि ते प्रसादम्'[२], 'नैकात्मतां मे स्पृहयन्ति केचित्'[३] 'एकत्वमप्युत दीयमानं न गृह्णन्ति' इति मुक्तिमप्यनिच्छतामपि मोक्ष एव फलं तमिच्छतामपि स एव भवति सुप्रतीकादीनामिति कथमनिच्छतां स्तुतिरुपपन्ना स्यात्?

वचनाच्च –

'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।
तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ।
योगिनां भिन्नलिङ्गानामाविर्भूतस्वरूपिणाम् ।
प्राप्तानां परमानन्दं तारतम्यं सदैव हि ' इति ।
'न त्वामतिशयिष्यन्ति मुक्तावपि कथञ्चन ।
मद्भक्तियोगाज्ज्ञानाच्च सर्वानतिशयिष्यसि' इति च ।

(टी) ननु तर्हि 'परमं साम्यमुपैति' इत्यादिवचनस्य का गतिः? इत्यत आह – साम्यवचनं त्विति ॥

---

१. सुकृतमप्यप्रियं मानुष्यादि जहाति, न बृहत्फलमप्युपासनादिनिमित्तम् ।
– गी.भा. २/५०

२. भागवते ३/१५/४८

३. भागवते ३/२५/३५

**(भा) साम्यवचनं तु प्राचुर्यविषयं दुःखाभावविषयं च ।**

(टी) प्राचुर्यं प्रचुरानन्दं परमानन्द इत्यर्थः । तथा ह्यत्रोदाहरति 'दुःखाभावः परानन्दः' इति[1] ।

**(भा) तथा चोक्तम् ।**

**'दुःखाभावः परानन्दो लिङ्गभेदः समा मताः ।**

(टी) न चैतावताऽऽनन्दमयाधिकरणविरोध[2] इत्याह – **तथाऽपीति ॥**

**(भा) तथाऽपि परमानन्दो ज्ञानभेदात् तु भिद्यते'**

**– इति नारायणाष्टाक्षरकल्पे ।**

(टी) **ज्ञानभेदात्** भक्तिज्ञानादितारतम्यादित्यर्थः ।

यत एवं ज्ञानिनामपि भगवन्महिमादिश्रवणाद्युपपत्तिः, अतस्तत्र न वैराग्यं विवक्षितमस्मिन् श्लोक इत्युपसंहरति – **अत इति ॥**

**(भा) अतो न वैराग्यं श्रुतादावत्र विवक्षितम् ।**

(टी) ननु वैराग्यवाच्यपि निर्वेदशब्दो भगवन्महिमान्यविषयमिति सङ्कोचः किं न स्यात्? इत्यत आह – **न चेति ॥**

**(भा) न च सङ्कोचे मानं किञ्चित्, विद्यमान इतरत्र प्रयोगे ।**

---

१. प्रकृतोपयोगाय प्राचुर्यपदार्थमाह – पूर्णत्वमिति ॥ स्वस्वयोग्यतापेक्षया पूर्तिरित्यर्थः । प्राचीनटीकायां तु 'दुःखाभावः परानन्दः' इति वचनानुसारेण प्राचुर्यं परमानन्द इति व्याख्यातम् । **– भावरत्नकोशे**

'प्राचुर्यं पूर्णत्वम्' **– प्र.दी.**

२. 'विकारशब्दान्नेति चेन्न प्राचुर्यात्' **– ब्र.सू. १/१/१३**

प्रचुरानन्दत्वाद्ध्यानन्दमयः । **– इति तद्भाष्ये**

(टी) ज्ञानिनामपि भगवन्महिमादिश्रवणाद्यनुष्ठानान्यथानुपपत्त्या तदितरविषयत्वेन सङ्कोचः क्रियतैव । निर्वेदशब्दस्य लाभार्थेऽपि प्रयोगे विद्यमाने न युज्यत इत्यर्थः ।

नन्वेवमसद्विषयश्रोतव्यश्रुतसाफल्यावाप्तिरपि किं न स्यात्? इत्यत आह – **महद्भिरिति ॥**

**(भा) महद्भिः श्रवणीयस्य श्रुतस्य च वेदादेः फलं प्राप्स्यसीत्यर्थः ॥५२॥**

(टी) अनुचितत्वादेव तन्निरास इति भावः[१] ॥५२॥

कर्मणामवश्यं करणीयत्वावधिनिरूपणार्थं पूर्वश्लोकोऽवतारितः । स तेन नातीव प्रतीयत इत्यत आह – **तदेव चेति ॥**

**(भा) तदेव च[२] स्पष्टयति – श्रुतिविप्रतिपन्नेति ।**

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३॥**

(टी) न हि [३]वेदविरुद्धबुद्धिर्मुक्तिसाधनम् । 'वेद एव द्विजातीनां निश्रेयसकरः परः' इत्यादिविरोधात्, 'रचनानुपपत्तेः'[४] इत्यादिसमयान्तरनिरासवैय्यर्थ्याच्च ।

---

१. अयोग्यतयैव तन्निरासः प्रकरणाद्वेति भावः । – प्र.दी.

२. 'तदेव' इति प्रचलितपाठः ।

३. वेदविरुद्धैव बुद्धिर्मु० – पा

४. 'इतरेषां चानुपलब्धेः' इति सामान्यतो निराकरणं समयानां कृतम् । विशेषतो निराकरोत्यस्मिन् पादे । अचेतनप्रवृत्तिमतं प्रथमतो निराकरोति – ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥ (ब्र.सू.भा. २/२/१)

............... .....अभियोगतः ।
दर्शनानां प्रवृत्तत्वान्मन्द आशङ्कते पुनः ।
अनादिकालतो वृत्ताः समया हि प्रवाहतः ।

एतदेव मनसि निधायाह – पूर्वमित्यादि ॥५३॥

(भा) पूर्वं श्रुतिभिर्वेदैर्विप्रतिपन्ना विरुद्धा सती यदा वेदार्थानुकूलेन तत्त्वनिश्चयेन विपरीतवाग्भिरपि निश्चला भवति; ततश्च समाधावचला, ब्रह्मप्रत्यक्षदर्शनेन भेरीताडनादावपि परमानन्दमग्नत्वात्; तदा योगमवाप्स्यसि उपायसिद्धो भवसीत्यर्थः ॥५३॥

**अर्जुन उवाच –**

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥५४॥**

(टी) उक्तार्थप्रश्नरूपत्वेन पूर्वसङ्गतेः प्रसिद्धत्वादुत्तरश्लोकस्य व्याख्यानमेव करोति – **स्थितेति**[1] ॥

(भा) **स्थिता प्रज्ञा ज्ञानं यस्य स** स्थितप्रज्ञः ।

(टी) 'किं प्रभाषेत' इत्यतः 'का भाषा' इत्यस्यार्थभेदमाह – **भाष्यत इति** ॥

(भा) **भाष्यतेऽनयेति** भाषा । **लक्षणमित्यर्थः** ।

(टी) 'समाधिस्थस्य' इति समाधिं कुर्वत इति प्रतीतिः स्यात् । तां व्यावर्तयन् यथावद्व्याचष्टे – **उक्तमिति** ॥

---

न चोच्छेदोऽस्ति कस्यापि समयस्येत्यतो विभुः ।
भ्रान्तिमूलत्वमेतेषां पृथग्दर्शयति स्फुटम् ॥
– **अनुव्याख्यानम्** (२/२/३-४)

१. प्रकृतज्ञानिलक्षणं पृच्छतीति सम्बन्धस्य स्पष्टत्वात् 'स्थितप्रज्ञस्य' इति श्लोकव्याख्यामेव करोति – स्थितेति ॥ – **भावप्रदीपिका**

ज्ञानिनि प्रकृते लब्धावसरोऽर्जुनः पृच्छतीति सङ्गतेः स्फुटत्वात् तामनुक्त्वा, प्रज्ञाशब्दस्य बुद्धिमात्रार्थत्वप्रतीतिनिरासाय स्थितप्रज्ञशब्दार्थमाह – स्थितेति ॥ – **प्र.दी.**

(भा) उक्तं लक्षणमनुवदति लक्षणान्तरं पृच्छामीति ज्ञापयितुं समाधिस्थ-स्येति ॥

(टी) समाधौ सत्यां ब्रह्मप्रत्यक्षदर्शनेन परमानन्दमग्नत्वात् यस्य बुद्धिरचलत्वेन स्थिता तस्येत्यर्थः ।

स्थितप्रज्ञमुख्यौ केशौ वर्तयति च भगवान्, तल्लक्षणं भगवतैव वक्तव्य-मित्यर्जुनाभिप्रेतं केशवशब्दार्थमाह[1] – **कमिति ॥**

**(भा) कं ब्रह्मणमीशं रुद्रं च वर्तयतीति केशवः ।**

(टी) 'को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिषु ।
आवां तवाङ्गे सम्भूतौ ततः केशवनामवान्'[2]

इति हरिवंशोक्तवचनाच्चेयं[3] निरुक्तिर्ग्राह्येत्याह – **तथा हीति ॥**

**(भा) तथाहि निरुक्तिः कृता हरिवंशेषु रुद्रेण कैलासयात्रायाम् ।**

**'हिरण्यगर्भः कः प्रोक्त ईशः शङ्कर एव च ।**
**सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान्' इति वचनान्तराच्च ।**

(टी) आसेरकर्मकत्वात् 'किमासीत' इत्युक्तौ 'आसीत न वा' इत्यपि प्रतीतिः स्यात् । तां व्यावर्तयन् यथावद्व्याचष्टे – **किमिति ॥**

---

१. स्थितप्रज्ञोत्तमब्रह्मरुद्रप्रवर्तको भगवान् जानात्येव प्रश्नपरिहाराय तल्लक्षणम् –
– **भावप्रदीपिकायां**

केशवशब्देन भगवत्सम्बोधने प्रयोजनमुक्तं भावप्रदीपिकायाम् – स्थितप्रज्ञोत्तमब्रह्म-रुद्रप्रवर्तको भगवान् जानात्येव प्रश्नपरिहाराय तल्लक्षणमिति ज्ञापयितुम् इति । तथा च प्राचीनटीका ''स्थितप्रज्ञमुख्यौ केशौ वर्तयति भगवानिति तल्लक्षणं भवतैव वक्तव्यमित्यर्जुनाभिप्रेतं केशवशब्दार्थमाह'' इति । – **भावरत्नकोशे**

२. हरिवंशे ३/८८/४८

३. हरिवंशोक्तेः, वचनाच्चेऽयं – पा

(भा) किमासीत? किं प्रत्यासीत?

(टी) यः स्वयं स्थितप्रज्ञः स्थितप्रज्ञोत्तमप्रवर्तकं श्रीविष्णुं च जानाति स कथं तल्लक्षणादि न जानाति ? अतः किमर्थं पृच्छति? इत्यत आह – न चेति ॥

(भा) न चार्जुनो न जानाति तल्लक्षणादिकम् –
'जानन्ति पूर्वराजानो देवर्षयस्तथैव हि ।
तथाऽपि धर्मान् पृच्छन्ति वार्तायै गुह्यवित्तये ।
न ते गुह्याः प्रतीयन्ते पुराणेष्वल्पबुद्धिनाम्' इति वचनात् ॥५४ ॥

(टी) आदिशब्देन तत्प्रवृत्त्युद्देश्यम्[1] ॥५४॥

'का' इति लक्षणं पृष्टम्, 'किम्' इति तत्प्रवृत्त्युद्देश्यम् । तदुभयोत्तरत्वेनोत्तरं ग्रन्थसन्दर्भमवतारयति – गमनादीति ॥

(भा) गमनादिप्रवृत्तिर्नात्यभिसन्धिपूर्विका मत्तादिप्रवृत्तिवदिति 'या निशा' इत्यादिना दर्शयिष्यन् लक्षणं प्रथमत आह – प्रजहातीति ॥

**श्रीभगवानुवाच**

**प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥५५॥**

(टी) पृच्छति लक्षणं तत्स्वरूपज्ञापनार्थं लोकस्य । तत्प्रवृत्त्युद्देश्यं किमिति? इत्याकाङ्क्षायामाह – एवमिति[2] ॥

---

१. तल्लक्षणादिकं ज्ञानिलक्षणं तत्प्रवृत्त्यनुपपत्तिसमाधानं च । – प्र.दी.

२. व्यवहाराय लक्षणप्रश्नो घटते । प्रवृत्त्युद्देश्यप्रश्नस्तु व्यर्थ एव । न च शक्यः प्रतिवक्तुम् । अनेकेषां प्रवृत्त्युद्देश्यस्यैकरूपस्याभावादित्यभिप्रायेण भगवतोपेक्षितोऽसाविति किं न स्यात्? किं तदुत्तरस्थानप्रदर्शनेन? अन्यथाऽल्पमप्युद्देश्यं वक्तव्यमित्यत आह – एवमिति ॥ – प्र.दी.

(भा) एवं परमानन्दतृप्तः किमर्थमेवं प्रवृत्तिं करोतीति प्रश्नाभिप्रायः ।

(टी) ब्रह्मप्रत्यक्षदर्शनेन परमानन्दमग्नत्वाद्यस्य बुद्धिर्भेरीताडनादावपि ततो नापगच्छति, तस्येतरविषयाभिसन्धानमीषदपि कुतः? इत्यत आह – प्रारब्धेति ॥

(भा) प्रारब्धकर्मणेषत्तिरोहितब्रह्मणो वासनया प्रायोऽल्पाभिसन्धिप्रवृत्तिः सम्भवतीत्याशयवान् परिहरति ।

(टी) ननु सर्वकामान् प्रजहातीति वक्तुः कथमीषदभिसन्ध्याऽवशेषोऽभिप्रेतः? इत्याशङ्क्य, प्रायिकोऽयं सर्वशब्दः, स्थितप्रज्ञमुख्यानां शुकादीनामपीषद्विषयाभिसन्धिदर्शनादिति भावेनाह – प्राय इति ॥

(भा) प्रायः सर्वान् प्रजहाति । शुकादीनामपीषद्दर्शनात् ।

(टी) भक्तिमपि त इच्छन्ति, अतो प्रायिकमेव सर्वकामप्रहाणमिति भावेनाह – त्वदिति[१] ॥

(भा) 'त्वत्पादभक्तिमिच्छन्ति ज्ञानिनस्तत्त्वदर्शिनः' इत्युक्तेस्तामिच्छन्ति ।

(टी) ननु यदि सर्वकामप्रहाणं ज्ञानिलक्षणम्, तर्हीन्द्रादयोऽपि न ज्ञानिनः । तेषामपि कदाचिदाग्रहदर्शनादित्याशङ्क्य ज्ञानिनामपि तेषां कदाचिज्ज्ञानाभिभवे कारणमस्तीत्येतत् सप्रमाणकमाह – यदेति ॥

(भा) यदा त्विन्द्रादीनामाग्रहो दृश्यते तदाऽभिभूतं तेषां ज्ञानम् ।

तच्चोक्तम् –

'आधिकारिकपुंसां तु बृहत्कर्मत्वकारणात् ।
उद्भवाभिभवौ ज्ञाने ततोऽन्येभ्यो विलक्षणाः' इति ।

---

१. शुकादीनामपीति ॥ विरुद्धकामस्येति शेषः । तच्च प्रवृत्तिलिङ्गेन आगमाच्च ज्ञातव्यम् । अनुकूलकामस्तु सर्वथाऽस्त्येव । अतोऽपि सङ्कोच इत्याह त्वत्पादेति ॥ – प्र.दी.

(टी) अतोऽन्येषामेवैतल्लक्षणाभावेनाज्ञानितेत्याह – **अत इति** ॥

**(भा) अत एव वैलक्षण्यादनधिकारिणामाग्रहादि चेदस्ति, न ते ज्ञानिन इत्यवगन्तव्यम् ।**

(टी) ननु समाधिं कुर्वतः एवैतल्लक्षणं किं न स्यात् ? तथा सति नाव्याप्तिशङ्का, 'समाधिस्थस्य' इति प्रश्नपदानुगुण्यं चेत्यत आह – **न चेति**[1] ॥

**(भा) न चात्र समाधिं कुर्वतो लक्षणमुच्यते । 'यः सर्वत्रानभिस्नेहः' इति स्नेहनिषेधात् ।**

(टी) ननूचित एव स्नेहनिषेधः, तस्य क्वचिदपि स्नेहाभावात् इत्याशङ्क्य शुभाशुभं प्राप्यानभिस्नेह इत्युक्तेः, तदभावाच्चासम्प्रज्ञातसमाधिस्थस्य, अतो नेदं लक्षणं तस्येत्याह – **न हीति** ॥

**(भा) न हि समाधिं कुर्वतस्तस्य शुभाशुभप्राप्तिरस्ति । असम्प्रज्ञातसमाधेः ।**

(टी) ननु समाधिं कुर्वत्यपि सम्प्रज्ञाते 'शुभाशुभं प्राप्य' इत्येतद्विरोधाभावात् तस्मिन्नेव पुंसीदं लक्षणं किं न स्यात्? इत्याशङ्क्य, उक्तप्रकारेणासमाधिस्थेऽपि सम्भवादुभयोरपीदं लक्षणमित्येतत् सप्रमाणकमाह – **सम्प्रज्ञाते त्विति** ॥

**(भा) सम्प्रज्ञाते[2] त्वविरोधः । तथाऽपि न तत्रैवेति नियमः ।**

**'कामादयो न जायन्ते ह्यपि विक्षिप्तचेतसाम् ।**
**ज्ञानिनां ज्ञाननिर्धूतमलानां देवसंश्रयात्' इति स्मृतेः ।**

---

१. ननु समाधिं कुर्वतो ज्ञानिनो लक्षणमेतदिति व्याक्रियताम् । तथा सति प्रश्नवाक्यस्थं 'समाधिस्थस्य' इति पदं समञ्जसं स्यात् । सर्वशब्दश्चासङ्कुचितार्थः स्यात् । इन्द्रादिविषयाक्षेपाप्रसक्तिश्चेत्यत आह – न चेति ॥ – प्र.दी.

२. बाह्यार्थानुसन्धानं यत्र नास्ति, सोऽसम्प्रज्ञातसमाधिस्थितिः । इतरः सम्प्रज्ञातसमाधिरिति योगशास्त्रे प्रसिद्धः । – प्र.दी.

(टी) सम्यक् प्रज्ञातं सम्प्रज्ञातं देहादिविषयं यस्मिन् स सम्प्रज्ञातः । नपुंसके भावेऽप्युक्तप्रत्ययदर्शनात् ।

ज्ञाने सति कामनिवृत्तौ हेत्वाकाङ्क्षायां तदुक्तिपरत्वेनोत्तरं पदं व्याचष्टे – **मनोगता हीति ॥**

**(भा) मनोगता हि कामाः । अतस्तत्रैव तद्विरुद्धज्ञानोत्पत्तौ युक्तं हानं तेषामिति दर्शयति – मनोगताननिति ॥**

(टी) विषयकामभगवज्ज्ञानयोः कथं विरोधः? इत्याकाङ्क्षायामाह – **विरोधश्चेति ॥**

**(भा) विरोधश्चोच्यते – 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते'[१] इति ।**

(टी) एवंविधपुरुषादर्शनादसम्भावितमिदं लक्षणमिति नाशङ्कनीयमित्याह – **न चेति ॥**

**(भा) न चैतदृष्ट्याऽपलपनीयम् । पुरुषवैशेष्यात् ।**

(टी) 'आत्मनि' इत्यादौ स्वस्मिन्नेवेत्यपि प्रतीतिर्मा भूदिति यथावद्व्याचष्टे – **आत्मनीति**[२] ॥

**(भा)** आत्मना **परमात्मना । परमात्मन्येव स्थितः सन् ।**

(टी) कुतोऽत्रात्मशब्दोक्तो विष्णुरेव, न जीवः? इत्याकाङ्क्षायाम्, आत्मेत्याख्याया भगवतोऽन्यत्रासम्भवात्[३], विषयपरित्यागेन भगवद्ध्यायिन-

१. गीता – २/५९

२. 'आत्मनि' 'आत्मना' इति पदद्वयेन जीव एवोच्यत इति कश्चित् । तृतीयान्तेन मन इत्यपरः । तदुभयमसदिति भावेनाह – आत्मनेति ॥ **– प्र.दी.**

३. आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।
न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णता । – इति ब्रह्मवैवर्ते **(ब्र.सू.भा. १/३/१)**

स्तस्मिन्नेव सन्तोषः, तत्प्रसादादेव भवतीति वचनबलाच्चेति भावेनाह – आत्मास्थ इति ॥५५॥

(भा) आत्मास्थे तस्मिन् स्थितस्य तत्प्रसादादेव तुष्टिर्भवति ।

'विषयांस्तु परित्यज्य रामे स्थितिमतस्ततः ।
देवाद्भवति वै तुष्टिर्नान्यथा तु कथंचन' इति नारायणरामकल्पे' ।

अतो नात्मा जीवः ॥५५॥

(टी) 'दुःखेषु' इत्यादिभिः 'स्थितधीर्मुनिः' 'तस्य प्रज्ञा प्रतिष्ठिता' इति पुनर्लक्ष्यनिर्देशाल्लक्षणान्तरोक्तिरिति नाशङ्कनीयमित्याह – तदेवेति[1] ॥

(भा) तदेव स्पष्टयत्युत्तरैस्त्रिभिः श्लोकैः ।

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥५६॥**

**यः सर्वत्रानभिस्नेहस्तत् तत् प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥**

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥५८॥**

(टी) न केवलं 'प्रजहाति' इत्याद्युक्तिनिषिद्धसर्वकामप्रहाणादीनि ज्ञानिनामेव लक्षणत्वेनोच्यन्ते । किन्तु ज्ञानार्थिभिरप्यनुष्ठेयानीत्येतत् सप्रमाणकमाह – एतानीति ॥

(भा) एतान्येव ज्ञानोपायानि च । तच्चोक्तम् – 'तद्वै जिज्ञासुभिः साध्यं ज्ञानिनां यत् तु लक्षणम्' इति ।

---

१. पुनः श्लोकत्रयेऽपि लक्ष्यनिर्देशाल्लक्षणान्तरमुच्यत इति शङ्का मा भूदित्याह – तदेवेति ॥
– भावप्रदीपिका

(टी) दुःखेषु वर्तमानेषु तत्परिहर्तुं नोद्विग्नमनाः । सुखेषु वर्तमानेषु 'एवमेव स्यात्' इति न स्पृहयतीत्यकामत्वमेव स्पष्टितं भवति ।

'विगतस्पृह'पदात् 'वीतराग'पदस्यार्थभेदं सप्रमाणकमाह – **शोभनेति ॥**

**(भा) शोभनाध्यासो रागः । 'रसो रागस्तथा रक्तिः शोभनाध्यास उच्यते' इति ह्यभिधानम् ॥**

(टी) [१]अशोभने शोभनत्वाध्यासरहितः[२] । अतस्तत्रापि न कामः । वीतभयत्वात् तत्परिहर्तुं कामोऽपि[३] न । वीतक्रोधादपि कामरहितः । 'कामः कथं पुनरस्य मनः श्रयेत' इति वचनात् । एवमुत्तरश्लोकाभ्यामपि 'सर्वान् कामान् प्रजहाति' इत्येतत् स्पष्टितं भवतीति ।

'वीतक्रोधः' इत्यनेन 'न द्वेष्टि' इत्यस्य पुनरुक्तिशङ्कां परिहरन्नुत्तरश्लोकं व्याचष्टे – **सर्वत्रेति ॥**

**(भा) सर्वत्रानभिस्नेहत्वाच्छुभाशुभं प्राप्य नाभिनन्दति न द्वेष्टि ॥५६-५८॥**

(टी) शुभाशुभं सुखदुःखसाधनम् । शुभस्नेहाभावादेवाशुभं प्राप्यापि न द्वेष्टि[४] इत्यर्थः ॥५६-५८॥

(टी) पुनः श्लोकत्रयान्ते लक्ष्यनिर्देशात्, लक्षणस्यैव पृष्टत्वात् तत्रापि लक्षणोक्तिशङ्का मन्दस्य स्यात् । तां व्यावर्तयितुं तत्र प्रतिपाद्यमाह – **न चेति**[५] **॥**

---

१. अशोभने शोभनकामोऽपि न मानत्वाध्यासरहितः – पा

२. अशोभनेषु विषयेषु शोभनत्वभ्रान्तिः । – **प्र.दी.**

३. परिहर्तुकामोऽपि – पा

४. द्वेष – पा

५. 'विषया विनिवर्तन्ते' इत्यादिश्लोकत्रयान्तेऽपि 'तस्य प्रज्ञा प्रतिष्ठिता' इत्युक्तत्वादिदमपि लक्षणविवरणमिति भ्रान्तिः स्यात् । तन्निराकरणार्थमाह – न चेति ॥ – **प्र.दी.**

(भा) न चैतल्लक्षणं ज्ञानमयत्नतोऽपि भवतीत्याहोत्तरश्लोकैः ।

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥५९॥**

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥६०॥**

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥**

(टी) तत्राद्यश्लोकं व्याचक्षाणोऽवतारयति – निराहारेति ॥

(भा) निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति ।

(टी) निराहारत्वेन विषयभोगसामर्थ्याभाव एव भवति इत्यनेन साष्टमांशस्य पूर्वार्धस्य एकोऽर्थः कथ्यते । एवकारेण रसवर्जमित्येतत् व्याख्यानात्[१] । द्वौ हि विषयप्रवृत्तिहेतू रागो भोगशक्तिश्च । निराहारत्वं च तन्निवृत्तिहेतुः । एवं च निराहारस्य रसवर्जं विषया विनिवर्तन्त इत्युक्ते केषाञ्चिन्निराहारत्वेन भोगशक्त्यभावः एव न रागाभाव इत्यर्थः ।

तस्यैवान्योऽर्थः कथ्यते – इतरेत्यादिना ॥

(भा) इतरविषयाकाङ्क्षाभावो वा । रसाकाङ्क्षादिर्न निवर्तते ।

(टी) केषाञ्चित् निराहारत्वेन रसेतररूपादिविषयाकाङ्क्षा विनिवर्तते न भोगशक्तिमात्रम् । रसगुणाकाङ्क्षा तद्भोगशक्तिश्च न विनिवर्तत इत्यर्थः ।

तन्निवृत्तिः कदा? इत्यत आह – स त्विति ॥

---

१. निराहारत्वेनेति ॥ तेन रसवर्जमित्येतदन्तस्य वाक्यस्यार्थ उक्तः । एवशब्देन रसवर्जमित्येतद्व्याचष्टे । – प्र.दी.

(भा) स त्वपरोक्षज्ञानादेव निवर्तत इत्याह – विषया इति ।

(टी) द्वितीयमर्थं स्थापयति – इन्द्रियाणीति ॥

(भा) 'इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ।
वर्जयित्वा तु रसनामसौ रस्ये तु वर्धते' इति वचनाद्भागवते[१] ।

(टी) रसनामिन्द्रियम् । असौ रसना जिह्वा । रस्ये रसनीये वर्धते अधिकाकाङ्क्षा भवतीत्यर्थः ।

रसरागशब्दयोः पर्यायत्वात् प्रथमोऽर्थोऽपि युक्त इत्याह – रसशब्दस्येति ॥

(भा) रसशब्दस्य रागवाचित्वाच्च ॥

(टी) ननु किं [२]हर्यपरोक्षज्ञानेन ? किन्तु सर्वोत्तमत्वात् सर्वेन्द्रियसंसेव्यो हरिरिति परोक्षज्ञानादेवोक्तो रसो निवर्तिष्यते । तथा किं निराहारत्वेन ? किन्तु प्रत्याहारादिसाधारणयत्नादेवेतरे विषया विनिवर्तिष्यन्त इत्याशङ्कोत्तरत्वेनोत्तरश्लोकं व्याचष्टे – अपरोक्षेति[३] ॥

(भा) अपरोक्षज्ञानरहितज्ञानिनोऽपि साधारणयत्नवतोऽपि मनो हरन्तीन्द्रियाणि । पुरुषस्य शरीराभिमानिनः । को दोषस्ततः? प्रमाथीनि प्रमथनशीलानि पुरुषस्य ॥

(टी) 'हि'शब्देन प्रसिद्धमेतदजामिळादाविति सूचितम्[४] । नोदाहरणं भाष्ये । पुरे सक्तत्वात् पुरुषः शरीराभिमानी ॥

---

१. ११/८/२०

२. तर्ह्य०– पा

३. इन्द्रियजयार्थं किं निराहारत्वलक्षणेन महाप्रयत्नेन? प्रत्याहारादिना साधारणप्रयत्नेन तत्सम्भवात् । तथा किमपरोक्षज्ञानेन? नित्यानित्यविवेकज्ञानेनापि तदुपपत्तेरित्याशङ्क्य, तन्निषेधोऽत्र क्रियत इत्याशयवान् व्याचष्टे – अपरोक्षेति ॥ – प्र.दी.

४. भागवते षष्ठस्कन्धद्वितीयाध्याये

ननु यदि श्रुतिसम्पन्नस्यापीन्द्रियाणि नियन्तुमशक्यानि प्रत्याहारादिना, तर्हि न केनापि शक्यानीत्याशङ्क्य, तत्परिहारत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे – **तर्हीति ॥**

**(भा) तर्ह्यशक्यान्येवेत्यत आह – तानीति ॥**

**(टी) 'सं'शब्दार्थमाह – बह्विति ॥**

**(भा) बहुयत्नवतः शक्यानि । अतो यत्नं कुर्यादित्याशयः ।**

**(टी) अतः** उक्तनिराहारत्वविविक्तसेवादिबहुयत्नं **कुर्यादित्यर्थः ।**

**(भा) युक्तः मयि मनोयुक्तः । अहमेव परः सर्वस्मादुत्कृष्टो यस्य स मत्परः ।**

**(टी)** एवं यतमानस्योक्तलक्षणं ज्ञानं सिद्ध्यतीत्याह – **फलमिति ॥**

**(भा) फलमाह – वशे हीति ॥॥५९-६१॥**

**(टी)** एतदपि गङ्गाद्वारादौ यतमानेऽजामिळादौ प्रसिद्धमिति[१] 'हि'शब्दसूचितत्वात् नात्राप्युदाहरणं भाष्ये ॥५९-६१॥

भगवतः सर्वोत्कृष्टत्वात् तत्रैव मनोयुक्तः, तज्ज्ञानं मुक्तिसाधनं लभत इत्युक्तम् । अधुना विषयमनःसंयोगपरिहाराय यदि विषयान् ध्यायेत् तर्हि तेषु स्नेहेन रागादिदोषाः स्युर्नरकाद्यनर्थहेतव इति व्याचष्ट उत्तरश्लोकद्वयमवतार्य – **रागेत्यादिना ॥**

---

१. ममाहमिति देहादौ हित्वा मिथ्यार्थधीर्मतिम् ।
धास्ये मनो भगवति शुद्धं तत्कीर्तनादिभिः ।
इति जातसुनिर्वेदः क्षणसङ्गेन साधुषु ।
गङ्गाद्वारमुपेयाय मुक्तसर्वानुबन्धनः ।
स तस्मिन् देवसदन आसीनो योगमास्थितः ।
प्रत्याहृतेन्द्रियग्रामो युयोज मन आत्मनि ॥ **– भागवते ६/ २/४१-४३**

(भा) रागादिदोषकारणमाह परिहाराय श्लोकद्वयेन ।

**ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते ॥६२॥**

**क्रोधाद्भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशाद्विनश्यति ॥६३॥**

(भा) सम्मोहः अकार्येच्छा ।

(टी) ननु 'मुह वैचित्रे' इति धातोर्मिथ्याज्ञानाग्रहः सम्मोहः स्यात् । उक्तं हि – 'मोहश्चैव विपर्ययः । तदाग्राहो महामोहः'[१] । तत्कथमकार्येच्छा सम्मोहः? इत्याशङ्क्य, अधर्मोऽपि मोहनामेत्येतावत् तावदाह – **तथा हीति** ॥

(भा) तथाहि मोहशब्दार्थ उक्तमुपगीतासु[२] – 'मोहसञ्ज्ञितम् । अधर्मलक्षणं चैव नियतं पापकर्मसु' इति ।

(टी) न केवलं मिथ्याज्ञानं मोहसञ्ज्ञकम्, किन्त्वधर्मोऽपीत्यर्थः ।

अधर्मेच्छाया अप्यधर्मत्वात् मोहशब्दार्थतोक्ता । इदानीमधर्मेच्छामपि सम्मोहशब्द एव वक्तीत्याह – **तथा चेति** ॥

(भा) तथा चान्यत्र – 'सम्मोहोऽधर्मकामिता' इति । स्मृतिविभ्रमः प्रतिषेधादिस्मृतिनाशः । बुद्धिनाशः सर्वात्मना दोषबुद्धिनाशः । विनश्यति नरकाद्यनर्थं प्राप्नोति ।

---

१. 'तमस्तु शार्वरं प्रोक्तं मोहश्चैव विपर्ययः ।
तदाग्रहो महामोहः तामिस्रः क्रोध उच्यते ।
मरणं त्वन्धतामिस्रमविद्या पाञ्चपर्विका ।' इति भारते – भाग.ता. ३/१३/२;
२. भारते आश्वमेधिके ३६/८

(टी) एवंविधसम्मोहादिप्रणाशान्तानां हेतुमद्भावे प्रमाणमाह – **तथा ह्युक्तमिति** ॥

(भा) तथाह्युक्तम् –

'अधर्मकामिनः शास्त्रे विस्मृतिर्जायते यदा ।
दोषादृष्टेस्तत्कृतेश्च नरकं प्रतिपद्यते' इति ॥६२, ६३॥

(टी) रागादिदोषपरिहारस्य किं फलम्? इत्याकाङ्क्षोत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे – **इन्द्रियजयफलमिति** ॥

(भा) इन्द्रियजयफलमाहोत्तराभ्यां श्लोकाभ्याम् ।

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥६४॥**

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति ॥६५॥**

(टी) इन्द्रियजयाख्यं फलं इन्द्रियजयस्य फलमिति च । तत्र रागद्वेषपरिहारस्येन्द्रियजयाख्यं फलं प्रथमश्लोकेनाह । इन्द्रियजयस्य फलं सर्वदुःखहानिं द्वितीयेन[1] ।

तुशब्दोक्तं विशेषं दर्शयितुमपिशब्दमाधाय व्याचष्टे ।

(भा) **विषयाननुभवन्नपि विधेय आत्मा मनो यस्य । जितात्मेत्यर्थः । प्रसादं मनःप्रसादम् । कथं प्रसादमात्रेण सर्वदुःखहानिः?** प्रसन्नचेतसो हि बुद्धिः पर्यव-

---

१. रागादिजयादिन्द्रियजयाख्यं फलमाद्यश्लोके । इन्द्रियजयस्य फलं द्वितीये इति ज्ञेयम् ।
**– भावप्रदीपिका**

इन्द्रियजयश्च तत्फलं चेन्द्रियजयफलम् । इन्द्रियजयस्य फलम् इन्द्रियजयफलम् ।
**– प्र.दी.**

तिष्ठति । ब्रह्मापरोक्ष्येण सम्यक् स्थितिं करोति । **प्रसादो नाम स्वतोऽपि प्रायो विषयागतिः** ॥६४,६५॥

(टी) 'निराहारस्य देहिनः' 'इन्द्रियाणि जयन्त्याशु निराहाराः' इत्यनयोः समानार्थत्वात् निवृत्तविषयो हि जितेन्द्रियः । अयं तु रागद्वेषवियुक्तत्वात् विषयाननुभवन्नपि 'जितमनाः' इति शेषः । अतः **प्रसादो नाम स्वतोऽपि प्रायो विषयागतिः** इत्येतद्रागतो विषयागतिरिति व्याख्येयम् । **स्वतः** इति प्रयत्नं विनेत्यर्थः[1] ॥६४,६५॥

'प्रसन्नचेतसो ह्याशु बुद्धिः' इत्युक्तत्वात् नास्ति बुद्धिरप्रसन्नचेतस इति वक्तव्ये अयुक्तस्य बुद्धिर्नेत्युक्तेः प्रसादसाध्ययुक्तिर्नामाङ्गीकार्येति भावेन उत्तरश्लोकमवतार्य व्याचष्टे – **प्रसादाभाव** इति ॥

(भा) प्रसादाभावे दोषमाहोत्तरश्लोकाभ्याम् ।

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥६६॥**

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७॥**

(भा) न हि प्रसादाभावे युक्तिश्चित्तनिरोधः । अयुक्तस्य च बुद्धिः सम्यज्ज्ञानं नास्ति ।

(टी) कथमयुक्तस्य बुद्धिर्नास्ति? इत्याशङ्कायाम्, अयुक्तस्य भावनाभावात्, तदभावे बुद्ध्यभावादिति भावेनाह – **तदेवेति** ॥६६,६७॥

---

१. स्वतोऽपि प्रयत्नं विनाऽपि । – प्र.दी.
स्वतो दोषलयो दृष्ट्वा त्वितरेषां प्रयत्नतः । – गी.भा. ६/४
स्वतः प्रयत्नं विना । – भावप्रदीपिका ६/४

(भा) तदेवोपपादयति – न चायुक्तस्येति ।। शान्तिर्मुक्तिः । 'शान्तिर्मोक्षोऽथ निर्वाणम्' इत्यभिधानात् । कथमयुक्तस्य भावना न भवति ? आह – इन्द्रियाणामिति ।। अनुविधीयते क्रियते । नन्वीश्वरेणेन्द्रियाणामनु । 'बुद्धिर्ज्ञानम्'[१] इत्यादि वक्ष्यमाणत्वात् । प्रज्ञां प्रज्ञानम् । उत्पत्स्यदपि निवारयतीत्यर्थः । उत्पन्नस्याप्यभिभवो भवति ।।६६,६७।।

तस्मात् सर्वात्मना निगृहीतेन्द्रिय एव ज्ञानीति निगमयति – तस्मादिति ।।६८।।

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ।।६८।।**

(टी) सर्वात्मनेति ।। निराहारत्वविषयध्यानाभावादिनेत्यर्थः ।।६८।।

(भा) उक्तं लक्षणं पिण्डीकृत्याह – या निशेति ।।

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ।।६९।।**

(टी) प्रकीर्णत्वेनोक्तं स्थितप्रज्ञलक्षणं झटिति बुद्ध्यारोहाय सङ्क्षिप्याहेत्यर्थः ।

(भा) या सर्वभूतानां निशा परमेश्वरस्वरूपलक्षणा, यस्यां सुप्तानीव न किञ्चिज्जानन्ति, तस्यामिन्द्रियसंयमयुक्तो ज्ञानी जागर्ति । सम्यगापरोक्ष्येण पश्यति परमात्मानमित्यर्थः । यस्यां विषयलक्षणायां भूतानि जाग्रति तस्यां निशायामिव सुप्तः प्रायो न जानाति । मत्तादिवद्गमनादिप्रवृत्तिः । तदुक्तम् – 'देहं तु तन्न चरमम्'[२], 'देहोऽपि दैववशगः'[३] इति श्लोकाभ्याम् ।

---

१. गी. १०/४
२. भागवते ३/२८/२८
३. भागवते ११/१३/३७

मननयुक्तो मुनिः । पश्यतः इत्यस्य साधनमाह ॥६९॥

(टी) मननयुक्तत्वं भगवद्दर्शनसाधनमाहेत्यर्थः[१] ॥६९॥

सुप्तवच्चेत्, कथं तेन विषया अनुभूयन्ते? इत्यत्राह – **तेनेति** ॥७०॥

(भा) तेन विषयानुभवप्रकारमाह – आपूर्यमाणमिति ॥

**आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।**
**तद्वत् कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥**

(भा) यो विषयैः आपूर्यमाणोऽप्यचलप्रतिष्ठो भवति । नोत्सेकं प्राप्नोति । न च प्रयत्नं करोति । न चाभावे शुष्यति । नहि समुद्रः सरित्प्रवेशाप्रवेशनिमित्त-वृद्धिशोषौ बहुतरौ प्राप्नोति । प्रयत्नं वा करोति । स मुक्तिं प्राप्नोतीत्यर्थः ॥७०॥

(टी) अकामः सर्वथा चेत्, कथं भक्षति? इत्याद्याशङ्क्य, परिहारत्वेनोत्तर-श्लोकमवतार्य व्याचष्टे – **एतदेवेति** ॥

(भा) एतदेव प्रपञ्चयति – विहायेति ॥

**विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः ।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥७१॥**

(भा) कामान् विषयान् । निस्पृहतया विहाय यश्चरति भक्षयति । भक्षयामीत्याद्यहङ्कारममकारवर्जितश्च । स हि पुमान् । स एव मुक्तिम् अधि-गच्छति इत्यर्थः ॥७१॥

(भा) उपसंहरति – एषेति ॥

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥७२॥**

**॥ इति श्रीमद्भगवद्गीतायां द्वितीयोऽध्यायः ॥**

---

१. भगवदुद्देशेन साधनमाहेत्यर्थः – पा

(टी) ब्रह्मणि स्थितिरिति शङ्काव्यावर्त्यमाह – ब्रह्मविषयेति ॥

(भा) ब्राह्मी स्थितिः ब्रह्मविषया स्थितिर्लक्षणम् । अन्तकालेऽप्यस्यां स्थित्वैव ब्रह्म गच्छति । अन्यथा जन्मान्तरं प्राप्नोति । 'यं यं वाऽपि'[1] इति वक्ष्यमाणत्वात् ।

(टी) नन्वपरोक्षज्ञानिनां कथं शरीरान्तरम्? इत्यत आह – ज्ञानिनामिति ॥

(भा) ज्ञानिनामपि सति प्रारब्धकर्मणि शरीरान्तरं युक्तम् । 'भोगेन त्वितरे'[2] इति ह्युक्तम् ।

(टी) ननु सत्यपि प्रारब्धकर्मणि ज्ञानोदयानन्तरं तदपि तद्देह एव भुक्त्वा मुक्तिः किं न स्यात्? इत्यत आह – सन्ति हीति ॥

(भा) सन्ति हि[3] बहुशरीरफलानि कर्माणि कानिचित् । 'सप्तजन्मनि विप्रः स्यात्' इत्यादेः ।

(टी) ननु सन्तु बहुशरीरफलकर्माणि । तथाऽपि ज्ञानोदयोऽन्त्यदेह एव किं न स्यात्? इत्यत आह – दृष्टेश्चेति ॥

(भा) दृष्टेश्च ज्ञानिनामपि बहुशरीरप्राप्तेः । तथा ह्युक्तम् –

'स्थितप्रज्ञोऽपि यस्तूर्ध्वः प्राप्य रौद्रपदं ततः ।
साङ्कर्षणं ततो मुक्तिमगाद्विष्णुप्रसादतः' इति गारुडे ।
'महादेव परे जन्मंस्तव मुक्तिर्निरूप्यते' इति नारदीये ।

---

१. गी ८/६
२. ब्र.सू. ४/१/१९
३. 'सन्ति च' इति भावप्रदीपिकायाम् ।

(टी) ननु यद्यपरोक्षज्ञान्यपि प्रारब्धकर्म भुङ्क्ते, तर्हि तत्काले पुनः कर्मकरणात्, सञ्चितानन्तकर्मसद्भावात्, तद्भोगोऽपीत्येवममुक्तिरेव प्रायः स्यादित्यत आह – **निश्चितफलं चेति** ॥

(भा) **निश्चितफलं च ज्ञानम् – 'तस्य तावदेव चिरम्'**[१], **'यदु च नार्चिषमेवाभिसम्भवति'**[२] **इत्यादिश्रुतिभ्यः ।**

(टी) 'तावदेव चिरम्' इति प्रारब्धभोगातिरिक्तविलम्बकारणाभावावगतेर्भवत्येव मुक्तिर्ज्ञानिन इत्यर्थः ।

उत्तरपूर्वाघयोस्तु ज्ञानप्रभावादेवाश्लेषविनाशोक्तेर्न[३] तद्भोगार्थं काणादाद्युक्तकायव्यूहापेक्षेत्याह – **न चेति**[४] ॥

(भा) **न च कायव्यूहापेक्षा । 'तद्यथैषीकातूलम्'**[५], **'तद्यथा पुष्करपलाशो'**[६], **'ज्ञानाग्निः सर्वकर्माणि'**[७] **इत्यादिवचनेभ्यः ।**

(टी) पुण्यमनिष्टं नश्यत्येवेष्टं तूत्तरकालीनं मुक्तावनुप्रविशन्ति पूर्वकालीनं ज्ञानमित्यनवद्यम्[८] ।

---

१. छान्दोग्योपनिषत् ६/१४/२

२. छान्दोग्योपनिषत् ४/१५/५

३. ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ (ब्र.सू. ४/१/१३) ब्रह्मदर्शन उत्तराघस्याश्लेषः पूर्वस्य विनाशश्च । 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यन्ते' । 'तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं है वास्य सर्वे पाप्मानः प्रदूयन्ते' इति तद्व्यपदेशात् । – इति **तद्भाष्ये**

४. पाशुपतवैशेषिकादयस्त्वाहुः । अनियतकालविपाकान्यपि कर्माणि ज्ञानी योगसामर्थ्यात् समाहृत्य, अनेकशरीरफलान्यपि कायव्यूहनिर्माणेन क्षपयित्वाऽपवृज्यते । तत्कुतोऽस्य देहान्तरम्? इति, तत्राह – न चेति ॥ **– प्र.दी.**

५. छान्दोग्योपनिषत् ५/२४/३ ६. छान्दोग्य ४/१४/३ ७. गी. ४/३७

८. तथोपास्याञ्जसा दृष्टं ब्रह्म पापं च भस्मसात् ।

प्रारब्धे तु कर्मणि कतिभिश्चिद्देहैः क्रमेण भुज्यमानेऽपि[१] तदन्ते मुक्तिर्न विरुध्यते परिमितत्वादिति भावेनाह – **प्रारब्धे त्विति** ॥

**(भा) प्रारब्धे त्वविरोधः ।**

(टी) ननु सञ्चितेऽपि कर्मणि बहुभिः कायैः युगपद्भुज्यमाने, न मुक्तिविरोध इत्यत आह – **प्रमाणेति** ॥

**(भा) प्रमाणाभावाच्च ।**

(टी) ननु तपःप्रभावलब्धज्ञानकृतं तच्छास्त्रं प्रमाणं किं न स्यात्? इत्यत आह – **न चेति** ॥

**(भा) न च तच्छास्त्रं प्रमाणम् –**

**'अक्षपादकणादानां साङ्ख्ययोगजटाभृताम् ।**
**मतमालम्ब्य ये वेदं दूषयन्त्यल्पचेतसः' इति निन्दनात् ।**

(टी) यत्र क्वचित् श्रूयते पाशुपतादिशास्त्रं शिवपुराणेषु तेषामपि शिवभक्तस्तुतौ तात्पर्यम् । नतु शिवशास्त्रोक्तसत्यत्वे । शिवपुराणानामितर-पुराणविरुद्धार्थे प्रामाण्यासम्भवादित्याह – **यत्र त्विति** ॥

**(भा) यत्र तु स्तुतिस्तत्र शिवभक्तानां स्तुतिपरत्वमेव न सत्यत्वम् । न हि तेषामपीतरग्रन्थविरुद्धार्थे प्रामाण्यम् ।**

(टी) ननु पुराणत्वाविशेषात् शिवपुराणानामितरपुराणविरुद्धार्थे कथं न प्रामाण्यम् इत्याशङ्क्य, मोहनार्थं प्रणीतशिवागममूलत्वादित्याह – **तथा हीति** ॥

---

करोति निखिलं पूर्वं पाश्चात्यस्याप्यसङ्गताम् ।
करोति ....... – अनुव्याख्यानम् ४/२/६३-६४

१. युज्यमानेऽपि – पा

(भा) तथा ह्युक्तम् –

एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति ।
त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ।
अतथ्यानि वितथ्यानि दर्शयस्व महाभुज
प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु ॥ इति वाराहे[1] ।

(टी) [2]स्रष्टृत्वबद्धत्वोपासकत्वादीनि तथ्यानि । शर्वादेः अस्रष्टृत्वाबद्धत्वानुपासकत्वादीनि अतथ्यानि । स्रष्टृत्वमोचकत्वोपास्यत्वादीनि वितथ्यानीति । एवं सर्वोपास्यत्वादीनि तथ्यानि विष्णोः । अनुपास्यत्वादीन्यतथ्यानि । उपासकत्वादीनि वितथ्यानि ।

(भा) 'कुत्सितानि च मिश्राणि रुद्रो विष्णुप्रचोदितः ।
चकार शास्त्राणि विभुर्ऋषयस्तत्प्रचोदिताः ।
दधीच्याद्याः पुराणानि तच्छास्त्रसमयेन तु ।
चक्रुर्वेदैश्च ब्राह्माणि वैष्णवान् विष्णुवेदतः ।
पञ्चरात्रं भारतं च मूलरामायणं तथा ।
तथा पुराणं भागवतं विष्णुवेद इतीरितः ।
अतः शैवपुराणानि योज्यान्यन्याविरोधतः' इति च नारदीये ।

(टी) दधीच्याद्या [3]शैवान्युपपुराणानि चक्रुः ।

निश्चितफलं च इत्याद्युक्तमुपसंहरति – अत इति ॥

(भा) अतो ज्ञानिनां भवत्येव मुक्तिः ।

(टी) यत इत्युक्तप्रकारेण कर्मक्षयसम्भवः ।

---

१. ७०/३६
२. सृष्टत्वबन्धनोपासकत्वादीनि – पा
३. अन्यान्युपपुराणानि – पा

ननु योगेनैव तनुत्यागिनामपि भीष्मादीनां किमिति तदैव मुक्तिर्नाभूत्? इत्याशङ्क्य, तनुत्यागकाले योगाभावादित्याह – **भीष्मादीनामिति** ॥

**(भा) भीष्मादीनां तु तत्क्षणे युक्त्यभावः ।**

(टी) ननु 'स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति' इति ब्रह्मगतेः पूर्वकालीनत्वं योगस्य प्रतीयते । कायान्निर्गतिश्च ब्रह्मगत्यन्तर्गता । अतः कायान्निर्गतेः प्रागस्यां स्थित्वेति प्रतीतेः किं तत्कालयोगेन? इत्यत आह – **स्मरन्निति** ॥

**(भा) 'स्मरंस्त्यजति'[1] इति वर्तमानापदेशो हि कृतः ।**

(टी) 'स्मरंस्त्यजति' इति वर्तमानोपदेशकरणात्, कायत्यागकालेऽप्यस्यां स्थित्वा ब्रह्म गच्छतीत्येवार्थः ।

तेषां तत्क्षणे युक्त्यभावे किं मानम्? इत्यत आह – **तच्चेति** ॥

**(भा) तच्चोक्तम् –**

**'ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा ।**
**विष्णुमाया तदा तेषां मनो बाह्यं करोति हि' इति गारुडे ।**

(टी) प्रारब्धकर्मयुक्तानामित्यर्थः ।

नन्वन्येषामपि मृतिकाले हरिस्मृतिदर्शनात् कथं भीष्मादीनां सा नास्ति? इत्यत आह – **न चेति** ॥

**(भा) न चान्येषां तदा स्मृतिर्भवति –**
**'बहुजन्मविपाकेन भक्तिज्ञानेन ये हरिम् ।**
**भजन्ति तत्स्मृतिं त्वन्ते देवो याति न चान्यथा' इत्युक्तेर्ब्रह्मवैवर्ते ।**

---

१. गी. ८/६

(टी) ननु कार्यदेहोपेतस्यापरब्रह्मणः एव गम्यत्वोपपत्तेः तदेव [१]ज्ञान्यृच्छतीत्यत आह – **निर्वाणमिति ॥**

(भा) [२]**निर्वाणमशरीरम् । 'कायो बाणं शरीरं च' इत्यभिधानात् । 'एतद्बाणमवष्टभ्य' इति प्रयोगाच्च ।**

(टी) न चाशरीरस्याकाशवन्नित्यव्याप्तस्य परब्रह्मणो न ज्ञानिगम्यतेत्यत आह – **निर्वाणशब्देति ॥**

(भा) [३]**निर्वाणशब्दप्रतिपादनम् 'अनिन्द्रियाः'[४] इत्यादिवत् ।**

(टी) जडदेहाभावात् भिन्नदेहाभावाद्वा निर्वाणं ब्रह्म वासुदेवाख्यम् । यथा नारदैकनादिभिः(?) दृष्टदेहा अपि मुक्ताः 'अनिन्द्रिया अनाहारा अनिष्पन्दाः' इत्युच्यन्ते । स्वरूपभूतापरिमितज्ञानानन्दादिगुणसान्द्रसूक्ष्मतरकरचरणाद्यात्मकदेहाभावोऽपीति(?) चेत्, तत्प्रतिपादकसर्ववेदपुराणादिविरोध इत्याह – **कथमन्यथेति ॥**

(भा) **कथमन्यथा सर्वपुराणादिप्रसिद्धाऽऽकृतिर्भगवत उपपद्यते? न चान्यद्भगवत उत्तमं ब्रह्म । 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति भागवते[५] । 'भगवन्तं परं ब्रह्म' 'परं ब्रह्म जनार्दनः', 'परमं यो महद्ब्रह्म'[६], 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः'[७], 'योऽसावतीन्द्रियग्राह्यः', 'नास्ति नारायण-**

---

१. ज्ञान्यृच्छेदित्यत – पा
२. 'निर्बाणमशरीरम्' इति प्रचलितपाठः ।
३. 'निर्बाण-' इति प्रचलितपाठः ।
४. भारते शान्ति ३३५/१३
५. १/२/११
६. भारते अनु १४९/९
७. गी १५/१८

समं न भूतं न भविष्यति'[१], 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः'[२] इत्यादिभ्यः । न च तद्ब्रह्मणोऽशरीरत्वादेतत् कल्प्यम् । तस्यापि शरीरश्रवणात् 'आनन्दरूपममृतम्'[३], 'सुवर्णज्योतिः', 'दहरोऽस्मिन्नन्तराकाशः'[४] इत्यादिषु । यदि रूपं न स्यात्, आनन्दमित्येव स्यात्, न त्वानन्दरूपमिति । कथं च सुवर्णरूपत्वं स्यादरूपस्य? कथं दहरत्वम् ? दहरस्थश्च – 'केचित् स्वदेह-'[५] इत्यादौ रूपवानुच्यते । 'सहस्रशीर्षा पुरुषः'[६], 'रुग्मवर्णं कर्तारम्'[७], 'आदित्यवर्णं तमसः परस्तात्'[८] 'सर्वतः पाणिपादं तत्'[९], 'विश्वतश्चक्षुरुत'[१०] इत्यादिवचनात् । विश्वरूपाध्यायादेश्च रूपवानवसीयते । अतिपरिपूर्णतमज्ञानैश्वर्यवीर्यानन्दश्रीशक्त्यादिमांश्च भगवान् – 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'[११] 'यः सर्वज्ञः'[१२], 'आनन्दं ब्रह्मणः'[१३], 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'[१४], 'अनादिमध्यान्तमनन्तवीर्यम्'[१५], 'सहस्रलक्षामितकान्तिकान्तः', 'मय्यनन्तगुणेऽनन्ते गुणतोऽनन्त-

१. भारते आदि १/१८
२. गी ११/४३
३. आथर्वणोपनिषत् २/२/७
४. छान्दोग्योपनिषत् ८/१/१,२
५. भागवते २/२/८
६. ऋग्वेदे १०/९०/१
७. मुण्डकोपनिषत् ३/१/३
८. गी. ८/९
९. भारते शान्ति २३९/२९, श्वेताश्वरतोपनिषत् ३/१६
१०. श्वेताश्वतरोपनिषत् ३/३, महानारायणोपनिषत् २/२
११. श्वेताश्वतरोपनिषत् ६/८
१२. मुण्डकोपनिषत् १/१/९
१३. तैत्तिरीयोपनिषत् २/४
१४. बृहदारण्यकोपनिषत् ४/३/३२
१५. गी. ११/१९

विग्रहे'[१], 'विज्ञानशक्तिरहमासमनन्तशक्तेः'[२], 'तुर्यं तत् सर्वदृक् सदा'[३], 'आत्मानमन्यं च स वेद विद्वान्', 'अन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः'[४], 'ऐश्वर्यस्य समग्रस्य'।

'अतीव परिपूर्णं ते सुखं ज्ञानं च सौभगम्।
यच्चात्ययुक्तं स्मर्तुं वा शक्तः कर्तुमतः परः' इत्यादिभ्यः।

तानि च सर्वाण्यन्योन्यस्वरूपाणि – 'विज्ञानमानन्दं ब्रह्म'[५], 'आनन्दो ब्रह्मेति व्यजानात्'[६], 'सत्यं ज्ञानमनन्तं ब्रह्म'[७], 'यस्य ज्ञानमयं तपः'[८], 'स मा भग प्रविश स्वाहा'[९]।

(टी) ननु भवतु सर्वपुराणादिप्रसिद्धाकृतयः(?) स्युरेवेत्यत आह – न तस्येत्यादि ॥

(भा) 'न तस्य प्राकृता मूर्तिर्मांसमेदोस्थिसम्भवा।
न योगित्वादीश्वरत्वात् सत्यरूपाच्युतो विभुः'[१०]

(टी) अप्राकृतविग्रहत्वात् न तत्प्रयुक्ता दोषा भगवतः। न चैतद्ध्यान-योगादिपरितुष्टेश्वरप्रसादात् किन्तु ईश्वरत्वात्, अतः सत्यम्।

'सच्छब्द उत्तमं ब्रूयादानन्दाभिभवं वदेत्।
येति ज्ञानं समुद्दिष्टम्' इत्युक्तेः सान्द्रपूर्णानन्दानुभवात्मक एव तद्देहः[११]।

---

१. भागवते ६/४/४८
२. भागवते ३/९/२४
३. माण्डूक्योपनिषत् २/४
४. भागवते १/१८/२१
५. बृहदारण्यकोपनिषत् ३/९/३४
६. तैत्तिरीयोपनिषत् ३/६
७. तैत्तिरीयोपनिषत् २/२/१
८. मुण्डकोपनिषत् १/१/९
९. तैत्तिरीयोपनिषत् १/४/६
१०. वाराहवचनत्वेनोदाहृतम् भागवततात्पर्ये १/३/१
११. भगवद्देहः – पा

एतदेव विवृणोति – सद्देह इति ॥

(भा) 'सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः' इति पैङ्गिखिले ।
'देहोऽयं मे सदानन्दो नायं प्रकृतिनिर्मितः ।
परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम्' इत्यादिभ्यो ब्रह्मवैवर्ते ।

(टी) अत्र सच्छब्दोक्तसाधुभावापरपर्यायसर्वोत्तमत्वे सर्वे गुणाः अन्तर्भूताः । सर्वदोषराहित्यं च एवंविधदेहत्वात् । [1]परमोऽक्षरः तद्देहतद्गुणादेः न किञ्चित् क्षरणमित्यर्थः । नित्यनिर्दोषः सन्नित्युच्यते । निर्दोषत्वात् सर्वगुणत्वाच्च सर्वगुणपूर्णो नारायण इत्यर्थः ।

कथं तर्हि कृष्णरामादिरूपे भगवति देशकालपरिच्छेदः क्वचिद्गर्भवासाज्ञानादिसंसारधर्मा इत्यत आह – तदेवेति ॥

(भा) तदेव लीलया चासौ परिच्छिन्नादिरूपेण दर्शयति मायया ।
'न च गर्भेऽवसद्देव्या न चापि वसुदेवतः ।
न चापि राघवाज्जातो न चापि जमदग्नितः ।
नित्यानन्दोऽद्वयोऽप्येवं क्रीडते(ऽ)मोघदर्शनः' – इति पाद्मे ।

(टी) मायया स्वेच्छया परमाच्छादिकया च । न च नटानामिव स्वरूपगूहनादौ तस्य क्लेश इत्याह – लीलयेति ॥

स्वयम् अमोघदर्शनः । मोघदर्शनः इति वा । अयोग्यानां मोघं दर्शयतीति । तथैव ह्युत्तरत्र[2] 'बोधरूपोऽप्यबोधं लोकानां दर्शयन्' इति ।

(भा) 'न वै स आत्माऽऽत्मवतामधीश्वरो
भुङ्क्ते हि दुःखं भगवान् वासुदेवः'[3],

---

१. परमाक्षरः तद्देहः । तद्गुणादेः ... – पा ; २. अनुपदमेव पठितं भाष्ये ।
३. भागवते ५/१९/६

'सर्गादेरीशिताऽजः परमसुखनिधिर्बोधरूपोऽप्यबोधं
लोकानां दर्शयन् यो मुनिसुतहृतात्मप्रियार्थे जगाम'

(टी) रावणाहृतसीताकृतौ प्रविष्ट इन्द्रोऽपि भगवत्प्रिय एव ।

(भा) 'स ब्रह्मवन्द्यचरणो नरवत् प्रलापी ।
स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार'[१],
'पूर्तेरचिन्त्यवीर्यो यो यश्च दाशरथिः स्वयम् ।
रुद्रवाक्यमृतं कर्तुमजितो जितवत् स्थितः ।'
'योऽजितो विजितो भक्त्या गाङ्गेयं न जघान ह ।
न चाम्बां ग्राहयामास करुणः कोऽपरस्ततः'
– इत्यादिभ्यश्च स्कान्दे न तत्र संसारधर्मा निरूप्याः ।

(टी) पूर्णत्वाद्योऽचिन्त्यवीर्यो भगवान् भार्गवरामः, यतश्च स्वयमेव दाशरथी रामः, स कथं दाशरथिना पराभूतः, किन्त्वजित एव जितवत् स्थितः ।

रुद्रवाक्यमृतं कर्तुम् । यदा हरिर्जितः तदैव तद्बहिर्गतः सन् वध्यसेऽन्यथा रुद्रवाक्यं मृषा भवतीति [२]ब्रह्मवाक्यमतुलं प्रति । अतोऽन्यदाऽपि तं निस्सारयितुं भगवान् समर्थो जितवत् भूत्वैव तं निस्सारयामासेत्यविरोधः[३] ।

अचिन्त्यवीर्यत्वादेव स भगवान् भीष्मेणापि शक्त्या न जितः । किन्तु तद्भक्त्यैव । अतो भगवदवतारेषु न कश्चित्संसारधर्मः[४] ।

---

१. भागवते ११/१०/११

२. पुराऽतुलो नाम महासुरोऽभवत् वरात् स तु ब्रह्मण आप लोकताम् ।
पुनश्च तं प्राह जगद्गुरुर्यदा हरिर्जितस्याद्धि तदैव वध्यसे ॥ – म.भा.ता.नि.(४/५९)

३. 'यदा हरिर्जितः स्यात् तदैव वध्यसे' इति रुद्रवाक्यम् । तदेव लोकावतारं ब्रह्म यच्छता ब्रह्मणाऽनुदितमेव । अतो न विरोधः । – भावप्रदीपिका
ब्रह्मवाक्यवत् रुद्रवाक्यमप्यतुलं प्रत्यस्तीत्यतो रुद्रवाक्यमित्युक्तम् । – प्र.दी.

४. न कचित्संसारधर्माः । – पा

ननु विश्वरूपापेक्षयाऽवरत्वात् कृष्णादिरूपस्य, तत्र सत्यपि संसारधर्मे को विरोध इत्यत आह – यत्र चेति ॥

**(भा) यत्र च परावरभेदोऽवगम्यते तत्राज्ञबुद्धिमपेक्ष्यावरत्वं विश्वरूपमपेक्ष्यान्यत्र ।**

(टी) स्कान्दात् **अन्यत्र यत्र** ग्रन्थान्तरे भगवद्रूपेष्वेव **परावरादिभेदोऽवगम्यते,** तत्र यदि **विश्वरूपमपेक्ष्यावरत्वं** कृष्णादिरूपस्य तदज्ञबुद्धिमपेक्ष्यैवेत्यर्थः ।

तत्र प्रमाणमाह – **तच्चेति** ॥

**(भा) तच्चोक्तम् –**

**'परिपूर्णानि रूपाणि समान्यखिलरूपतः ।**
**तथाऽप्यपेक्ष्य मन्दानां दृष्टिं त्वामृषयोऽपि तु ।**
**परावरं वदन्त्येवं ह्यभक्तानां विमोहने' इति गारुडे ।**

(टी) ननु द्विभुजचतुर्भुजदाशरथिवासुदेवादिरूपस्य देशकालादिभिः परिपूर्त्यभिधानमौपचारिकं किं न स्यात्? इत्यत आह – **न चात्रेति** ॥

**(भा) न चात्र किञ्चिदुपचरितादि वाच्यम् । अचिन्त्यशक्तेः पदार्थवैचित्र्याच्चेत्युक्तम् ।**

(टी) तर्हि कथं तेषु परिच्छेदादिदर्शनम्? इत्याशङ्क्य, तदयोग्यानां मोहनार्थमिति भावेनाह – **कृष्णरामादीति** ॥

**(भा) 'कृष्णरामादिरूपाणि परिपूर्णानि सर्वदा ।**
**न चाणुमात्रं भिन्नानि तथाऽप्यस्मान् विमोहसि'**

**– इत्यादेश्च नारदीये ।**

(टी) अध्यायार्थमुपसंहरति[१] – तस्मादिति ॥

॥ इति श्रीमद्भगवद्गीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां द्वितीयोऽध्यायः ॥

(भा) तस्मात् सर्वदा सर्वरूपेष्वपरिगणितानन्तगुणगणं नित्यनिरस्ताशेषदोषं च नारायणाख्यं परं ब्रह्मापरोक्षज्ञानी ऋच्छतीति सिद्धम् ॥७२॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये द्वितीयोऽध्यायः ॥

---

१. श्लोकार्थमुपसंहरति – तस्मादिति ॥ – भावप्रदीपिका, प्रमेयदीपिका च

# तृतीयोऽध्यायः

**(टी)** तृतीयाध्यायार्थं वदन् सङ्गतिप्रसङ्गेन पूर्वाध्यायार्थं चाह – **आत्मस्वरूपमिति ॥**

**(भा) आत्मस्वरूपं ज्ञानसाधनं चोक्तं पूर्वत्र । ज्ञानसाधनत्वेनाकर्म विनिन्द्य कर्म विधीयत उत्तराध्याये ।**

**(टी)** परमात्मस्वरूपम्[1] । तज्ज्ञानस्यैव पुरुषार्थहेतुत्वात् । अत एव 'ज्ञानं हि जैवमुक्तम्'[2] इत्यत्र जीवाश्रितज्ञानं [3]परमात्मविषयमिति ज्ञातव्यम् । तदुपायस्यैवोपर्यभिधानाच्च । 'न त्वेवाहम्'[4] इति दृष्टान्तमुखेन शास्त्रप्रतिपाद्यमेवोन्मुखीचकार । उपरि च 'नाभावो विद्यते सतः'[5], 'अप्रमेयस्य'[6], 'अजो नित्यः'[7], 'सर्वगतस्थाणुः'[8] इति परमात्मस्वरूपस्यैव प्रतिपादकत्वात्, न च तस्यान्यार्थता । बिम्बपरिज्ञानार्थत्वदर्शनात् प्रतिबिम्बावलोकस्य । अतो 'न त्वेवाहम्' इत्यारभ्य प्राधान्यतः परमात्मा परमात्मस्वरूपम्[9], तज्ज्ञानसाधनं च सयोगकर्म 'योगस्थः'[10] इत्यादावुक्तं पूर्वाध्याये ।

उत्तराध्याये यदि बन्धभयात् कर्मसंयोगः क्रियते, तर्ह्यकरणेऽपि बन्धो न स्यात् । कृतानां तु कर्मणां भोगेन क्षयात्, किं कर्मणा तत्साध्येन वा ज्ञानेन ? इत्याशङ्क्य, अनन्तत्वात् कर्मणां भोगतः साकल्येन क्षयासम्भवात्, पुनरकर्तुमशक्यत्वात्, कर्मेन्द्रियसंयमनेऽपि मानसदुष्कर्मोत्पत्त्या मिथ्या-

---

१. आत्मपदाज्जीवेश्वरौ । – भावप्रदीपिका

२. गी.भा. २/३९

३. परमविषयमिति – पा

४. गी. २/१२

५. गी. २/१६

६. गी. २/१८

७. गी. २/२०

८. गी. २/२४

९. तत्स्वरूपम् – पा

१०. गी. २/४८

चारत्वप्रसङ्गात्, प्रजापतिवचनलङ्घनप्रसङ्गात्[१], स्वोपकारिदेवायजनेन कृतघ्नत्वापत्तेः, स्वविहितयज्ञद्वारा चक्राप्रवर्तनेन विश्वहननदोषप्रसङ्गाच्च, न कर्माकरणं मुक्तिसाधनमित्यकर्म विनिन्द्य[२], ज्ञानमेव मुक्तिसाधनमिति ज्ञानसाधनत्वेन कर्म विधीयते 'तस्मादसक्तः' इत्यादिनेति भावः ।

तत्र तावज्ज्ञानस्य मुक्तिसाधनत्वम्, तत्साधनत्वं च कर्मणोऽङ्गीकारेऽपि[३] न घोररूपं युद्धादिकं मुक्तिहेतुज्ञानसाधनम्, 'शान्तो दान्तः'[४] इत्यादिविरोधात् । 'स्वर्गद्वारमपावृतम्'[५] इत्यादिनाऽन्यार्थतावगतेश्च । अतः स्वर्गादिफलकर्मणः सकाशात् बुद्धिर्ज्यायसी चेत् बुद्धिहेतुशान्त्यादिनिवृत्तिधर्मेष्वेव नियोजय माम्, किमिति पुनः स्वर्गादिहेतुयुद्धादौ नियोजयसि? इति प्रश्नाभिप्रायं प्रकटयन् तद्वाक्यमवतारयति – **कर्मण इति** ।।

**(भा) कर्मणो ज्ञानमत्युत्तममित्यभिहितं भगवता 'दूरेण ह्यवरम् कर्म'[६] इत्यादौ । एवं चेत् किमिति कर्मणि घोरे युद्धाख्ये नियोजयसि निवृत्तधर्मान् विनेत्याह – ज्यायसीति ।।**

---

१. -वचनानालम्बप्रसङ्गात् – पा

२. युक्तिभिः कर्माकरणस्यैव मोक्षाङ्गत्वान्नावश्यं कर्मानुष्ठेयमिति कर्माकरणपक्षं ''कर्मणामकर्तुमशक्यत्वात्, कर्मेन्द्रियसंयमेऽपि मानसदुष्कर्मादिमिथ्याचारत्वप्रसङ्गात्, प्रजापतिवाक्यानालम्बनप्रसङ्गात्, स्वोपकारिदेवायजनेऽकृतज्ञत्वापत्तेः, स्वविहितयज्ञद्वारा चक्राप्रवर्तने विश्वहननदोषप्रसङ्गाच्च, न कर्माकरणं मुक्तिसाधनम्'' इति प्राचीनटीकोक्तरीत्या विनिन्द्येत्यर्थः । **– भावरत्नकोशे**

कथं विनिन्द्य इति तु न विवृतं प्रमेयदीपिकायां प्राचीनटीकां मनसि निधाय इति सुमतीन्द्रतीर्थश्रीमच्चरणानां हृदयम् । एवमुत्तरत्राप्यूह्यम् ।

३. -ङ्गीकृत्यापि – पा

४. बृहदारण्यकोपनिषत् - ४/४/२३

५. गी. २/३२

६. गी. २/४९

**अर्जुन उवाच –**

**ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत् किं कर्मणि घोरे मां नियोजयसि केशव ॥१॥**

**व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥२॥**

**(टी)** 'ज्यायसी' इत्यादि 'तत्' इत्यन्तं वाक्यं योजयति – **कर्मणः सकाशादिति** ॥

(भा) कर्मणः सकाशात् बुद्धिर्ज्यायसी चेत् ते मता, तत् तर्हि[१] ॥१,२॥

**(टी)** 'हतो वा प्राप्स्यसे स्वर्गम्'[२] इत्युक्त्वा [३]'कर्मण्येवाधिकारस्ते मा फलेषु' [४]इत्याद्युक्तेः व्यामिश्रवाक्यम्[५] ॥१,२॥

सत्यम्, बुद्धिरभ्यधिका स्वर्गादिफलकर्मणः । तथाऽप्यधिकारिभेदाद्युद्धादेरपि बुद्धिहेतुत्वं बुद्धिमद्युद्धादेर्मुक्तावानन्दवृद्धिहेतुत्वं चाविरुद्धमिति परिहाराभिप्रायं प्रकटयन् तद्वाक्यमवतारयति – **ज्यायस्त्वेऽपीति** ॥

---

१. 'मता तर्हि' प्रचलितपाठः ।; २. गी. २/३७ ('प्राप्स्यसि' इति प्रचलितपाठः)

३. गी. २/४७

४. इत्युक्तं – पा

५. इदमुक्तं भवति । आश्रमत्रयविहितानि यज्ञादीनि युद्धादीनि च कर्माणि काम्यान्येव । फलश्रवणात् 'सर्व एते पुण्यलोका भवन्ति' इत्यादि । तथाऽत्रापि 'हतो वा प्राप्स्यसि स्वर्गम्' इत्यादि । चतुर्थाश्रमविहितानि शमदमादीन्यकाम्यानि । फलाश्रवणात् । 'शान्तो दान्तः' इत्युपक्रम्य, 'आत्मानं पश्येत्' इति ज्ञानार्थत्वश्रवणाच्च । ज्ञानं च काम्यात् कर्मणोऽत्युत्तममित्यभिहितम् । ततश्च काम्ये कर्मणि युद्धे 'युद्ध्यस्व भारत' इति नियोजनमयुक्तम् । किन्तु, चतुर्थाश्रमं स्वीकृत्य तद्धर्मनिष्ठो भवेति नियोक्तव्यम् । ननु युद्धमपि 'कर्मबन्धं प्रहास्यसि' इत्युक्तत्वात् ज्ञानार्थं भवतीति मतम्, तदा व्यामिश्रेण वाक्येन बुद्धिमोहनमिवापद्यते । – प्र.दी.

(भा) ज्यायस्त्वेऽपि बुद्धेराधिकारिकत्वात् त्वं कर्मण्यप्यधिकृत इति तत्र नियोक्ष्यामीत्याशयवान् भगवानाह – लोक इति ॥

**श्रीभगवानुवाच**

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।**
**ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥३॥**

**(टी)** न च 'हतो वा' इत्यादिनाऽन्यार्थतो मुक्तिविरोधत्वं युद्धादेः, उत्तमाधिकारिज्ञानिकर्मणः स्वर्गाद्यतिशयजनकत्वेऽपि मुक्तावानन्दवृद्धिकरत्वाविरोधात् । अधिकारिणां च यावदधिकारमवस्थितेरपेक्षिततत्वात् स्वर्गादाविति भावः ।

अधिकारिशब्दो न ज्ञानाधिकारिमात्रमाचष्टे किन्तु कांश्चिदेव । तथा ह्युक्तम् –

'प्रजापाश्च तथा देवा महाधीकारिणः स्मृताः ।
ऋष्यशीतिस्तथा सप्तपितरोऽप्सरसां शतम् ।
गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ।
अल्पाधिकारिणः प्रोक्ताः अनधीकारिणः परे' इति ब्रह्माण्डे[1] ।

श्लोकतात्पर्यं तावत् सोदाहरणमाह – **द्विविधा इति** ॥

**(भा) द्विविधाः अपि जनाः सन्ति । गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः सनकादिवत् । तत्स्था एव ज्ञाननिष्ठाश्च जनकादिवत् । मद्धर्मस्था एवेत्यर्थः ।**

**(टी)** कर्मयोगप्रतियोगित्वेनोक्ते ज्ञानयोगे, कर्मत्यागोऽवगम्यमानो गृहस्थादिकर्मत्यागः, न ज्ञानान्तरं शमादिपारमहंस्यकर्मत्यागः । ज्ञानस्य निष्ठा

१. भागवततात्पर्योदाहृतम् - ५/६/५

येषां ते ज्ञाननिष्ठाः । स्थितप्रज्ञा इत्यर्थः । ज्ञाने निष्ठा येषामिति वा । योग्यत्वेनात्र ज्ञानपदं प्रतिष्ठितम् । [१]ज्ञाननिष्ठाश्चेत् भगवद्धर्मस्थिता एव । **निवृत्तिधर्मान् विना** इत्यस्यायं परिहारः । भगवद्धर्मो हि निवृत्तिधर्मः[२] । तथाहि तल्लक्षणं 'निष्कामं ज्ञानपूर्वं च'[३] इति ।

'स्वोचितेनैव धर्मेण विष्णुपूजामृते क्वचित् ।
नाप्रवृत्तिः प्रवृत्तिर्वा यत्र धर्मः स वैष्णवः ॥'[४] इति ।

'साङ्ख्य''योग'पदयोरत्र विवक्षितार्थं सोदाहरणमाह– **साङ्ख्यानामिति ॥**

**(भा)** साङ्ख्यानां **ज्ञानिनां सनकादीनाम्** । योगिनाम् उपायिनां जनकादीनाम् ।

**(टी)** ननु यैरितःपरं ज्ञानमुपेयं त उपायिनः स्युः । ये तु ज्ञाननिष्ठाः उपेतज्ञानास्तेषां किमुपायेनेत्यत आह – **ज्ञाननिष्ठा अपीति ॥**

**(भा) ज्ञाननिष्ठा अप्याधिकारिकत्वादीश्वरेच्छया लोकसङ्ग्रहार्थत्वाच्च ये कर्मयोग्या भवन्ति तेऽपि योगिनः ।**

**(टी)** ज्ञानाख्योपायलाभेऽपि मुक्तावानन्दवृद्ध्यर्थं ये[५] पुनर्ज्ञानोपायमनुतिष्ठन्ति तेऽपि योगिन इत्यर्थः ।

'निष्ठा'पदस्य [६]स्थितिवाचित्वात् स्थितप्रज्ञानाचष्ट इति भावेनाह – **निष्ठेति ॥**

**(भा)** निष्ठा **स्थितिः** ।

---

१. प्रज्ञानिष्ठाश्चेत् – पा
२. निवृत्तधर्मः – पा
३. गीतातात्पर्योदाहृतव्याससमृतिवचनम् (५/५)
४. गी.ता. - २/४४
५. क्वचिद् 'ये' इति नास्ति
६. निश्चितवाचित्वात् – पा

**(टी)** अनेनैवंविधः श्लोकान्वयः सूच्यते[१] – द्विविधाः जनाः साङ्ख्याः योगिनश्च । तत्र साङ्ख्यानां समाधिजपकथादीनां ज्ञानयोगाख्येन करणेन ज्ञाननिष्ठा सिद्ध्यति । तदुत्तरकाले च ज्ञानयोगेन सह ज्ञाननिष्ठा वर्तन्ते । योगिनामपि कर्मयोगेन ज्ञाननिष्ठा सिद्ध्यति । तदुत्तरकाले च तेन सह वर्तन्त इति भगवता पुरा प्रोक्तं 'कर्मण्येवाधिकारः' इत्यादौ [२]।

भवन्त्वेवंविधाः[३] जनाः । कोऽहमेषाम्? इत्याकाङ्क्षायां श्लोकफलितार्थमाह – त्वं त्विति ॥

**(भा) त्वं तु जनकादिवत् सकर्मैव ज्ञानयोग्यः, न तु सनकादिवत् तत्त्यागेनेत्यर्थः ।**

**(टी)** ज्ञाननिष्ठानामपि कर्मानुष्ठेयमित्यत्र सदाचारं सप्रमाणकमाह –सन्ति हीति ॥३॥

**(भा) सन्ति हीश्वरेच्छयैव कर्मकृतः प्रियव्रतादयो ज्ञानिन एव । तथा-ह्युक्तम् । 'ईश्वरेच्छया विनिवेशितकर्माधिकारः'[४] इति ॥३॥**

**(टी)** कर्माकरणमात्रेण मुक्त्यनुपपत्तेरपि त्वया स्ववर्णाश्रमोचितं [५]नित्यकर्मानुष्ठेयमिति भावेनोत्तरमर्धमवतारयति – इतश्चेति ॥

---

१. अयमत्रोत्तरक्रमः । आश्रमत्रयविहितानि यज्ञादीनि युद्धादीनि च न शुद्धकाम्यानि । किन्तु कर्तुरिच्छया स्वर्गाद्यर्थानि ज्ञानाद्यर्थानि च भवन्ति । अतो बुद्धेः काम्यकर्मणो ज्यायस्त्वेऽपि युद्धस्य बुद्ध्यर्थत्वसम्भवात् तत्र नियोगो नानुपपन्नः । यतिधर्मान् विना किमेतेन नियोगेन? इति चेत्, अनधिकारिणामेव यत्याश्रमस्वीकारो नाधिकारि-काणाम् । तैर्गृहस्थाद्याश्रममपरित्यज्यैव तद्विहितानि कर्माणि निष्कामतयाऽनुष्ठेयानी-तीश्वरनियमात्, तव चाधिकारिकत्वादिति । – प्र.दी.

२. पुरा पूर्वम् 'कर्मण्येवाधिकारः' इत्यादाविति प्राचीनटीका । – भावरत्नकोशे

३. भवन्त्वेवं द्विविधाः । – पा ४. भागवते ५/१/२३

५. नित्यं कर्मानुष्ठेयं – पा

(भा) इतश्च नियोक्ष्यामीत्याह – न कर्मणामिति ॥

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**

**(टी)** यद्यपि 'निष्कर्मतया प्राप्यत इति नैष्कर्म्यम्' इति नैष्कर्म्यशब्दबलात् कर्माकरणेन मोक्षः शक्यते । तथाऽपि 'काम्यकर्मपरित्यागेन स प्राप्यते' इति [1]युद्धादिनित्यकर्मणामनारम्भेण मोक्षं न प्राप्नोति । तेषामन्तःकरणशोधकत्वेन ज्ञानहेतुवैराग्यजनकत्वात्, तस्यैव मुक्तिहेतुत्वादिति भावेन तं व्याचष्टे – **कर्मणामिति ॥**

**(भा) कर्मणां युद्धादीनामनारम्भेण नैष्कर्म्यं निष्कर्मतया काम्यकर्मपरित्यागेन प्राप्यत इति मोक्षं नाश्नुते । ज्ञानमेव तत्साधनं, न तु कर्माकरणमित्यर्थः ।**

**(टी)** कर्माकरणमात्रेण मुक्तिः कुतो न? इत्याकाङ्क्षापूर्वकं पुरुषपदं तदुत्तरत्वेनावतार्य व्याचष्टे – **कुत इत्यादिना ॥**

**(भा) कुतः? पुरुषत्वात् । सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो ननु जीवः ।**

**(टी)** एतावन्तं कालं स्थावरजङ्गमात्मकस्थूलदेहप्रवाहान्वितत्वात्, सततं लिङ्गदेहान्वितत्वाद्वा, न कर्माकरणं मुक्तिहेतुरिति भावः ।

नन्वेतावन्तं कालममुमुक्षुत्वात् तदन्यभोगाय कर्मकरणादमुक्तिरित्याशङ्क्य, मुमुक्षुत्वेऽपि स्थावराणां कर्माकरणसम्भवात् तेषां मुक्तिः स्यादिति भावेनाह – **यदीति ॥**

**(भा) यदि कर्माकरणेन मुक्तिः स्यात् स्थावराणाम् ।**

---

१. युद्धाख्यनित्यकर्मणा- पा, युद्धाद्यनित्यकर्मणा – पा

**(टी)** स्यादित्युभयतः सम्बद्ध्यते[१] । ततो[२] न ज्ञानाद्विना[३] मुक्तिरिति भावः ।

नन्वतीतजन्मादृष्टं भोगेन क्षपयतां पुनरकरणे, कर्माभावात् मुक्तिः स्यादेव स्थावराणामपि, को दोषः? इत्यत आह – **न चेति ॥**

(भा) **न चाकरणे कर्माभावान्मुक्तिर्भवति । प्रतिजन्मकृतानामनन्तकर्मणां भावात् ।**

**(टी)** नन्वतीतातीतजन्मादृष्टस्योत्तरोत्तरजन्मन एव क्षपणात्, कथमनन्त-कर्मसम्भवः? इत्यत आह – **न च सर्वाणीति ॥**

(भा) **न च सर्वाणि कर्माणि भुक्तानि । एकस्मिन् शरीरे बहूनि हि कर्माणि करोति ।**

**(टी)** ननु करोत्येकेनैव देहेन बहुकर्माणि । तेषामेकेनैव जन्मना भोगः किं न स्यात्? इत्यत आह – **तानि चेति ॥**

(भा) **तानि चैकैकानि बहुजन्मफलानि कानिचित् ।**

**(टी)** कानिचिदिति विशेषणादेकैकजन्मफलान्यपि कानिचिदिति भावः ।

ननु यदि कथञ्चित् तिर्यगादिफलान्येव तानि सर्वाणि **तर्त्तर्हि** तत्र पुण्यपापाभावात्, तद्भोगावसाने मुक्तिः स्यादित्यत आह – **तत्र चेति ॥**

(भा) [४]**तत्र चैकैकानि कर्माणि भुञ्जन् प्राप्नोत्येव शेषेण मानुष्यम् ।**

---

१. स्यादित्यस्य पूर्वोत्तराभ्यां सम्बन्धः । – प्र.दी.

२. अतो – पा

३. ज्ञानं विना – पा

४. 'तत्रैकैकानि' इति प्रचलितपाठः प्रामादिक इति भाति । चशब्दव्याख्यानादुत्तरत्र ।

**(टी)** चशब्दात् मानुष्यफलान्येव[१] कानिचित् कर्माणीत्यर्थः ।

ननु भवतु दोषेण [२]प्राधान्येन मानुष्यम्, तत्राकरणे पुण्यपापयोस्तदन्ते मुक्तिः किं न स्यात्? इत्यत आह – ततश्चेति ॥

**(भा)** ततश्च [३]बहुशरीरफलकर्माणीत्यसमाप्तिः ।

**(टी)** तत्रावश्यं बहुशरीरफलकर्माणि करोति, अतो न ज्ञानं विना मुक्तिरिति भावः ।

तत्र प्रमाणमाह – तच्चेति ॥

**(भा)** तच्चोक्तम् –

'जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु ।
स्त्री वाऽप्यनूनदशकं देहं मानुषमार्जते ।
चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः ।
अतोऽवित्त्वा परं देवं मोक्षाशा का महामुने' इति ब्रह्माण्डे ।

**(टी)** संसारस्यादिमत्वे द्वित्र्यादिवर्षजीवानां कतिपयजन्मभिः पूर्वकर्मक्षये पुनः कर्माकरणादेव कथञ्चिन्मुक्तिशङ्का स्यादिति तन्निवृत्तये[४] तत्कर्म बाधितं चेत्याह – यदि चेति ॥

**(भा)** यदि च सादिः[५] स्यात् संसारः पूर्वकर्माभावादतत्प्राप्तिः ।

---

१. मनुष्यफलान्येव – पा
२. प्राधान्येन वा – पा
३. अत्र अस्मत्सम्पादितगीताभाष्यभावप्रदीपिकापुस्तके (पृ.११४) '' 'बहुशरीरफलानि कर्माणि' इति नरहरितीर्थादृतः'' इति प्रामादिकम् ।
४. तन्निवर्तये – पा
५. 'यदि सादिः' – प्रचलितपाठः हृपाठश्च ।

**(टी)** ननु भवतु नाम मुमुक्षोः तज्जन्मनि कर्माकरणेऽपि जन्मान्तरकृतानन्तकर्मबद्धत्वात् तन्निवृत्तिर्ज्ञानादेवेति तदर्थं प्रयत्नः । तथाऽपि पुनरबन्धाय कर्मणां युद्धादीनामनारम्भ एव स्यादित्यत आह – **अबन्धकत्वं त्विति ॥**

**(भा)** अबन्धकत्वं त्वकामेनैव भवति । तच्च वक्ष्यते- **'अनिष्टमिष्टम्'**[1] इति ।

**(टी)** अतः कामत्याग एव मुमुक्षुभिः कार्यो न कर्मत्यागः[2] ।

ननु ज्ञानादेव मोक्षाङ्गीकारात्, निष्कामकर्म किं ज्ञानाय?, फलाभावमात्राय वा ? नाद्यः । श्रवणादिभिरेव ज्ञानोत्पत्तेः । नेतरः । कर्माकरणेऽपि फलाभावोपपत्तेः । अतः किं तदायासेन? इति [3]भावेनाशङ्क्योत्तरार्धमवतार्य व्याचष्टे – **नन्विति ॥**

---

१. गी. १८/१२

२. अत्रेयं प्राचीनटीका "भवतु नाम मुमुक्षोः तज्जन्मनि कर्माकरणेऽपि जन्मान्तरकृतानन्तकर्मबद्धत्वात् तन्निवृत्तिर्ज्ञानादेवेति तदर्थः प्रयत्नः । तथाऽपि पुनः स्वात्मबन्धकानां युद्धादीनामनारम्भ एव युक्त इत्यत आह – अबन्धकत्वं त्विति ॥ अतः कामत्याग एव मुमुक्षुभिः कार्यः, न पुनः कर्मस्वरूपत्यागोऽपि" इति । – **भावरत्नकोशे**

ननु सन्तु प्राग्भवीयान्यनन्तकर्माणि । तथाऽपि बन्धकानि कथं प्रेक्षावता क्रियेरन् ? न ह्यनन्तानि पापानि प्राक्तनानि सन्तीत्येतावताऽद्य क्रियन्त इत्यत आह – अबन्धकत्वं त्विति ॥ कर्मणां बन्धाहेतुत्वं त्वकामादिनैव भवति । न त्वकरणेन । प्रत्यवायस्यैव प्राप्तेरित्यर्थः । – **प्र.दी.**

३. अयमभिप्रायः । कर्माणि न कार्याणीति वदन् प्रष्टव्यः । किं ज्ञानं न मोक्षसाधनम्, अपि तु कर्माकरणमेवेति मत्वा कर्माणि त्यज्यन्ते? उत ज्ञानं मोक्षसाधनं भवत्येव, किन्तु 'कर्मणा बद्ध्यते जन्तुः' इत्यादेः कर्माणि तत्प्रतिबन्धकादीनि इति मत्वा? आद्येऽपि किं मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वमात्रमाश्रित्येदमुच्यते? अथवा क्रियाकारकफलरूपस्य संसारस्य कर्मैव बीजम्, अकरणे च बीजाभावात् संसारो न भवतीति युक्तिमाश्रित्य? – **प्र.दी.**

(भा) ननु निष्कामकर्मणः फलाभावान्मोक्षः स्मृतः –

'निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते ।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्' इति मानवे[१] ।

अतस्तत्साम्यादकरणेऽपि भवतीत्यत आह – न चेति ॥

**न च सन्न्यसनादेव सिद्धिं समधिगच्छति ॥४॥**

(भा) सन्न्यासः काम्यकर्मपरित्यागः । 'काम्यानां कर्मणाम्'[२] इति वक्ष्यमाणत्वात् ।

**(टी)** न वयं काम्यकर्मत्यागेन तत्फलाभावात् मोक्षं ब्रूमः । येनेतरकर्मत्यागोऽपि शङ्क्येत । किन्त्वन्तःकरणशुद्ध्या विरक्तानां ज्ञानोदयादेवेत्याह – अकामकर्मणामिति ॥

(भा) अकामकर्मणामन्तःकरणशुद्ध्या ज्ञानान्मोक्षो भवति । तच्चोक्तम्– 'कर्मभिः शुद्धसत्त्वस्य वैराग्यं जायते हृदि' इति भागवते । विरक्तानामेव च ज्ञानमुक्तम् –

'न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन् ।
स्वप्ने निरुक्त्या गृहमेधसौख्यं न यस्य हेयानुमितं स्वयं स्यात्'[३] इति ।

न तु फलाभावात् । कर्माभावात् ।

**(टी)** अशुद्धान्तःकरणानां श्रवणादिभिरपि न ज्ञानोदय इति भावः ।

---

१. इह चामुत्र काम्यं तु प्रवृत्तं कर्म कीर्त्यते ।
निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ॥
प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम् ।
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ॥ – मनुस्मृतिः १२/८९,९०

२. गी. १८/२

३. भागवते ५/११/३

उपसंहरति – अत इति ॥

**(भा) अतो न कर्मत्याग एव मोक्षसाधनम् ।**

**(टी)** ननु यदि युद्धादीनामपि मोक्षसाधनज्ञानाङ्गत्वम्, कथं तर्हि मुमुक्षूणां तद्धीनयत्याश्रमाश्रयणमित्यत आह – **यत्याश्रमस्त्विति** ॥

**(भा) यत्याश्रमस्तु प्रायत्यार्थो भगवत्तोषणार्थश्च ।**

**(टी)** प्रायत्यं नाम विष्णौ स्वमति(?)ज्ञानादिनियामकत्वम्[१] । तच्चेतराश्रमिणां न सम्भवति[२], बाह्यकर्मविस्तारादित्याह – **अप्रयतत्वमिति** ॥

**(भा) अप्रयतत्वमेव हि प्रायो गृहस्थादीनाम् । इतरकर्मोद्योगात् ।**

**(टी)** ननु किं प्रायत्येन ? अकामकर्मकरणादेव ज्ञानोपपत्तेरित्यत आह – **अप्रयतानामिति** ॥

**(भा) अप्रयतानां च न ज्ञानम् ।**

**(टी)** न केवलं सकामानां न ज्ञानम् । किन्त्वप्रयतानां[३] चेत्यर्थः ।

तत्र प्रमाणमाह – **तथा हीति** ॥

**(भा) तथाहि श्रुतिः – 'नाशान्तो नासमाहितः'[४] इति ।**

**(टी)** 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमनसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥'

इत्यस्यायमर्थः – 'दुश्चरितात् अविरतः प्रज्ञानेनैनं परमात्मानं नाप्नुयात् । अशान्तः फलनिष्ठबुद्धित्वाच्चाविष्णुनिष्ठबुद्धिः । असमाहितः फलकामोऽपि

---

१. प्रायत्यं = प्रयतत्वम् । ईश्वरे मनःसमाधानम् । – प्र.दी.
२. नष्टं भवति – पा ३. किन्त्वप्रयत्नानां च – पा; ४.कठोपनिषत् १/६/१०

बाह्यकर्मोद्योगात् । अशान्तमनसः संयतकर्मेन्द्रियोऽपि विषयस्मृतिः । एतेऽपि[१] प्रकृष्टज्ञानेनैनं नाप्नुयुः' इति[२] ।

ननु भवतु प्रायत्यार्थो यत्याश्रमः, न तु भगवत्तोषार्थः । तस्येतराश्रमेष्वपि सम्भवादित्यत आह – **महांश्चेति** ॥

**(भा) महांश्च यत्याश्रमे तोषो भगवतः । तथा ह्याह – 'यत्याश्रमं तुरीयं तु दीक्षां मम सुतोषिणीम्'[३] इति नारायणाष्टाक्षरकल्पे ।**

**(टी)** यत्याश्रमस्यापि चातुर्विध्यात् यस्तुरीयः[४] पारमहंसाख्यः[५] तद्दीक्षां[६] भगवतः सुतोषकरामित्यर्थः[७] । प्रस्तुतांशस्यैवोदाहृतत्वात् शेषस्तत्रैव ज्ञातव्यो, नत्वध्याहर्तव्यः[८] ।

ननु तर्हि प्रायत्यभगवत्तोषयोरेव सिद्ध्ये मुमुक्षुमात्रस्य यत्याश्रमः किं न स्यात्? इत्यत आह – **आधिकारिकास्त्विति** ॥४॥

---

१. ये तेपि – पा

२. " 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमनसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥'
इति श्रुतेरयमर्थः । दुश्चरितादविरतः प्रज्ञानेनैनं परमात्मानं नाप्नुयात् । अशान्तः फलनिष्ठबुद्धित्वादभगवन्निष्ठः । असमाहितः फलकामोऽपि बाह्यकर्मोद्योगाद्भगवति चित्तसमाधानहीनः । अशान्तमनसः संयतकर्मेन्द्रियोऽपि विषयस्मृतिमान् । प्रज्ञानेनैनं प्राप्नुयात्" इति प्राचीनटीकायाम् । – **भावरत्नकोशे**

प्रज्ञानेनैनमाप्नुयात् इति श्रुतिशेषः । अशान्तः भगवन्निष्ठः । असमाहितः तत्र चित्त-समाधानहीनः । – **प्र.दी.**

३. **'दीक्षा मम सुतोषिणी'** – पा ४. **यस्तुर्यः** – पा

५. तुरीयं परमहंसाख्यम् । – **प्र.दी.**

६. **तद्दीक्षा** – पा

७. **सुतोषकरीत्यर्थः** – पा

८. वाक्यशेषेणान्वयः । – **प्र.दी.**

(भा) आधिकारिकास्तु तत्स्था एव प्रायत्ये समर्थाः । स एव च महान् भगवत्तोषः । तच्चोक्तम् –

'देवादीनामादिराज्ञां महोद्योगेऽपि नो मनः ।
विष्णोश्चलति तद्धोगोऽप्यतीव हरितोषणम्' इति पाद्मे ॥४॥

**(टी)** नन्वकामकर्मणां मोक्षाविरोधित्वेऽपि, अधमाधिकारिणामप्रायत्य-करत्वात् तत्सङ्कोचेन यत्याश्रमश्चेत्, सर्वकर्मत्याग एव श्रेयान् कर्मार्थ-प्रवृत्तेन्द्रियस्य विषयसङ्गभयादित्याशङ्कापरिहारायोत्तरश्लोकानवतारयति – न त्विति ॥५॥

(भा) [१]न तु कर्माणि सर्वात्मना त्यक्तुं शक्यानीत्याह – नहीति ॥५॥

**नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥५॥**

**(टी)** तथाऽपि यथाशक्त्यखिलं[२] कर्म त्याज्यम्, [३]विषयसङ्गपरित्यागस्या-वश्यकत्वादिति भावेनाशङ्क्य तदुत्तरत्वेनोत्तरं श्लोकद्वयमवतार्य व्याचष्टे – तथाऽपीति ॥

(भा) तथाऽपि शक्तितस्त्यागः कार्य इत्यत आह – कर्मेन्द्रियाणीति ॥

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥६॥**

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

---

१. 'न च' इति भावप्रदीपिकापाठः ।
२. यथाशक्त्याऽखिलं – पा
३. विषयसङ्गपरिहारस्या० –पा

**(टी)** विषयासक्तौ मनः प्रयोजकं न सर्वकर्मत्याग इत्याह – **मन एवेति**॥

**(भा) मन एव प्रयोजकमिति दर्शयितुमन्वयव्यतिरेकावाह** – मनसा स्मरन् मनसा नियम्येति ॥

**(टी)** ननु 'कर्मयोगेन योगिनाम्' इत्यत्र कर्मयोगशब्दस्य गृहस्थादि-त्रयकर्मपरत्वेन व्याख्यातत्वात् । तत्कर्त्रैवाधिकश्चेत् सर्वैरपि तदनुष्ठानात् प्रायत्याभावेन तज्ज्ञानाभाव इत्यत आह – **कर्मयोगमिति** ॥

**(भा)** कर्मयोगं **स्ववर्णाश्रमोचितम् । न तु गृहस्थकर्मैवेति नियमः । सन्न्यासादिविधानात् । सामान्यवचनाच्च ॥६,७॥**

**(टी)** तत्तदधिकारिणां सन्न्यासादिविधानात्, 'कर्मयोगम्' इति सामान्यस्यैव वचनाच्च, स्ववर्णाश्रमोचितमेव स्यात् सर्वेषाम् । न गृहस्थकर्म न [१]वनस्थकर्म वेत्यर्थः[२] ॥६,७॥

यत एवमशक्यः सर्वथा कर्मत्यागः, अतो विहिताकरणादनर्थकरणाद्वरं स्ववर्णाश्रमविहितकरणमिति भावेनोत्तरश्लोकमवतारयति[३] – **अत इति** ॥८॥

**(भा) अतो नियतं वर्णाश्रमोचितं कर्म कुरु** ॥८॥

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः ॥८॥**

**(टी)** ननु विद्यैव विधीयते, कर्म निषिध्यत एव । तयोरिष्टानिष्ट-

---

१. वानप्रस्थकर्म – पा

२. गृहस्थकर्मैव वनस्थकर्मैव ब्रह्मचारिकर्मैवेति नियमो न विवक्षित इत्यर्थः । – प्र.दी.

३. उत्तरश्लोकार्थमाह – अत इति ॥ – भावप्रदीपिका
सङ्गतिं सूचयन् व्याचष्टे – अत इति ॥ – प्र.दी.

हेतुत्वोक्तेः । 'कर्मणा बद्ध्यते'[१] इत्यादिना कर्मवाक्यान्यपि तेषां बन्धकत्वमेव ज्ञापयन्ति । अतो न विहिताकरणदोषः[२] कर्माकरणेऽपि । अवशत्वेन शरीरयात्रायैव किञ्चित्कर्मकरणेऽपि न निषिद्धकर्मकरणदोषोऽशक्यत्वादिति भावेनाशङ्क्य तदुत्तरत्वेनोत्तरश्लोकमवतार्य व्याचष्टे – **कर्मणा इति ॥**

**(भा) 'कर्मणा बध्यते जन्तुः' इति कर्म बन्धकं स्मृतमित्यत आह –** यज्ञार्थादिति ॥

**यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥९॥**

**(भा)** कर्म बन्धनं यस्य लोकस्य स कर्मबन्धनः । यज्ञो विष्णुः ।

**(टी)** विष्णूद्दिष्टमपि कर्म साहङ्कारेण फलकामेन वा कृतं चेद्बन्धकमेव भवति । तन्निवृत्त्यर्थं 'मुक्तसङ्ग' शब्दप्राप्तमर्थमाह – **यज्ञार्थं सङ्गरहितमिति ॥**

**(भा) यज्ञार्थं सङ्गरहितं कर्म न बन्धकमित्यर्थः ।** मुक्तसङ्गः **इति विशेषणात् ।**

**(टी)** 'मुक्तसङ्ग'पदस्य कर्माहङ्कारफलकामपरित्यागोऽर्थ इति सूचयन्[३], तदुभयवत्कर्मणो बन्धकत्वे, तद्रहितस्याबन्धकत्वे च प्रमाणमाह – **कामानि-त्यादिना ॥**

**(भा) 'कामान् यः कामयते'[४] इति श्रुतेश्च । 'अनिष्टमिष्टम्'[५] इति वक्ष्यमाणत्वाच्च । 'एतान्यपि तु कर्माणि'[६] इति च । 'तस्मान्नेष्टियाजुकः स्यात्'[७] इति च ।**

---

१. सन्न्यासोपनिषत् २/२१ २. विहिताकरणमेव दोषः – पा
३. 'कर्माहङ्कारफलकामनापरित्यागो मुक्तसङ्गशब्दार्थः' इति प्राचीनटीका ।– भावरत्नकोशे
४. मुण्डकोपनिषत् ४/१/२ ५. गी. १८/१२
६. गी. १८/६ ७. बृहदारण्यकोपनिषत् १/५/२

**(टी) सङ्गम्**[१] अहं करोमि इति भावम्, फलानि फलेच्छां[२] त्यक्त्वेत्यर्थः । **नेष्टियाजुकः स्यात्** फलेच्छया न यजेदित्यर्थः[३] ।

ननु विशेषवचनानुरोधेन सामान्यविषयसङ्कोचः 'सर्वानानय नैकं मैत्रम्' इत्यादौ । अत्र तु द्वयोरपि[४] विशेषवचनत्वात्, 'कर्मणा बद्ध्यते' इत्यस्य 'न कर्मणा बद्ध्यते' इत्यनेन कथं विषयसङ्कोचः? इत्याशङ्क्य, यज्ञार्थेन सङ्गरहितेनेति विशेषणाधिक्याद्युज्यते सङ्कोच इति भावेनाह – **विशेषवचनत्व इति** ॥९॥

**(भा) विशेषवचनत्वे समेऽपि विशेषणं परिशिष्यते ॥९॥**

**(टी)** न केवलं यज्ञार्थं सङ्गरहितं कर्म न बन्धकम्, किन्तु मोचकमेव ज्ञानद्वारेति भावेनोत्तरं प्रघट्टकमवतारयति – **तत्रेति** ॥

**(भा)** [५]**तत्रार्थवादमाह – सहयज्ञा इति ॥१०-१३॥**

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥१०॥**

**देवान् भावयतानेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥११॥**

---

१. 'सङ्गमकरो' इति क्वचित् ।

२. **फलेच्छां तु** – पा

३. इषु इच्छायामिति धातोः क्तिनि इष्टि इच्छा, योग्यतया फलस्य सम्बन्धः । यजतेश्च बाहुलकात् उकञ्प्रत्यये, याजकशब्द एव पृषोदरादिभावेनाकारस्योकारे विकारे वा 'याजुकः' इति रूपम् । 'इष्ट्या याजुक इष्टियाजुकः' इति समासे च प्रकृतार्थसिद्धिरिति भावः । तथा च प्राचीनटीका – 'फलेच्छया न यजेदित्यर्थः' इति । – **भावरत्नकोशे** इष्टियाजुकः फलेच्छया यष्टा – प्र.दी.

४. **तयोरपि** – पा

५. 'अत्रार्थवादमाह' इति प्रचलितपाठः भावप्रदीपिकायां प्रमेयदीपिकायां च ।

**इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥१२॥**

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥१३॥**

**(टी)** अस्मिन्नेवार्थेऽन्यत्र तन्त्रभागवतवाक्यमुदाहृतं भाष्यकारैः[१] –

'कर्मणा निरपेक्षेण विष्णावेवार्पितेन[२] च ।
सम्यज्ज्ञानं भवेत् पुंसां देवतातृप्तिपूर्वकम् ॥
निर्देशाद्भगवत्येव तृप्ता स्युर्देवता यतः ।
तदङ्गत्वेन निर्देशात् तेषु तृप्तिं व्रजन्ति ते[३] ।
तृप्तेषु तेषु देवेशे विष्णौ चोत्पद्यते परम् ।
ज्ञानं तेनैव सम्यक् च मुच्यते कर्मपीडनात्' इत्यादि[४] ।

मुक्तिरेव ह्युच्यते मुख्यतः, 'इष्टकामधुक्' 'श्रेयः परमवाप्स्यथ' 'मुच्यन्ते सर्वकिल्बिषैः' इति वाक्येषु पुरावृत्ताख्यानात् स्तुतिनिन्दात्मकत्वाच्चार्थवादोऽयम् ॥१०-१३॥

तस्मिन्नेवार्थे तदुत्तरं प्रघट्टकमवतारयति – हेत्वन्तरमिति ॥

(भा) हेत्वन्तरमाह – अन्नादिति ॥

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥१४॥**

---

१. श्रीविद्याधिराजतीर्थश्रीचरणैरप्युदाहृतम् ।
२. विष्णवे चार्पितेन । इति विद्याधिराजीयपाठः
३. 'तदङ्गत्वेन निर्देशास्त्वेषु ते तृप्तिमाप्नुयुः ।' इति विद्याधिराजीयपाठः
४. मुच्यते कर्मणा' इत्यादि । – पा

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५॥**

**(टी)** ननु पूर्वसिद्धदेवताया एव यज्ञोद्देश्यत्वात् कथं यज्ञात् पर्जन्यो भवति? इत्यत आह – यज्ञ इति[१] ॥

**(भा) यज्ञः पर्जन्यान्नत्वात् तत्कारणमुच्यते ।**

**(टी)** आहुतिरूपत्वात् तदन्नत्वात् तत्कारणमुच्यते । न तु तज्जनकत्वादित्यर्थः ।

ननु पर्जन्यपदप्रापकतत्कृतपूर्वयज्ञविवक्षया 'यज्ञाद्भवति पर्जन्यः'[२] इत्याद्युक्तिः किं न स्यात्? इत्यत आह – **पूर्वेति** ॥

**(भा) पूर्वयज्ञविवक्षायां च तस्य चक्रप्रवेशो न सम्भवति ।**

**(टी)** न ह्यर्जुनादिभिः सर्वैः पर्जन्यपदप्रापकयज्ञः क्रियते । अतस्तस्य चक्रप्रवेशाभावप्रसङ्गात् नासौ 'यज्ञाद्भवति पर्जन्यः' इत्यत्र विवक्षित इत्यर्थः ।

ननु यज्ञत्वेन पर्जन्यपदकारणतत्कृतपूर्वयज्ञसमानजातीयत्वादिदानीन्तनसर्वपुरुषानुष्ठेययज्ञस्य सामान्यतः, स चक्रप्रविष्टः किं न स्यात्? इत्यत आह – **तद्धीति**[३] ॥

**(भा) तद्ध्यापाद्यं कर्मविधये । न तु साम्यमात्रेणेदानीं कार्यम् ।**

---

१. तत्रादित्यस्य पूर्वसिद्धस्य कथं 'यज्ञाद्भवति पर्जन्यः' इति यज्ञः कारणत्वेनोच्यते? इत्यत आह – यज्ञ इति ॥ – **प्र.दी.**

२. **यज्ञान्तरवति पर्जन्ये** – पा

३. ननु तदा चक्रं प्रवृत्तमेव । अतः कथं पूर्वयज्ञस्य चक्राप्रवेशः? इत्यत आह – तद्धीति ॥ – **प्र.दी.**

**(टी)** तच्चक्रं कर्मविध्युपयोग्येवापाद्यम् । नतु पर्जन्यपदकारणस्यार्जुनाद्यनुष्ठेय-यज्ञत्वसाम्यमात्रेणेदानीं चक्रमापाद्यम् । अर्जुनाद्यनुष्ठितयज्ञेन पर्जन्यादिद्वारा भूतोद्भवाभावात्, तदभावे भूतविनाशाभावाच्च । न कर्मविध्युपयोग्येवं-विधचक्रकरणमिति भावः[१] ।

प्रकारान्तरेणापि यज्ञात् पर्जन्योद्भवमाह – **मेघेति** ॥

**(भा) मेघचक्राभिमानी च पर्जन्यः । तच्च यज्ञाद्भवति ।**

**(टी)** मेघचक्राभिमान्यादित्यः, पर्जन्यनामा । [२]परसस्यादिजननात्, तेनाभिमन्यमानत्वात्[३] तदपि पर्जन्याख्यम् । तत्र यज्ञाराधितादित्यात् भवतीति यज्ञात् पर्जन्यो भवतीत्यर्थः ।

तत्र प्रमाणमाह – **अग्नाविति** ॥

**(भा) 'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठति ।**
**आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'[४] इति स्मृतेश्च ।**

**(टी) सम्यगिति** ॥ यथाशास्त्रं प्रक्षिप्ताहुतिरादित्यमुपतिष्ठत इत्यर्थः ।

---

१. तच्चक्रमापाद्यं ह्यत्र विवक्षितम् । न तु प्रागापादितम् । कुतः? कर्मविधये ह्येतदुच्यते । यदि विहितं कर्म करिष्यसि, तदा जगच्चक्रप्रवृत्तिर्भविष्यति । अन्यथा तद्विघातः । अतस्त्वया कर्म कर्तव्यमिति । कर्मविध्युपयोगिता चापाद्यस्यैव । न त्वापादितस्य । आपाद्ये च यज्ञव्यक्तिविशेषस्य पर्जन्यपदप्राप्तिहेतोर्न प्रवेश इत्यर्थः । – इत्यादि **प्र.दी.**

२. जननात्परसस्यादेः पर्जन्यो मेघसन्ततिः । – **गीतातात्पर्योदाहृतनारदीयवचनम्**

३. यद्वेति ॥ अभिमानिगतस्य अभिमानिवाचकस्य । तथा चादित्यवाचकस्य पर्जन्यशब्दस्य तदभिमन्यमाने मेघचक्रे लक्षणेत्यङ्गीकारान्नोक्तचोद्यावकाशः । 'अभिमानिनाऽभिमन्य-मानस्य' इति प्राचीनटीकाऽपि लक्षणाभिप्रायेणैव प्रवृत्तेति भावः । – **भावरत्नकोशे**
यद्वा अभिमानिगतस्य पर्जन्यशब्दस्याभिमन्यमाने लक्षणामाश्रित्य द्वितीयं व्याख्यानम् । – **प्र.दी.**

४. **मनुस्मृतिः** ३/७६

[१]क्वचित् समुद्रस्य वृष्टिकारणत्वोक्तावप्यविरोधमाह – उभयवचनादिति ॥

(भा) उभयवचनादादित्यात् समुद्राच्चाविरोधः ।

**(टी)** एवमादित्यवचनो मेघचक्रवचनो वा पर्जन्यशब्दः । उभयथाऽपि यज्ञात् पर्जन्योद्भवः सम्भवतीत्युक्तमुपसंहरति – अतश्चेति [२]॥

(भा) अतश्च यज्ञात् पर्जन्योद्भवः सम्भवति ।

**(टी)** ननु कर्मैव यज्ञः, स कथं कर्मसमुद्भवः? इत्यत आह – यज्ञ इति[३] ॥

(भा) यज्ञो देवतामुद्दिश्य द्रव्यपरित्यागः । कर्म इतरक्रिया ॥

**(टी)** 'कर्म ब्रह्मोद्भवम्' इत्यत्र ब्रह्मशब्दोक्तो वेद उद्भवशब्दोक्तः प्रकाश इत्येतामपव्याख्यामपाकर्तुं तावद्ब्रह्मशब्दोक्तं परब्रह्म, उद्भवशब्दोक्तं जन्मेति सप्रमाणकं सम्यगेव व्याचष्टे – कर्मेति[४] ॥

(भा) कर्म ब्रह्मणो जायते । 'एष ह्येव साधु कर्म कारयति'[५], 'बुद्धिर्ज्ञानम्'[६] इत्यादिभ्यः ।

---

१. स्वकीयमुदकं नद्यः समुद्रे नैव जानते ।
वायुस्तु तत्पृथग्ज्ञात्वा मेघे कृत्वा प्रवर्षति ॥
इति आथर्वणोपनिषद्भाष्योदाहृतप्रमाणवचनम् (४/१/८)

२. इदमुक्तं भवति । 'यज्ञाद्भवति पर्जन्यः' इत्यत्र तु पर्जन्यशब्देन मेघचक्राभिमान्यादित्यो ग्राह्यः । ततस्तदभिमन्यमानं मेघचक्रमपि तच्छब्दार्थः । तच्च यज्ञाराधितादादित्याद्भवतीति यज्ञात् पर्जन्योद्भव आदित्यद्वारक इति 'यज्ञाद्भवति पर्जन्यः' इति यज्ञपर्जन्ययोः कार्यकारणभाववचनमुपपद्यत इति । इदं च प्राचीनटीकायां स्पष्टमुक्तम् ।– भावरत्नकोशे

३. ननु यज्ञः कर्मात्मकः । तत्कथमुच्यते 'यज्ञः कर्मसमुद्भवः' इति ? तत्राह – यज्ञ इति ॥ – प्र.दी.

४. कर्म ब्रह्मोद्भवं ब्रह्मणा वेदेन प्रकाश्यमिति परेषां व्याख्यानमसदिति भावेनाह – कर्मेति ॥ – प्र.दी.

५. कौषीतकीब्राह्मणम् ३/८ २. गी. १०/४

**(टी)** अपव्याख्यामपाकरोति[१] – **न चेति** ॥

**(भा) न च मुख्ये सम्भाव्यमाने पारम्पर्येणौपचारिकं कल्प्यम् ।**

**(टी)** ब्रह्मशब्दमुख्यार्थपरब्रह्मणः साक्षादुद्भवशब्दमुख्यार्थे कर्मजनने सम्भाव्यमाने वेदाख्यादौपचारिकब्रह्मणः[२] तदन्तर्यामिद्वारा प्रकाशाख्यौपचारिकोद्भवः कर्मणो न कल्पनीय इत्यर्थः[३] । देशतः कालतो ब्रह्मत्वेऽप्यगुणब्रह्मवदौपचारिकं ब्रह्म वेद इति भावः ।

ननु वेदानां बुध्यारोह एव परापेक्षा । बुद्ध्यारूढानां स्वार्थप्रकाशनं स्वत एव । अतः का परम्परा? इत्यत आह – **न चेति** ॥

**(भा) न च जडानां स्वतः प्रवृत्तिः सम्भवति ।**

**(टी)** जडानां च बालादिवदीप(?) वेदादीनामर्थप्रकाशाख्यप्रवृत्तिरपि स्वतो न सम्भवतीत्यर्थः ।

न केवलमचेतनत्वयुक्त्यैवान्यनियम्यत्वं वेदादेः । किन्तु विष्णोः सर्वनियामकश्रुतेश्चेत्याह – **एतस्येति** ॥

**(भा) 'एतस्य वा अक्षरस्य'[४] इत्यादिसर्वनियमनश्रुतेश्च ।**

---

१. कर्म ब्रह्मोद्भवम् । ब्रह्म वेदः स उद्भवः कारणं यस्य तत् कर्म ब्रह्मोद्भवम् । विद्धि जानीहि । – **शाङ्करभाष्यम् ।**

कर्म ब्रह्मोद्भवम् । ब्रह्म वेदः । तत्प्रकाशितम् । – **भास्करभाष्यम्**

२. वेदाख्यसोपाधिकब्रह्मणः – पा ।

३. उद्भवशब्दस्य मुख्येऽभिधेये जन्मनि सम्भाव्यमाने सत्यौपचारिकं प्रकाशनमर्थतया न कल्प्यम् । तथा ब्रह्मशब्दस्य मुख्येऽभिधेये परे ब्रह्मणि सम्भाव्यमाने सत्यौपचारिकममुख्यं वेदाख्यं ब्रह्मशब्दार्थतया न कल्प्यम् । – **प्र.दी.**

४. बृहदारण्यकोपनिषत् ५/८/९

**(टी)** ननु भवत्वन्याधीनत्वं [१]जडगतचलनादेरस्वभावधर्मस्य । [२]अर्थप्रकाशनादेस्तु स्वभावत्वादनन्याधीनत्वमित्याशङ्क्य, तस्याप्यन्याधीनत्वे प्रमाणमाह – **द्रव्यमिति ॥**

**(भा) 'द्रव्यं कर्म च कालश्च'[३] इत्यादेश्च ।**

**(टी)** ननु नित्यवेदादिस्वभावनियामकत्वं श्रुतमपि कथं शक्यम्? पुंप्रयत्नासाध्यत्वादित्याशङ्क्य, अन्यस्याशक्यमप्यचिन्त्यशक्तित्वाद्भगवतः शक्यमिति भावेनाह – **अचिन्त्येति ॥**

**(भा) अचिन्त्यशक्तिश्चोक्ता ।**

**(टी)** ननु तर्हि जीवानां स्वतः प्रवृत्तिसम्भवात्, न तत्कर्म परब्रह्मणो जायत इति मुख्यार्थासम्भवात्, पारम्पर्येण वेदाख्यापरब्रह्मप्रकाश्यमेव किं न स्यात्? इत्यत आह – **जीवस्येति ॥**

**(भा) जीवस्य च प्रतिबिम्बस्य बिम्बपूर्वैव चेष्टा ।**

**(टी)** जडजीवयोः [४]पराधीनत्वापराधीनत्वविशेषेऽपि, जीवं क्वचित् तदिच्छानुपूर्वकं चेष्टयतीत्येतावतैवासौ स्वतः प्रवर्तत इत्युच्यते[५] क्वचिदिति भावः ।

---

१. जडजगच्चलनादेः – पा । २. अर्थप्रकाशादेस्तु – पा

३. भागवते २/१०/१२

४. पराधीनत्वविशेषेऽपि – पा

५. अकर्तृत्वेऽपि विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्या उक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति । ईश्वराधीनत्वेऽपि विधिद्वारा नियतस्तेनैव । यदि चेच्छादिर्जायते, तर्हि कारितमेवेश्वरेण । फलं च नियतम् । वस्तुतोऽकर्तृत्वेऽप्याभिमानिकं कर्तृत्वं तस्यैव । स्वातन्त्र्यं च जडमपेक्ष्येति न प्रवृत्तिविधिवैयर्थ्यम् । सर्वं चैतदनुभवोक्तप्रमाणसिद्धमिति न पृथक् प्रमाणमुच्यते । – गी.भा. १८/१८

इतोऽपि न जीवकर्म जीवेनैव जायत इत्यङ्गीकार्यम् । भगवतैव निषिद्धत्वादित्याह – **न कर्तृत्वमिति ॥**

**(भा) 'न कर्तृत्वम्'**[१] **इत्यादिनिषेधाच्च ।**

**(टी)** 'कर्म ब्रह्मोद्भवम्' इत्यत्र परं प्रत्यापादितदोषं 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र स्वमते परिहरन्नेतद्व्याचष्टे – **अक्षराणीति ॥**

**(भा) अक्षराणि प्रसिद्धानि । तेभ्यो ह्यभिव्यज्यते परं ब्रह्म ।**

**(टी)** 'ब्रह्म-अक्षर-समुद्भवम्' इति त्रयःशब्दाः प्रतीयन्ते । तत्र तावन्नाक्षरशब्दे मुख्यपरित्यागः । तेन प्रसिद्धाक्षरतत्वात्मकवेदस्वीकारात् । नापि ब्रह्मशब्दे । तेन परब्रह्मण एव स्वीकारात् । शब्दद्वयमुख्यार्थत्वाविरोधे-नैकस्योद्भवशब्दस्याभिव्यक्त्यर्थत्वाङ्गीकारो युक्त एव । नह्यनादिनिधनमनन्तगुण-परिपूर्णं ब्रह्मान्यतो जायत इति भावः ।

नन्वेवंविधस्य ब्रह्मणोऽभिव्यक्तिरन्यतः कुतः? इत्यत आह – **अन्यथेति ॥**

**(भा) अन्यथाऽनादिनिधनमचिन्त्यं परिपूर्णमपि ब्रह्म को जानाति?**

**(टी)** ननु यौगिकार्थस्यापि मुख्यार्थत्वात् प्रसिद्धार्थपरित्यागेऽपि 'बृहत्त्वात् ब्रह्म' वेदः, 'न क्षरति इत्यक्षरं' परंब्रह्म, किं न स्यात्? उद्भवशब्दस्य मुख्यार्थत्वायेत्यत आह – **न चेति**[२] **॥**

**(भा) न च रूढिं विना योगाङ्गीकारो युक्तः ।**

---

१. गी. ५/१४

२. समुद्भवशब्दस्य मुख्यार्थलाभात् परोक्तार्थः किं न स्यात्? इत्यत आह – न चेति ॥ ब्रह्मशब्दो हि परब्रह्मणि रूढः । वेदे तु बृहत्त्वयोगेन प्रवृत्तः । तथाऽक्षरशब्दो वर्णेषु रूढः । ब्रह्मणि त्वक्षरणयोगेन प्रवृत्तः । तथा चान्यथा व्याकुर्वता रूढिं परित्यज्य योगोऽङ्गीकृतः स्यात् । तच्च न्यायबाह्यमित्यर्थः । – **प्र.दी.**

**(टी)** अव्याकृताकाशादेरपि सर्वगतनित्यत्वात् ब्रह्मत्वमक्षरत्वं च स्यादिति भावः ।

'तस्मात् सर्वगतं ब्रह्म' इत्यत्र ब्रह्मशब्देन परब्रह्मवाचिना 'ब्रह्माक्षरसमुद्भवम्' इत्युक्तब्रह्मणः परामर्शाच्च, न ब्रह्मशब्दोऽयं [१]बृहत्त्वयोगमात्रेण वेदपर इत्याह – **परामर्शाच्चेति ॥**

**(भा) परामर्शाच्च –'तस्मात् सर्वगतं ब्रह्म' इति ।**

**(टी)** ननु 'ब्रह्माक्षरसमुद्भवम्' इत्यत्र ब्रह्मशब्दस्य वेदवाचित्वेऽपि, अक्षरशब्दोक्तपरब्रह्मपरामर्शक एवोत्तरो ब्रह्मशब्दः किं न स्यात्? इत्यत आह – **न हीति ॥**

**(भा) नह्येकशब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयं कुत्रचिदुच्यते ।**

**(टी)** सत्यां भेदश्रुतावेकस्मिन्नपि शब्दे द्विरुक्तेऽर्थभेदोऽवगम्यते । यथा हि 'ओषधीभ्यो अन्नम्' 'अन्नरसमयः'[२] इत्यत्र द्वितीयान्नशब्दस्य रसश्रुत्या विशेषितत्वादर्थभेदः, न तथाऽत्रेत्यर्थः[३] ।

या त्वाशा – उद्भवशब्दार्थमुख्यार्थत्वात् ब्रह्माक्षरशब्दार्थयोः व्यत्यासः किं न स्यादिति, सा न कर्तव्या[४] । अक्षराणां नित्यत्वादित्येतत् सप्रमाणकमाह – **तानि चेति ॥**

---

१. बृहत्त्वगुणयोगमात्रेण – पा

२. 'ओषधीभ्यो अन्नम् । अन्नात् पुरुषः । स वा एष पुरुषोऽन्नरसमयः ।'
– तैत्तिरीयोपनिषत् २/३,४

३. 'अन्नरसमयः' इत्यादिभेदश्रुतिं विना । – भावप्रदीपिका ; 'अन्नात् पुरुषः । स वा एष पुरुषोऽन्नरसमयः' इत्यादिव्यावृत्त्यर्थं भेदश्रुतिं विनेत्युक्तम् । – प्र.दी.

४. मायावादिना तु प्राग्ब्रह्मशब्दोक्तस्य वेदस्यैवायं परामर्श इत्यङ्गीकृतत्वात्, यदप्यन्यथा-व्याख्याने समुद्भवशब्दस्य मुख्यार्थतालाभ इत्यभिप्रेतं तदपि दुराशामात्रमित्याह – तानि चेति ॥ – प्र.दी.

(भा) तानि चाक्षराणि नित्यानि 'वाचा विरूप नित्यया'[१], 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा'[२], 'अत एव च नित्यत्वम्'[३] इत्यादिश्रुतिस्मृति-भगवद्वचनेभ्यः ।

**(टी)** ननूत्पत्तावपि प्रमाणम् 'ऋचः सामानि जज्ञिरे'[४] इत्यादीत्याशङ्क्य, तद्युक्तिविरुद्धत्वादन्यथा व्याख्येयमिति भावेनाह – **दोषश्चेति** ॥

(भा) **दोषश्चोक्तः सकर्तृकत्वे ।**

**(टी)** रचितत्वे च[५] इत्यादाविति शेषः ।

नन्वबुद्धिपूर्वमुत्पन्नत्वाद्वेदानां न तेषु कर्तृगुणदोषावित्यत आह– **न चेति** ॥

(भा) **न चाबुद्धिपूर्वमुत्पन्नानि । तत्प्रमाणाभावात् ।**

**(टी)** 'निःश्वसितमेतद्यदृग्वेदः'[६] इत्यादि तत्प्रमाणं स्यादित्यत आह – **निःश्वसितेति** ॥

(भा) **निःश्वसितशब्दस्त्वक्लेशाभिप्रायः । नाबुद्धिपूर्वाभिप्रायः ।**

**(टी)** न हि सर्वज्ञात् स्वतन्त्रादबुद्धिपूर्वकं किञ्चिज्जायत इति भावः ।

इच्छापूर्वकसर्वसृष्टिश्रवणाच्च नाबुद्धिपूर्वकं किञ्चित् भगवत उत्पद्यत इत्याह – **स इति** ॥

(भा) **'सोऽकामयत'[७] इत्यादेश्च ।**

---

१. ऋग्वेदे ८/६४/६
२. सूत्रभाष्योदाहृतं (२/१/४) स्मृतिवचनम् ।
३. ब्रह्मसूत्रम् १/३/२९
४. ऋग्वेदे ८/४/१८
५. गी.भा. २/१३
६. बृहदारण्यकोपनिषत् ४/४/१०
७. तैत्तिरीयोपनिषत् २/११

**(टी)** नन्वत्र नामप्रपञ्चस्य निःश्वसितत्वोक्तेः, 'सोऽकामयत' इत्यारभ्य 'इदं सर्वमसृजत' इत्यत्र रूपप्रपञ्चविषय एव सर्वशब्दः किं न स्यात्? इत्यत आह – **इष्टमिति** ॥

**(भा)** 'इष्टं हुतम्'[१] **इत्यादिरूपप्रपञ्चेन सहाभिधानाच्च ।**

**(टी)** इतोऽपि नाबुद्धिपूर्वकाभिप्राये निःश्वसितशब्द इत्याह – **महातात्पर्येति** ॥

**(भा) महातात्पर्यविरोधाच्च ।**

**(टी)** किं तन्महातात्पर्यम्? इत्याकाङ्क्षायामाह – **तच्चेति** ॥

**(भा) तच्चोक्तं पुरस्तात् ।**

**(टी)** भगवत्प्राधान्ये [२]सर्वागमतात्पर्यमुक्तं द्वितीयाध्याये[३] ।

ननु कथमबुद्धिपूर्वसृष्टत्वेऽपि तद्विरोधः? इत्यत आह – **न हीति** ॥

**(भा) न ह्यस्वातन्त्र्येणोत्पत्तिकर्तुः प्राधान्यम् ।**

**(टी)** ननु निःश्वसितमात्रेणोत्पत्तिकर्तुः कथमस्वातन्त्र्यम्? इत्यत आह – **अस्वातन्त्र्यं चेति** ॥

**(भा) अस्वातन्त्र्यं च तदमतिपूर्वकत्वेन भवति । यथा रोगादीनां पुरुषस्य तज्जत्वेऽपि ।**

**(टी)** 'विमता जनिर्न जनकाधीना, अबुद्धिपूर्वकजनित्वात् रोगादिजनिवत्' इत्यर्थः[४] ।

---

१. वृहदारण्यकोपनिषत् ६/१/२ २. सर्वागमानां महातात्पर्यं – पा

३. २/२४

४. रोगादीनां पुरुषजत्वेऽपि बुद्धिपूर्वकत्वाभावात् तत्र पुरुषस्यास्वातन्त्र्यं यथेत्यर्थः ।

ननु उत्पत्तिवचनानामप्रामाण्यं स्यादित्यत आह – उत्पत्तीति ॥

**(भा) उत्पत्तिवचनान्यभिव्यक्त्यर्थानि, अभिमानिदेवताविषयाणि च ।**

**(टी)** वचनसूचितैवेयं व्यवस्थेत्याह – **नित्येति** ॥

**(भा) 'नित्या' इत्युक्त्वा 'उत्सृष्टा' इति वचनात् ।**

**(टी) उत्सृष्टा** उत्पन्ना । नित्यस्योत्पत्तिर्नामाभिव्यक्तिः, अभिमानिदेवतोत्पत्तिर्वा[1] । साऽपि यथायोग्यम् । एवमभिव्यङ्ग्ये कार्यशब्दप्रदर्शनेन 'ऋचः सामानि जज्ञिरे' इत्यादि व्याख्यातं भवति ।

न केवलमेतावत् । किं तर्हि? इत्याकाङ्क्षायामाह – **अभिव्यञ्जक इति** ॥

**(भा) अभिव्यञ्जके कर्तृवचनं चास्ति । 'कृत्स्नं शतपथं चक्रे' इति ।**

**(टी)** तथा हि मोक्षधर्मे[2] याज्ञवल्क्यवचनम्–

'ततः शतपथं कृत्स्नं सरहस्यं ससङ्ग्रहम् ।
चक्रे सपरिशेषं च हर्षेण परमेण ह ॥' इति [3]।

---

ततश्चाबुद्धिपूर्वमुत्पादकत्वादस्वातन्त्र्यम् । अस्वातन्त्र्यादप्राधान्यं प्रसज्येत । तथा च महातात्पर्यविरोध इत्युक्तं भवति । **– प्र.दी.**

प्राचीनटीकायां तु 'विमता जनिर्जनकाधीना न, अबुद्धिपूर्वकजनित्वाद्रोगादिजनिवत्' इत्यनुमानोक्तिपरतयेदं भाष्यं योजितम् । **– भावरत्नकोशे**

१. वेदानां सृष्टिवाक्यानि भवेयुर्व्यक्त्यपेक्षया ।
अवान्तराभिमानानां देवानां वा व्यपेक्षया इति **विष्णुतत्वनिर्णयोदाहृतब्रह्माण्डवचनम् ।**
प्राचीनटीकायां च ''अभिमानिदेवतोत्पत्तिर्वा'' इति । **– भावरत्नकोशे**

२. **भारते शान्ति ३१८/१६**

३. '' तथा हि मोक्षधर्मे 'ततः शतपथं कृत्स्नं सरहस्यं ससङ्ग्रहम् । चक्रे सपरिशेषं च हर्षेण परमेण ह' '' इति प्राचीनटीकायाम् उदाहृतयाज्ञवल्क्यवचनावमर्शे, अभिव्यञ्जकतया निश्चितेऽपि कर्तृवाचकः 'चक्रे' इति शब्दोऽस्तीत्यर्थः । अत्र 'चक्रे' इति लिडात्मने-

ननु याज्ञवल्क्यः शतपथस्य कर्तैव किं न स्यात्? इत्यत आह – **कथमिति** ॥

**(भा) कथमादित्यस्था वेदास्तेनैव क्रियन्ते ।**

**(टी)** पूर्वमादित्यस्थत्वं तेषां वेदानाम्, ततो याज्ञवल्क्यप्राप्तिश्च 'मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिप'[१] इत्याद्युपक्रमादवगम्यते[२]। एतेन 'आदिविद्वान् वेदकर्ता' इत्यादि व्याख्यातं भवति ।

न केवलं नित्यत्ववचनं निरवकाशत्वात् प्रबलम्, किन्तु निर्णयात्मकत्वादपीत्याह – **वचनेति** ॥

**(भा) वचनमात्राच्च निर्णयात्मकशारीरकोक्तं बलवत् ।**

**(टी) शारीरकं** ब्रह्मसूत्राणि ।

ननु शारीरक एव शास्त्रयोनित्वादिति वेदोत्पत्तिः श्रूयत इत्यत आह – **शास्त्रमिति** ॥

**(भा) शास्त्रं योनिर्यस्येति तु शास्त्रयोनित्वम् ।**

**(टी)** ननु समासबलीयस्त्वेन तत्पुरुष एव भवेत्[३] । ब्रह्मण एव

---

पदोत्तमपुरुषैकवचनम् । कृतवानहमित्यर्थः । तथा च मोक्षधर्मे – 'सूर्यस्य चानुभावेन प्रवृत्तोऽहं नराधिप । कर्तुं शतपथं वेदमपूर्वं च कृतं मया ॥' इति याज्ञवल्क्यवचनम् । भाष्यं त्वन्वयप्रदर्शनपरमिति ज्ञातव्यम् । – **भावरत्नकोशे**

१. **इत्युपक्रमादेव गम्यते** – पा; **भारते शान्ति** ३१८/२

२. प्रमितमिति ॥ तथा च प्राचीनटीकायाम् –" 'मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिप' इत्युपक्रमात्" इति प्रमाणमुपन्यस्तम् । – **भावरत्नकोशे**

प्रागादित्ये स्थितास्ततो याज्ञवल्क्येनाधीता इत्येतत् प्रमितमित्यर्थः । – **प्र.दी.**

३. समासप्राबल्यात् कुतो नासावर्थ इति चेत्, वेदादिकर्तृत्वकथनस्योक्तानुपयुक्तत्वात् । – इत्यादि **तत्त्वप्रकाशिकायाम्**(१/१/३)

जातत्वापत्तेश्चेत्यत आह – **जन्मेति** ॥

(भा) **'जन्माद्यस्य यतः'[१] इत्युक्ते प्रमाणं हि तत्रापेक्षितम् । न तु तस्य जातत्वं वेदकारणत्वं वा ।**

**(टी)** पूर्वसूत्रासङ्गतत्वात्[२] बहुव्रीहिप्रातीतिकार्थः, तत्पुरुषश्च न युक्त इत्यर्थः ।

ननु जगत्कारणत्वं वेदकारणत्वेन साधयतीति कथमसङ्गतिः? यस्त्वन्याशक्यमपि वेदं सृजति[३], किमुतासौ न[४] जगत्? इति कैमुत्यन्यायादित्यत आह – **न हीति**[५] ॥

(भा) **न हि वेदकारणत्वं जगत्कारणत्वे हेतुः । नहि विचित्रजगत्सृष्टेर्वेदसृष्टिरशक्या सृज्यत्वे ।**

**(टी)** सृज्यत्वपक्ष इत्यर्थः[६] ।

ननु सर्वज्ञत्वसाधकत्वेन वेदकर्तृत्वं सङ्गच्छत इत्याशङ्क्य, निःश्वसितमित्यबुद्धिपूर्वकत्वाङ्गीकारात्[७] तदयुक्तमिति भावेनाह – **न चेति** ॥

---

समासप्राबल्यादिति ॥ समस्यमानपदार्थत्यागेन अन्यपदार्थप्रधानात् बहुव्रीहेः, तत्पुरुषस्य तदत्यागेनोत्तरप्रधानस्य प्राबल्यमिति भावः ।

– तत्त्वप्रकाशिकाटिप्पण्यां तत्त्वसुबोधिन्यां पाण्डुरङ्गिश्रीनिवासाचार्याः

१. ब्रह्मसूत्रम् १/१/२ २. पूर्वसूत्रसङ्गतत्वात् – पा

३. यस्त्वनाशङ्क्यं वेदमपि सृजति – पा

४. क्वचित् 'न' इति नास्ति ।

५. महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म । - इत्यादि **शाङ्करभाष्ये** (१/१/३)

६. सृज्यत्वे वेदस्य । कार्यत्वपक्ष इत्यर्थः । – **प्र.दी.**

७. नियतरचनावतो विद्यमानस्यैव वेदस्याभिव्यक्तेः पुरुषनिःश्वासान्न च पुरुषबुद्धिप्रयत्नपूर्वकः
– **शाङ्करबृहदारण्यकोपनिषद्भाष्यम्** ४/४/१०

(भा) [1]न च सर्वज्ञत्वे ।

**(टी)** इतोऽपि तन्न युक्तमित्याह – **यदीति** ॥

(भा) यदि वेदस्रष्टा सर्वज्ञः किमिति न जगत्स्रष्टा ?

**(टी)** एवमन्यथा गत्यभावादयमेव भगवद्विवक्षितसूत्रार्थ इत्याह – **तस्मादिति** ॥

(भा) तस्माद्वेदप्रमाणकत्वमेवात्र विवक्षितम् ।

**(टी)** उपसंहरति – **अत इति** ॥

(भा) अतो नित्यान्यक्षराणि ।

**(टी)** अतो नोद्भवशब्दमुख्यार्थत्वायापि ब्रह्माक्षरशब्दयोर्व्यत्यास इत्यर्थः । 'तस्मात्' इत्यत्रोक्तहेतोरप्रसिद्धत्वात् [2]तत्प्रकाशयन् योजयति – **यत इति** ॥

(भा) यत एवं परम्परया यज्ञाभिव्यङ्ग्यं ब्रह्म तस्मात् तन्नित्यं यज्ञे प्रतिष्ठितम् ।

**(टी)** अतो न केवलं यज्ञार्थं सङ्गरहितं कर्म न बन्धकम्, किन्त्वेवं ब्रह्मज्ञानाङ्गत्वेन मोचकमपीति भावः ।

नन्वत्राक्षरादिभूतान्तानां कार्यकारणभाव एवोक्तो न चक्रम् । चक्रं च

---

१. जगत्कारणत्वोक्त्या ब्रह्मणः सर्वज्ञत्वं प्रतीतम् । तत्स्फुटीकर्तुं तत्र वेदकारणत्वं हेतुरनेनोच्यते, अतो नासङ्गतिरित्यत आह – न चेति ॥ वेदकारणत्वं हेतुरित्यनुवर्तते । अबुद्धिपूर्वमुत्पन्नत्वाङ्गीकारादिति भावः । – प्र.दी.

२. प्रकाशयन् – पा

भूतानामक्षरशब्दोक्तब्रह्मत्व एव भवतीति ब्रह्माक्षरशब्दार्थयोर्व्यत्यास एव भगवतोऽभिप्रेत इत्याशङ्कां स्वमते तत्साधनेनैव परिहरति – तानि चेति ॥

(भा) तानि चाक्षराणि भूताभिव्यङ्ग्यानीति चक्रम् ॥१५॥

(टी) इति चक्रं नान्यथेत्यर्थः ।

न च भूतानामक्षरशब्दोक्तपरब्रह्मत्वं भगवदभिप्रेतम् । 'क्षरः सर्वाणि भूतानि' इति वक्ष्यमाणत्वात् । नाप्यद्वैतवाक्यात् तत्सिद्धिः । उपजीव्यप्रमाणविरोधात् । अतः पूर्वोक्तदोषात् न कथञ्चित् ब्रह्माक्षरशब्दार्थव्यत्यासः । स्वाभिमतं चक्रं भगवान् नारदीये प्रकटमाह 'जननात् परसस्यादेः'[1] इत्यादिना । अत एवाक्षरशब्दोक्तं ब्रह्म भूतैर्ज्ञायत इति ईदृश्येपि(?) चक्रता निरस्तेति भावः ॥१५॥

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥१६॥**

(टी) उक्तोपयोगस्य[2] प्रकृतोपयोगं दर्शयन् श्लोकं व्याचष्टे – तदेतदिति ॥

(भा) तदेतत् जगच्चक्रं यो नानुवर्तयति स तद्विनाशकत्वादघायुः । पापनिमित्तमेव यस्यायुः सोऽघायुः ॥१६॥

१. गीतातात्पर्ये पूर्णपाठ उदाहृतः –

'जननात् परसस्यादेः पर्जन्यो मेघसन्ततिः ।
स यज्ञात् कर्मणः सोऽपि समस्तं कर्म केशवात् ।
स नित्योऽप्यक्षरततिरूपाद्वाक्याद्धि गम्यते ।
वाक्यमुच्चार्यते भूतैस्तान्यन्नात् तच्च मेघतः ।
तस्मात् सर्वगतो विष्णुर्नित्यं यज्ञे प्रतिष्ठितः ।
एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
स पापो विश्वहन्तृत्वान्नरके मज्जति ध्रुवम् ।....' इति नारदीये ।

२. 'उक्तयोजनायाः' इत्यर्थः स्यात् ।

**(टी)** पापस्य निमित्तम्, पापं निमित्तमस्येति [1]चेत्यर्थः[2] ॥१६॥

नन्वेवं चेदसम्प्रज्ञातसमाधौ सत्यां तत्कालीनकर्मलोपेनाघायुष्ट्वप्रसङ्गात्, हरावतीव मनःसमाधानमपि न कार्यमित्याशङ्क्याह – **तर्हीति** ॥

**(भा) तर्ह्यतीव मनःसमाधानमपि न कार्यमित्यत आह – यस्त्विति ॥**

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥१७॥**

**(टी)** तत्र तावत् 'तृप्ति''सन्तोष'शब्दयोरर्थभेदोऽप्यस्तीति सप्रमाणकं वदति । 'तृप्ति''सन्तोष'शब्दार्थानसाधारणानाह – **रमणमित्यादिना** ॥

**(भा) रमणं परदर्शनादिनिमित्तं सुखम् । तृप्तिरन्यत्रालम्बुद्धिः । सन्तोषस्तज्जनकं सुखम् । 'सन्तोषस्तृप्तिकारणम्' इत्यभिधानात् ।**

**(टी)** स्वान्यमात्रे परशब्दप्रसिद्धेः, प्रस्तुते परः कः? इत्यत आह – **परमात्मेति** ॥

**(भा) परमात्मदर्शनादिनिमित्तं सुखं प्राप्तः ।**

**(टी)** ईषदलम्बुद्धावपि तृप्तिशब्दप्रयोगात् तद्व्यावृत्त्यर्थं योग्यं विशेषमाह – **अन्यत्रेति** ॥

**(भा) अन्यत्र सर्वात्मनाऽलम्बुद्धिं[3] च ।**

**(टी)** अथ भगवदन्यत्र सर्वात्मनाऽलम्बुद्धौ किं कारणम्? इत्याकाङ्क्षोत्तरत्वेन तृतीयपादमवतारयति – **महदिति** ॥

---

१. वेत्यर्थः – पा

२. पापेति ॥ तादर्थ्यात् ताच्छब्द्यमित्यर्थः । – **प्र.दी.**

३. 'अलम्बुद्धिः' इत्यपि पाठः प्रमेयदीपिकायाम् । तथा हि तत्र – 'अलम्बुद्धिं च प्राप्तः तृप्तशब्देनोक्त इति शेषः । अलम्बुद्धिरिति पाठे तृप्तिशब्दार्थ इति शेषः ।' इति ।

(भा) महच्च तत् सुखम् । तेनैवान्यत्रालम्बुद्धिरिति दर्शयति – आत्मन्येव च सन्तुष्ट इति ॥

(टी) 'सं'शब्दव्याख्या महच्छब्दः । तदित्यात्मरत्याख्यं सुखम्[१] ।

ननु यदात्मरत्याख्यमहत्सुखमन्यत्रालम्बुद्धिकारणम्, तत् केन हेतुना सिद्ध्यतीत्याकाङ्क्षोत्तरत्वेन 'आत्मन्येव' इति शब्दं योजयति –तत्स्थेति ॥

(भा) तत्स्थ एव सन् सन्तुष्ट इत्यर्थः ।

(टी) एतदेव[२] विवृणोति – नान्यदिति ॥

(भा) नान्यत् किमपि सन्तोषकारणमित्यवधारणम् ।

(टी) तस्मिन्नेव श्रवणाद्यभ्यासलक्षणात् [३]तत्स्थत्वादन्यद्दर्शनादिनिमित्तसन्तोषप्राप्तौ न कारणमित्यर्थः ।

न केवलं स्वकृततद्विषयश्रवणाद्यभ्यास[४]रूपतत्स्थितत्वात् तद्दर्शनादिनिमित्तं सुखमन्यत्रालम्बुद्धिकारणं प्राप्नोति । किन्त्वनन्तप्रसादादेवेति भावेन 'आत्मतृप्त'पदं व्याचष्टे – आत्मनेति ॥

(भा) आत्मना तृप्तः ।

(टी) नन्वितरवन्मध्यात्मशब्देऽपि सप्तमी किं न स्यात्? इत्यत आह – न हीति ॥

---

१. तदात्मरत्याख्यम् । प्रागुक्तमेव सुखं पुनरन्यत्रालम्बुद्धिकारणत्वेनोच्यते । अतो न दोषः । तस्य च महत्त्वं संशब्देनोक्तम् । अतस्तत्कारणत्वं चोपपन्नमित्यर्थः । – प्र.दी.

२. तदेव – पा

३. तत्स्थत्वादन्यत्र दर्श० – पा

४. -द्यभावरूप० – पा

(भा) **नह्यात्मन्यलम्बुद्धिर्युक्ता ।**

**(टी)** ननु 'तृप्ति'शब्दस्यालम्बुद्धिवाचित्वे सप्तम्ययुक्ता । तदेव कुतः? इत्यत आह – **तद्वाचित्वं चेति** ॥

(भा) **तद्वाचित्वं च – 'वयं तु न वितृप्याम उत्तमश्लोकविक्रमैः'[१] इति प्रयोगात् सिद्धम् ।**

**(टी)** ननूत्तमश्लोकविक्रमैः श्रूयमाणैर्निमित्तैरन्यत्र न वितृप्याम इत्यध्याहारे सति नालम्बुद्धिवाचित्वं 'तृप्ति'शब्दस्येत्यत आह – **अध्याहारस्त्विवति**[२] ॥

(भा) **अध्याहारस्त्वगतिका गतिः ।**

**(टी)** ननु 'आत्मरति'शब्देन परमात्मदर्शननिमित्तं सुखम्, आदिशब्देन तत्स्मृतिनिमित्तं च सुखमुच्यते । तत्र सम्प्रज्ञातसमाधेः स्मृतिनिमित्तसुखसम्भवेन तस्यापि कार्याभाव इत्यत आह – **आत्मेति**[३] ॥

(भा) **'आत्मरतिरेव' इत्यवधारणादसम्प्रज्ञातसमाधिस्थस्यैव कार्यं न विद्यते ।**

**(टी)** एतदेव दृढयति – **स्थितेति** ॥

(भा) **'स्थितप्रज्ञस्यापि कार्यो देहादिर्दृश्यते यदा ।**
**स्वधर्मो मम तुष्ट्यर्थः सा हि सर्वैरपेक्षिता' इति वचनाच्च पञ्चरात्रे ।**

---

१. भागवते १/१/१९

२. नन्वत्र तृप्तिशब्दः प्रीत्यर्थः । न चैवं सत्यर्थानुपपत्तिः । उत्तमश्लोकविक्रमैः श्रूयमाणैर्निमित्तैरन्यत्र प्रीतिं न प्राप्नुम इत्यध्याहारेणोपपत्तेरित्यत आह – अध्याहारस्त्विवति ॥
– प्र.दी.

३. नन्वात्मरतेः कार्याभावे ज्ञानिमात्रस्य कार्याभावापात इत्यत आह – आत्मेति ॥
– भावप्रदीपिका

**(टी)** सम्प्रज्ञातसमाधेः स्थितप्रज्ञस्यापि कार्यमस्ति किमुत सम्प्रज्ञातसमाधिमात्रस्येत्यर्थः ।

ननु परमात्मानं ध्यायतो देहादिदर्शनेऽपि रत्यभावात् कथं तस्य न कार्यम्? इत्यत आह – **अन्यदेति** ॥

**(भा) अन्यदाऽन्यरतिरपीषत् सर्वस्य भवति ।**

**(टी)** ननु परमात्मानं ध्यायतोऽन्यत्रालम्बुद्धेर्विद्यमानत्वात् मनश्चापल्येनेषद्रत्यां सत्यामप्यसावात्मरतिरेवेत्युच्यते । अतो न कार्यं तस्येत्यत आह – **न चेति** ॥

**(भा) न च तत्रालम्बुद्धिमात्रमुक्तम् । आत्मतृप्त इति पृथगभिधानात् ।**

**(टी)** ननु मा भूदवधारणमात्रविषयम्, किन्त्वात्मरतिविषयम् । तथाविधो यः सकृदात्मरतिरेव स्यात् तस्य कदाऽपि कार्यं न स्यात् । अत्र कालावच्छेदकशब्दाभावादित्यत आह – **कर्तृशब्द इति** ॥

**(भा) कर्तृशब्दः कालावच्छेदे चायं प्रसिद्धः- 'यो भुङ्क्ते स तु न ब्रूयात्' इत्यादौ ।**

**(टी)** तत्र यथा यावद्भुङ्क्ते तावदेव मौनम्, तद्वद्यावदात्मन्येव रमते तावदेव तस्य कार्यं नेत्यर्थः ।

उपसंहरति – **अत इति** ॥

**(भा)अतोऽसम्प्रज्ञातसमाधावेवैतत् ।**

**(टी)** अपरोक्षज्ञानात् प्रागसम्प्रज्ञातसमाधिरेव नास्ति । अन्यथा विशेषणवैयर्थ्यं स्यादित्याह – **मानव इति** ।

**(भा) मानव इति ज्ञानिन एवासम्प्रज्ञातसमाधिर्भवतीति दर्शयति । 'मनु अवबोधने' इति धातोः ।**

**(टी)** विषयान् परित्यज्य यः स्वात्मन्येव रमते तस्य कार्यं नेत्येतन्निरीश्वरसाङ्ख्यमतं निरस्यति – **परमात्मेति** ॥

**(भा) परमात्मरतिश्चात्र विवक्षिता । 'विष्णावेव रतिर्यस्य क्रिया तस्यैव नास्ति हि' इति वचनात् ॥१७॥**

**(टी)** न केवलमसम्प्रज्ञातसमाधिरेव विवक्षिताऽत्र, किन्तु परमात्मरतिश्चे-त्यर्थः ॥१७॥

ननु कथं तस्य कार्यं न विद्यते ? करणे मुक्तावानन्दवृद्धिरकरणे च तदभावः प्रत्यवायो वाऽऽनन्दह्रासकर इति । अतोऽसावसम्प्रज्ञातसमाधिर्प्राग्विवक्षिता स्यात्(?) । 'कर्मकालोऽयमिति त्वयाऽहं वक्तव्यः' इति कश्चित्प्रत्युक्त्वा समाधिं कुर्वंस्तद्वचनादुत्थाय कर्म कुर्यादित्याशङ्क्योत्तरत्वेनोत्तरार्धं च व्याचष्टे – **तस्येति** ॥

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥१८॥**

**(भा) तस्य 'कर्मकाले वक्तव्योऽहम्' इति कश्चित् प्रत्युक्त्वा तत्कृता-वात्मरत्यधिकः समो वाऽर्थो नास्ति । न च सन्ध्याद्यकृतौ कश्चिद्दोषोऽस्ति ।**

**(टी)** 'कश्चन' इति पदं 'कृतेनार्थः' इत्यत्राप्यभिकृष्य व्याचष्टे – **अधिकः समो वेति** ॥

आत्मरतेर्वाऽऽत्मरत्या वा यावत्प्रयोजनम्, तदधिकं तत्समं वा [१]न कर्मणेत्यर्थः । [२]न कश्चिदित्यानन्दह्रासकरो नरकाद्यापादकश्च [३]नेत्यर्थः ।

१. वा कर्मणा – पा
२. कश्चित् – पा
३. इत्यर्थः – पा

यथाऽन्येषु कर्मसु गुर्वागतिरुत्थानकारणम्, तदपि नासम्प्राज्ञतसमाधेरिति भावेनोत्तरार्धं व्याचष्टे – न चेति ॥

**(भा) न चैतदपहाय सर्वभूतेषु कश्चित् प्रयोजनाश्रयः। अर्थो येन दर्शनादिना भवति सोऽर्थव्यपाश्रयः।**

**(टी)** कश्चित् 'व्यापारः' इति शेषः[१]।

नन्वपरोक्षज्ञानिमात्रस्य प्रत्यवायाभावात्, मुक्तेश्च सिद्धत्वात्, श्लोकद्वयमिदं कथञ्चित् तद्विषयमेव स्यात्। नासम्प्रज्ञातसमाधिविषयमित्यत आह – ज्ञानेति ॥

**(भा) ज्ञानमात्रेण प्रत्यवायो यद्यपि न भवति। तदर्जुनस्यापि सममिति न तस्य कर्मोपदेशयोग्येतद्भवति।**

**(टी)** यद्यपीत्यस्यार्थं प्रकटयति – ईषदित्यादिना[२] ॥

**(भा) ईषत् प्रारब्धानर्थसूचकं च तद्भवति। महच्चेद्वृत्रहत्यादिवत् ॥१८॥**

**(टी)** तदिति ज्ञानिकृतविकर्मापीत्यर्थः ॥१८॥

असम्प्रज्ञातसमाधिविषयत्वे तु श्लोकद्वयस्यार्जुनं प्रति कर्मोपदेशोपयोगित्वं दर्शयन्नेवोत्तरं श्लोकं व्याचष्टे – यत इति ॥१९॥

---

१. प्रयोजनाश्रयो 'व्यापारः' इति शेषः। – **भावप्रदीपिका**
अनेन 'अर्थस्य व्यपाश्रयः प्राप्तिर्येन दर्शनादिना व्यापारेण भवति' इति व्यधिकरणो बहुव्रीहिरयमित्युक्तं भवति। – **प्र.दी.**

२. प्रत्यवायो न भवतीत्यङ्गीकृत्योक्तम्। वस्तुतस्तु ज्ञानिनोऽप्यस्ति प्रतिषिद्धकरणादिनाऽनिष्टप्राप्तिरित्याह – ईषदिति ॥ सूचिते च तदैव चित्तखेदः। उपलक्षणं चैतत्। मुक्तावानन्दह्रास इत्यपि द्रष्टव्यम्। तथा विहितकरणेनानन्दवृद्धिरपीति। – **प्र.दी.**

**तस्मादसक्तः सततं कार्यं कर्म समाचर ।**
**असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥१९॥**

(भा) यतोऽसम्प्रज्ञातसमाधेरेव कार्याभावः, तस्मात् कर्म समाचर ॥१९॥

**(टी)** इतोऽप्यसम्प्रज्ञातसमाधेरेव कार्याभावो न तु ज्ञानिमात्राणाम् । तेषामपि कर्माचरणदर्शनादिति भावेनोत्तरं प्रघट्टकमवतारयति – **आचार** इति ॥

(भा) आचारोऽप्यस्तीत्याह – कर्मणैवेति ॥

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**
**लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि ॥२०॥**

**(टी)** यतो हि ज्ञाननिष्ठा अपि जनकादयः कर्म कुर्वन्ति लोकसङ्ग्रहाय, लोकसङ्ग्रहेण च भगवत्तुष्ट्या मुक्तावानन्दवृद्धिः, अतः सिद्धत्वान्मुक्तेः ज्ञाननिष्ठस्य मम न कर्मफलमिति न मन्तव्यम् । सर्वथा स्वप्रयोजनाभावस्तु भगवत एव सदा स्वत एवाप्तकामस्य । तथाऽप्यसौ जगद्रक्षादिकर्मणि प्रवर्तते । अतस्तदिच्छानुसारिणाऽऽधिकारिकेण कर्म विशेषतः कर्तव्यम्, युद्धादिकमपीति भावः ।

ननु न कर्मैव मुक्तिसाधनं प्रतीयते । तत्कथं ज्ञानिनां [1]कर्माप्यनुष्ठेयमिति वर्ण्यते ? इत्याशङ्क्य सहार्थेयं तृतीया न करणार्थेति तावदाह – **कर्मणा सहैवेति** ॥

(भा) **कर्मणा सहैव**[2] ।

**(टी)** तर्ह्यवधारणान्वयः क्व? इत्यत आह – **कर्म कुर्वन्त एवेति** ॥

---

१. कर्मानुष्ठेयमिति – पा

२. 'कर्मणा सह' इति प्रचलितपाठः ।

(भा) कर्म कुर्वन्त एवेत्यर्थः ।

(टी) ज्ञाननिष्ठा अपि कर्मणा सहैव मुक्तिं गता इति कर्म कुर्वन्त एव, न तु परित्यज्येत्यर्थः ।

ज्ञानकरणत्वात् कर्मणः, करणे वेयं तृतीया, न साक्षात् मोक्षकरणत्वेनेत्याह – कर्म कृत्वेति ॥

(भा) कर्म कृत्वैव ततो ज्ञानं प्राप्य वा । न तु ज्ञानं विना ।

(टी) ज्ञानित्वे जनकादीनामियं व्यवस्था स्यात् । तदेव कुतः? इत्यत आह – प्रसिद्धं हीति ॥

(भा) प्रसिद्धं हि तेषां ज्ञानित्वं भारतादिषु ।

(टी) श्रुतिविरोधश्चान्यथेत्याह – तमिति ॥

(भा) 'तमेवं विद्वानमृत इह भवति'[1] इत्यादिश्रुतिभ्यश्च ।

(टी) न केवलमन्यथा श्रुतिविरोधः, किन्तूक्तविरोधश्चेत्याह – अत्रेति ॥

(भा) अत्रापि कर्मणां ज्ञानसाधनत्वोक्तेश्च 'बुद्धियुक्ताः'[2] इति ।

(टी) 'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा' इत्यत्र ।

ननु भवत्पक्षेऽपि 'अपाम सोमममृता अभूम'[3] इत्यादिविरोध इत्यत आह – गत्यन्तरं चेति ॥

(भा) गत्यन्तरं च 'नान्यः पन्थाः'[4] इत्यस्य नास्ति । इतरेषां ज्ञान-द्वाराऽप्यविरोधः ।

---

१. तैत्तिरीयारण्यकम् ३/१२

२. गी. २/५१; 'बुद्धियुक्तः' इति पाठः प्रामादिकः ।

३. ऋग्वेदे ८/४२/३

४. तैत्तिरीयारण्यकम् ३/१२

**(टी)** ननु यत्र तीर्थस्नानादेर्ब्रह्मज्ञानेन सह विकल्पः श्रूयते मुक्तिसाधनत्वे, कथं तत्र ज्ञानाङ्गत्वम्? इत्यत आह – **यत्र चेति** ॥

**(भा) यत्र च तीर्थाद्येव मुक्तिसाधनमुच्यते –**

**'ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा ।**
**अथवा स्नानमात्रेण गोमत्यां कृष्णसन्निधौ ॥'[१] इत्यादौ ।**

**तत्र पापादिमुक्तिः । स्तुतिपरता च ।**

**(टी)** ननु विकल्पोक्तितः तुल्यबलत्वावगते, कथं पुरुषबुध्याऽन्यतर-जघन्यता? इत्याशङ्क्य, वचनादेवेयं व्यवस्थेत्याह – **तत्रापि हीति** ॥

**(भा) तत्रापि हि कुत्रचिद्ब्रह्मज्ञानसाधनत्वमेवोच्यतेऽन्यथामुक्तिं निषिद्ध्य –**

**'ब्रह्मज्ञानं विना मुक्तिर्न कथञ्चिदपीष्यते ।**
**प्रयागादेस्तु या मुक्तिर्ज्ञानोपायत्वमेव हि ॥' इत्यादौ ।**

**(टी)** पापमुक्तिद्वारा ज्ञानोपायत्वात् प्रशस्तं तीर्थस्नानादीत्यर्थः ।

ननु यत् तीर्थस्नानादेर्मोक्षसाधनत्ववचनम्, तेन तस्य यज्ज्ञानसाधनत्वोक्त्या ज्ञानस्यैव मोक्षसाधनत्ववचनम्, तस्य बाधः किं न स्यात्? अविशेषादित्यत आह – **न चेति** ॥

**(भा) न च तीर्थस्तुतिवाक्यानि तत्प्रस्तावेऽप्युक्तं ज्ञाननियमं घ्नन्ति ।**

**(टी)** यदि ज्ञानतीर्थस्नानादिकयोः तत्तत्प्रस्तावे मोक्षसाधनत्वमुच्यते, तर्ह्येव तयोर्वचनयोः कथञ्चिदविशेषः शङ्क्येत । न तु तीर्थस्नानादिप्रस्तावेऽपि ज्ञानस्यैव मोक्षसाधनत्वोक्तावित्यर्थः ।

अत एव तानि लौकिकवाक्यवत् स्तावकान्येव, मोहकानि चेत्याह – **यथेति** ॥

---

१. श्लोकोऽयं स्कान्दपुराणे प्रभासखण्डे द्वारकामाहात्म्ये पठ्यते ।

(भा) यथा कश्चिद्दक्षं भृत्यं प्रत्युक्तानि 'अयमेव हि राजा किं राज्ञा' इत्यादीनि ।

**(टी)** भगवद्दर्शनमेव मोक्षसाधनम् । तीर्थस्नानादेर्मुक्तिसाधनत्ववचनमुक्त-प्रकारेण स्तावकं मोहकं वेत्येतद्भगवद्वाक्येनापि स्थापयति – **यथाऽऽहेति ॥**

(भा) यथाऽऽह भगवान् –

'यानि तीर्थादिवाक्यानि कर्मादिविषयाणि च ।
स्तावकान्येव तानि स्युरज्ञानां मोहकानि वा ।
भवेन्मोक्षस्तु मद्दृष्टेर्नान्यतस्तु कथञ्चन ॥' इति नारदीये ।

**(टी)** उपसंहरति – अत इति ॥२०॥

(भा) अतोऽपरोक्षज्ञानादेव मोक्षः । कर्म तु तत्साधनमेव ॥२०॥

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥२१॥**

**(टी)** ननु कथं वाक्यादिप्रामाण्यमन्यतः? इत्याशङ्क्य, 'स यत्प्रमाणं कुरुते' इत्यस्य तात्पर्यार्थं कथयति – स यदिति ॥२१॥

(भा) स यत् वाक्यादिकं प्रमाणं कुरुते, यदुक्तप्रकारेण तिष्ठतीत्यर्थः ॥

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥२२॥**

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥२३॥**

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।**
**सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥२४॥**

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।**
**कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥२५॥**

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**
**जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥२६॥**

**(टी)** एवं तावज्ज्ञानाङ्गत्वेन कर्म विधाय, तस्याबन्धकत्वं विधाय, यज्ञार्थं मुक्तसङ्गः समाचरेदित्यविद्वत्कर्मणः सकाशात् भेदो यः प्रस्तुतः, तमिदानीं प्रकटयतीति भावेनोत्तरं श्लोकचतुष्टयमवतार्य व्याचष्टे – विद्वदविदुषोरिति ॥

(भा) विद्वदविदुषोः कर्मभेदमाह – प्रकृतेरिति ॥

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।**
**अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥२७॥**

**तत्त्ववित् तु महाबाहो गुणकर्मविभागयोः ।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥२८॥**

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान् कुत्स्नविन्न विचालयेत् ॥२९॥**

**मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३०॥**

**(टी)** सत्वादिशङ्कापनोदायाह – **प्रकृतेर्गुणैरिति** ॥

(भा) प्रकृतेर्गुणैः इन्द्रियादिभिः ।

**(टी)** ननु कथमिन्द्रियाणां गुणत्वम्? इत्याशङ्क्य, तदुपसर्जनत्वात् गुरुणोतिर्यैस्ते(?) गुणा इति निरुक्त्या चेति भावेनाह – **प्रकृतिमिति** ॥

(भा) प्रकृतिमपेक्ष्य गुणभूतानि हि तानि ।

**(टी)** निरुक्तिगैरिति वक्ष्यति ।

ननु गुणत्वमेव निरुक्त्या प्रतीयते न प्रकृतिगुणत्वमित्यत आह – **तत्सम्बन्धीनीति**[१] ॥

(भा) **तत्सम्बन्धीनि च ।**

**(टी)** प्राकृतभूतैरुपचीयमानत्वात् प्रकृतिसम्बन्धित्वम्[२]।

एतेनैतदपि प्रत्युक्तम् । यदन्यत्प्रतीयते – ब्रह्मकरणत्वात् ब्रह्मगुणत्वमेवेन्द्रियाणां जीवापेक्षया प्रियमाणत्वात् जीवगुणत्वमेव वा, न प्रकृतिगुणत्वमिति । उक्तप्रकारेण प्रकृतिगुणत्वस्यापि सम्भवात् ।

ननु प्रत्यक्षं जीवकर्तृत्वम् । कथं मोहः? इत्यत आह – **न हीति** ॥

(भा) **नहि प्रतिबिम्बस्य क्रिया** ॥

**(टी)** स्वतन्त्रकतृत्वज्ञानमेव मोहः, [३]विकारकर्तृत्वज्ञानं वा जीवस्य, न परतन्त्रकर्तृत्वज्ञानम् । प्रतिबिम्बे बिम्बाधीनकर्तृत्वदर्शनादिति भावः ॥

द्वितीयं व्याचष्टे – **कर्मभेदस्येति** ॥

(भा) **कर्मभेदस्य गुणभेदस्य च तत्त्ववित् । गुणा इन्द्रियादीनि । गुणेषु विषयेषु** ॥

---

१. तत्सम्बद्धानीति – पा

२. ''प्रकृतेरुपचीयमानत्ववत्प्रकृतिसम्बन्धित्वम्'' इति प्राचीनटीका । – भावरत्नकोशे
प्रकृतिकार्याणि चेत्यर्थः । – प्र.दी.

३. विकारि० – पा

**(टी)** [1]स्वतन्त्रकर्तृत्वं विष्णोरेव, तदधीनस्वतन्त्रकर्तृत्वं [2]स्वावरापेक्षयैव जीवस्य, विकारलक्षणमेव कर्तृत्वं प्रकृतेः – इति कर्मभेदः[3] । ब्रह्मादीनां सर्वेषामिन्द्रियाणि शरीरं च भगवतैव प्रयोज्यानीति तस्यैव गुणभूतानि, भगवतैव क्वचिज्जीवापेक्षयाऽपि प्रयोज्यन्त इति जीवानामपि गुणभूतानि, तान्येव प्रकृत्युपचितानीति प्रकृतेरपि गुणभूतानि – इति गुणभेदः[4] ।

---

१. जीवेश्वरप्रकृतिलक्षणसम्बन्धिभेदात् कर्मणामिन्द्रियादीनां च भेदोऽत्र विवक्षितो ग्रन्थान्तरादवगन्तव्यः । – प्र.दी.

२. **स्थावरापेक्षयैव** – पा

३. 'नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।
तथापि मत्कृता पूजा तत्प्रसादेन नान्यथा ।
तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनः पुनः ।
कर्मन्यासो हरावेवं विष्णोस्तृप्तिकरः सदा ।
यस्मात्स्वतन्त्रकर्तृत्वं विष्णोरेव न चान्यगम् ।
तदधीनं स्वतन्त्रत्वं स्वावरापेक्षयैव तु ।
जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् ।
पुमान् दोग्धा च गौर्दोग्ध्री स्तनो दोग्धेतिवत् क्रमात् ॥' इति ब्रह्मतर्कवचनादीश्वर-जीवप्रकृत्यादीनां कर्तृत्वमकर्तृत्वं च विभागेन ज्ञातव्यं सर्वत्र – **गीतातात्पर्ये** ॥

४. कार्यते ह्यवशः कर्म सर्वैस्तैः प्राकृतैर्गुणैः ।
स्वाभाविकगुणानेतान् हेतुं कृत्वैव विष्णुना ।
कर्मसु क्रियमाणेषु कर्ताऽहमिति मूढधीः ।
मन्यते तत्वविद्विष्णोर्गुणा इच्छादयस्तु ये ।
स्वाभाविकेषु जीवस्य कामाद्येषु सदैव तु ।
प्रेरकत्वेन वर्तन्ते स्वातन्त्र्यं मम न क्वचित् ।
इति मत्वा न सक्तः स्यात् प्रीतोऽस्य भवति प्रभुः ॥
– इति **गीतातात्पर्योदाहृतप्रकाशसंहितावचनम्**

गुणकर्मविभागशब्देन नोक्तो विभागो विवक्ष्यते । किन्तु ''स्वतन्त्रकर्तृत्वं विष्णोरेव । तदधीनस्वतन्त्रकर्तृत्वं स्वावरापेक्षयैव जीवस्य । विकारलक्षणमेव कर्तृत्वं प्रकृतेरिति कर्मभेदः । ब्रह्मादीनां सर्वेषामिन्द्रियाणि शरीरं च भगवतैव प्रयोज्यानीति तस्यैव

एवमनयोः तत्त्वविद्भगवतैव प्रेरिता इन्द्रियादिगुणास्तदधीनेषु शब्दादिगुणेषु प्रवर्तन्त इति मत्वा न सक्तः स्यादिति भावः ।

तृतीयं व्याचष्टे – **प्रकृतेर्गुणेष्विति ॥**

**(भा) प्रकृतेर्गुणेषु इन्द्रियादिषु सम्मूढाः । इन्द्रियाद्यभिमानाद्धि विषयादिसङ्गः । गुणकर्मसु विषयेषु कर्मसु च ।**

**(टी)** इन्द्रियादीनां गुणत्वे प्रमाणमाह – **शब्दाद्या इति ॥**

**(भा) 'शब्दाद्या इन्द्रियाद्याश्च सत्त्वाद्याश्च शुभानि च ।**
**अप्रधानानि च गुणा निगद्यन्ते निरुक्तिगैः ॥' इत्यभिधानात् ।**

**(टी)** सत्वादीनामेव गुणत्वाङ्गीकारे दूषणमाह – **सत्वेति ॥**

**(भा) सत्वाद्यङ्गीकारे, 'गुणा गुणेषु' इत्ययुक्तं स्यात् ॥**

**(टी)** न हि सत्त्वादिगुणानामेव कर्तृकर्मभावः । गुणशब्दस्येन्द्रियादौ लक्षणा चेत् स एव दोषः[१] । अतो यथाभिधानमिन्द्रियादयोऽत्र गुणशब्दार्था इति भावः ॥ चतुर्थं व्याचष्टे – **अत इति ॥**

**(भा) अतः सर्वाणि कर्माणि मय्येव सन्न्यस्य, भ्रान्तितः[२] जीवेऽध्यारोपितानि मय्येव विसृज्य भगवानेव सर्वाणि कर्माणि करोतीति, मत्पूजेति च ।**

---

गुणभूतानि । भगवतैव कचिज्जीवापेक्षयाऽपि प्रयोज्यन्त इति जीवानामपि गुणभूतानि । तान्येव प्रकृत्युपचितानीति प्रकृतेरपि गुणभूतानीति गुणभेदः ।'' इत्येवं गुणकर्मविभागयोस्तत्त्वविदिति प्राचीनटीकारीत्या गुणकर्मविभाग एव विवक्ष्यते । – **भावरत्नकोशे**

१. सत्वादीति ॥ कर्तृत्वाधारत्वयोरेकत्र विरोधादिति भावः । तदात्मकानामिन्द्रियाणामुपलक्षणे वृथा प्रयासः । – प्र.दी.

२. 'भ्रान्तितः' इति ह.पाठोऽपि । 'भ्रान्त्या' इति प्रचलितपाठः भावप्रदीपिकाप्रमेयदीपिकयोः सम्मतः ।

**(टी)** यतः स्वतन्त्रकर्म विष्णोरेव, तं प्रत्येव गुणभूतानीन्द्रियाणीत्यादि-विदेव न सक्तः स्यात्, अतस्तस्मिन्नेव सर्वाणि कर्माणि सन्न्यस्य युद्ध्यस्वेत्यर्थः ।

अतःशब्दोक्तहेतुविशेषज्ञानात् स्वकृतं कर्म भगवत्येव समर्प्येत्यपि प्रतीतिः स्यात् । तां व्यावर्तयति – **भ्रान्तित इति** ॥

ननु जीवापरोपितत्वे कर्मणां कथं विसर्गः? स्वीयस्यैव विसर्जनीयत्वा-दित्याशङ्क्य, यत्प्रकृतान्येतानि [१]तत्कृतत्वज्ञानमेवैतेषां विसर्ग इति भावेनाह – **भगवानिति** ॥

अनेनैव कर्मणां स्वरूपेणारोपितत्वं प्रत्युक्तम् । प्रकारान्तरेणापि भगवति कर्मविसर्गमाह – **मत्पूजेति** ॥

मत्कृतान्येवैतानि कर्माणीत्येतदेवारोपितं जीवे । न तु मयि भगवता क्रियन्त इत्येतत् । अतः तत्प्रसादेनात्मनि प्राप्तकर्मणां तत्पूजात्वेनार्पणं युक्तमिति भावः ।

परमात्मानमधिकृत्य यच्चेतः, तस्य सर्वोत्तमत्वसर्वनियामकत्वादिज्ञानम्, तेन तत्र सर्वकर्मसन्न्यासो घटत इति भावेनाह – **आत्मानमिति** ॥

**(भा) आत्मानमधिकृत्य यच्चेतस्तदध्यात्मचेतः ।**

**(टी)** सन्न्यासनिर्ममत्वयोर्भेदमाह – **सन्न्यासस्त्विति** ॥२७-३०॥

**(भा) सन्न्यासस्तु भगवान् करोतीति । निर्ममत्वं नाहं करोमीति ।**

॥२७-३०॥

**(टी)** एवंविधैः कर्मभिः न स्वर्गादिरूपपुष्पमात्रावाप्तिः, नापि प्रत्यवाय-

---

१. तत्र तत्त्वज्ञान० – पा

परिहारमात्रम् । किन्तु ज्ञानद्वारा [१]फलं भवति कैवल्यमिति भावेनोत्तरश्लोकमवतार्य व्याचष्टे – फलमिति ॥

(भा) फलमाह – ये म इति ॥

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥३१॥**
**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥३२॥**

**(टी)** ननु किं द्वारभूतेन ज्ञानेन? साधनान्तरमेव कर्म किं न स्यात् ? अपिशब्दबलात् । तथा चान्ये वदन्ति –

'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया'

इति । इत्याशङ्क्यापिशब्दः कैमुत्यन्यायसूचको, न तु ज्ञानमिव कर्मापि मुक्तिसाधनमित्येतदर्थकमित्येतत्सप्रमाणकमाह – ये त्वेवमिति[२] ॥

(भा) **ये त्वेवं निवृत्तकर्मिणस्तेऽपि मुच्यन्ते ज्ञानद्वारा । किम्वपरोक्षज्ञानिनः? न तु साधनान्तरमुच्यते –**

**'निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टये ।**
**अपरोक्षेशदृष्टिस्तु मुक्तौ किञ्चिन्न मार्गते ।**

---

१. फलमेव – पा

२. तेऽपि निवृत्तकर्मानुतिष्ठन्तोऽपि मुच्यन्त इत्युक्तौ कर्मापि मोक्षसाधनमिति सिद्ध्यतीति भावेन 'अपिशब्दबलात्' इति प्राचीनटीकोक्तमेवाह – अपिशब्देनेति ।– **भावरत्नकोशे** 'मुच्यन्ते तेऽपि कर्मभिः' इत्यपिशब्देन ज्ञानमिव निवृत्तं कर्मापि मोक्षसाधनमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे – ये त्विति ॥ कैमुत्यद्योतनार्थोऽपिशब्दः न समुच्चयार्थ इत्यर्थः । – प्र.दी.

सर्वं तदन्तराधाय मुक्तये साधनं भवेत् ।
न किञ्चिदन्तराधाय निर्वाणायापरोक्षदृक्'

– इति ह्युक्तं नारायणाष्टाक्षरकल्पे ।

(टी) [१]आदिपदेन स्वस्वपदकामाधिकारिकध्रुवाद्यनुष्ठितं तपआदिकर्म[२] ।

ननु मा भून्मुक्तौ साधनान्तरं कर्म ज्ञानात् । समुच्चयनियमस्तु तयोः स्यादेव । ज्ञानिनोऽप्यर्जुनस्य कर्मविधानादित्याशङ्क्य, एतदस्मादेव वचनात् सोऽपि निराकृत इत्याह – अत एवेति ॥

(भा) अत एव समुच्चयनियमोऽपि[३] निराकृतः ॥३१, ३२॥

(टी) ज्ञानिनोऽपि कर्मविधिर्मुक्तावानन्दवृद्ध्य एव । ज्ञानं तूत्पन्नं विनाऽपि कर्म मुक्तिं ददात्येवेति न [४]समुच्चयनियम इत्यर्थः ॥३१,३२॥

ननूक्तलक्षणं कर्म, ज्ञानद्वारा मुक्तिसाधकत्वादवश्यानुष्ठेयमन्यथाऽनर्थोऽपि चेत्, किमिति सर्वो जनस्ते मतं नानुतिष्ठन्ति ? अतः स्वमतप्रशंसामात्रमेतदिति भावेनाशङ्क्य, तत्परिहारत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे – एवं चेदिति ॥

(भा) एवं चेत् किमिति ते मतं नानुतिष्ठन्ति लोकाः? इत्यत आह – सदृशमिति ॥

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३.३॥**

---

१. आदिशब्देन – पा

२. प्राचीनटीकायां तु ''आदिपदेन स्वस्वपदकामाधिकारिकदेवाद्यनुष्ठितं तपआदि कर्म गृह्यते'' इत्युक्तम् । – भावरत्नकोशे

आदिपदेन नित्यनैमित्तिकादीनां ग्रहणम् । – प्र.दी.

३. 'समुच्चयनियमो निराकृतः' इति प्रचलितपाठः ।

४. कर्मसमुच्चय० – पा

(भा) प्रकृतिः पूर्वसंस्कारः ॥३३॥

**(टी)** पूर्वसंस्कारादेव प्रवर्तते । न तु फललोभादनर्थभयाद्वा निगृहीत इति भावः ॥३३॥

ननु यदि निग्रहस्य पूर्वसंस्कारानुसारिप्रवृत्यन्यथाकरणसामर्थ्याभावः । तर्हि स्वोक्तकरणाकरणयोरर्थानर्थादिकथनादिवैय्यर्थ्यं स्यादित्याशङ्क्य, तत्परिहारायोत्तरं श्लोकमवतार्य व्याचष्टे – **तथाऽपीति** ॥

(भा) **तथाऽपि शक्तितो निग्रहः कार्यः । निग्रहात् सद्यःप्रयोजनाभावेऽपि** भवत्येवातिप्रयत्नत इत्याशयवानाह – इन्द्रियस्येति ॥

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥३४॥**

**(टी)** श्लोकद्वयोक्तार्थे प्रमाणमाह – **तथा हीति**[1] ॥

(भा) **तथाह्युक्तम्** –

**'संस्कारो बलवानेव ब्रह्माद्या अपि तद्वशाः ।**
**तथाऽपि सोऽन्यथाकर्तुं शक्यतेऽतिप्रयत्नतः'** इति ॥३४ ॥

**(टी)** अतो येऽतिप्रयत्नेन निगृहीतेन्द्रियास्त एव मे मतमनुतिष्ठन्तीत्यर्थः ॥३४॥

ननु मा भूद्बहूनां भगवन्मताननुष्ठानान्यथानुपपत्त्या 'ये मे' इत्यादिवाक्ययोः तन्मतप्रशंसामात्रपरत्वम् । किन्तु तन्मतानुष्ठानाननुष्ठानादिना भाविफलसङ्कीर्तनात्मकत्वमेव । तथाऽप्युग्रत्वाद्युद्धकर्मणः स्यातामेव रागद्वेषौ तत्कर्तुः ।

---

१. ''अत्र मनोनिग्रहस्यातिप्रयत्नापादितस्य प्रकृतिशक्तिविघटकत्वमस्तीत्यत्र 'सदृशम्' इत्यादिश्लोकद्वयार्थे प्रमाणमाह – तथा हीति'' इति तु प्राचीनटीका । – **भावरत्नकोशे** अत्रागमसम्मतिमाह – तथा हीति ॥ – प्र.दी.

द्वेषशब्दस्तु लोभादीनामप्युपलक्षकः[१] । अतो 'युद्ध्यस्व' इत्युक्त्वा 'तयोर्न वशमागच्छेत्' इति कथमुच्यते? इति भावेनाशङ्क्य, तत्परिहारायोत्तरं श्लोकमवतारयति – तथाऽपीति ॥३५॥

(भा) तथाऽप्युग्रं युद्धं कर्मेत्यत आह – श्रेयानिति ॥३५॥

**श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥३५॥**

**(टी)** शुभाशुभयोः प्रवर्तकमीश्वरं ब्रह्मादींश्च जानात्येवार्जुनः । केवलाशुभप्रवर्तकानपि बहून् जानाति भगवतोक्तान् क्रोधादीन् कामं च[२] । अतस्तत्र बलवन्तमेव पृच्छतीत्याह – बहव इति ॥

(भा) बहवः कर्मकारणाः सन्ति क्रोधादयः कामश्च । तत्र को बलवानिति पृच्छति – अथेति ॥

**अर्जुन उवाच**

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥३६॥**

**(टी)** प्रकरणविच्छेदज्ञापकः 'अथ'शब्द इत्याह –अथेति ॥

(भा) अथेत्यर्थान्तरम् ।

**(टी)** प्रकरणान्तरसङ्गतिबीजमाह – तयोरिति ॥३६॥

(भा) 'तयोर्न वशमागच्छेत्' इति प्रश्नप्रापकम् ॥३६॥

---

१. 'क्रोधादयः इत्यनेन पूर्वश्लोकोक्तं 'द्वेष'पदमन्योपलक्षकमित्युक्तं भवति' इत्युत्तरत्र भावप्रदीपिकायाम् । प्रमेयदीपिकायां च – 'पूर्वं भगवता द्वेषशब्देन मदमत्सरादयोऽप्युपलक्षिताः ।' इति ।

२. परमेश्वराद्देवेभ्यश्चार्वाक्तनप्रेरकं पृच्छति – गीतातात्पर्ये

**श्रीभगवानुवाच –**

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥३७॥**

**(टी)** उत्तरवाक्यमप्यशुभप्रेरकबलवत्प्रकाशकत्वेन व्याचष्टे – **यस्त्विति** ॥

(भा) यस्तु बलवान् प्रवर्तकः स एष कामः ।

**(टी)** ननूत्तरवाक्ये कामक्रोधयोरेकत्वमुच्यते । प्रश्नवाक्यं च साधारणम् । तथा ह्यन्ये वर्णयन्ति – काम एव केनचित्प्रतिहतः क्रोधत्वेन परिणमत इति[१] । अतः कथं प्रश्नप्रतिवचनयोः पापप्रेरकबलवत्परता? इत्यत आह – **क्रोधोऽपीति** ॥

(भा) क्रोधोऽप्येष एव । तज्जन्यत्वात् ।

**(टी)** आत्मैव पुरुष इतिवदौपचारिक इत्यर्थः[२] । अन्यथोक्तविरोध इत्याह – **कामादिति** ॥

(भा) 'कामात् क्रोधोऽभिजायते'[३] इति ह्युक्तम् ।

**(टी)** ननु कामजत्वनियमे क्रोधस्य क्रोधोऽप्येष एवेत्युपचारोऽपि घटेत । तस्य निमित्तान्तरादप्युपपत्तेः स एव कुतः? इत्यत आह – **यत्रापीति** ॥

(भा) यत्रापि गुरुनिन्दादिनिमित्तः क्रोधस्तत्रापि भक्तिनिमित्ता निन्दा कामनिमित्त एव ।

---

१. काम एष सर्वलोकशत्रुः । यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनाम् । स एष कामः प्रतिहतः केनचित् क्रोधत्वेन परिणमते । – **शाङ्करभाष्यम्**

२. काम एव किं मुख्यया वृत्त्या एवमुच्यते? नेति ब्रूमः । किन्तूपचारेणेति भावेनाह – तदिति ॥ – **प्र.दी.**

३. गी. २/६२

**(टी)** भक्तिनिमित्तोऽयमनिन्दाकामः[1], तन्निमित्त एव क्रोध इत्यर्थः। अतोऽत्र कामक्रोधयोः सङ्कीर्तनत्वादन्यथावाद इत्याह – **ये त्विति**[2] ॥

**(भा) ये त्वन्यथा वदन्ति ते सङ्करान्न सूक्ष्मं जानन्ति।**

**(टी)** क्रोधादेः कामजत्वनियमे प्रमाणमाह – **उक्तं चेति** ॥

**(भा) उक्तं च –**

**'ऋते कामं न कोपाद्या जायन्ते हि कथञ्चन' इति।**

**(टी)** उत्तरार्धगतविशेषणानि कामे घटयति– **महाशन इत्यादिना** ॥३७॥

**(भा) महाशनः। महद्धि कामभोग्यम्। महाब्रह्महत्यादिकारणत्वान्महापाप्मा। सर्वपुरुषार्थविरोधित्वाद्वैरी ॥३७॥**

**(टी)** कामस्य सर्वपुरुषार्थविरोधित्वप्रदर्शनायोत्तरं श्लोकद्वयमवतार्य व्याचष्टे – **कथमित्यादिना** ॥

**(भा) कथं विरोधी सः?**

**धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च।**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥३८॥**

**(भा) इदमनेनावृतम्।**

**(टी)** यतः इदम् ईश्वरादिकम् **अनेनावृतं** कामेन, अतोऽयं विरोधीत्यर्थः। दृष्टान्तत्रयसाफल्यं दर्शयन्नेतदेव विवृणोति – **यथा धूमेनेत्यादिना** ॥

---

१. भक्तिनिमित्तश्चासौ अनिन्दाकामश्चेति विग्रहः। – **प्र.दी.**

२. काम एव केनचित्प्रतिहतः क्रोधत्वेन परिणमते इति परेषां व्याख्यानं दूषयति – ये त्विति ॥ – **प्र.दी.**

(भा) यथा धूमेनाग्निरावृतः प्रकाशरूपोऽप्यन्येषां सम्यगदर्शनाय तथा परमात्मा । यथाऽऽदर्शो मलेनावृतोऽन्याभिव्यक्तिहेतुर्न भवति तथाऽन्तःकरणं परमात्मादेर्व्यक्तिहेतुर्न भवति कामेनावृतम् । यथोल्बेनावृत्य बद्धो भवति गर्भस्तथा कामेन जीवः ॥३८॥

**(टी)** यथाऽग्निदेवेन सम्यक् प्रतीयमानोऽपि तज्ज्वालादि धूमेनावृतोऽन्येषामेव सम्यङ्न प्रतीयते, तथा परमात्मा स्वात्मानं[1] सम्यक् पश्यन्नपि जीवकामावृतः तेषामेव सम्यङ्न दृश्यते । यथाऽऽदर्शो मलेनावृते प्रतिबिम्बानाविर्भावान्न बिम्ब एतादृश इति प्रदर्शकोऽसौ, तथा [2]कामयुतेऽन्तःकरणे प्रतिबिम्बभूतजीवज्ञानानाविर्भावान्न बिम्बभूतपरमात्मनः तत्सर्वकर्तृत्वादेश्च प्रदर्शकं तद्भवति । ध्यानकाले वा प्रतिबिम्बभूतस्य भगवद्वपुषः तद्वस्त्राभरणादेश्च । यथा जरायुणाऽऽवृतो[3] बद्ध एव भवति गर्भः, न तु परमात्मैवान्येषामेव सम्यङ्न प्रकाशते, अपि तु स्वात्मानमपि सम्यङ्नानुभवति । तथैव जीवः कामेनावृतः ।

केचिदेवं प्रतीयमानं जीवपरभेदमसहमानाः 'तेनेदम्' इत्यत्रेदंशब्देनोत्तरश्लोकोक्तं ज्ञानमेव परामृश्यत इति वर्णयन्ति[4] । तत्पक्षे कामेनैकमेव ज्ञानमावृतमिति दृष्टान्तत्रयमनुपयुक्तमयुक्तं चावरणतारतम्यप्रदर्शनम् ॥३८॥

अतो न केवलं ज्ञानोत्पत्तिप्रतिबन्धकृत् कामः, किन्तूत्पन्नज्ञानतिरस्कृदपीति भावेनोत्तरश्लोकं व्याचष्टे – **शास्त्रत इति ॥**

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥३९॥**

---

१. चात्मानं – पा २. कामावृते – पा

३. जरायुणा बद्धो – पा

४. किं पुनः तदिदंशब्दवाच्यं यत्कामेनावृतमित्युच्यत आवृतमिति । – **शाङ्करभाष्यम्**

(भा) शास्त्रतो जातमपि ज्ञानं परमात्मापरोक्ष्याय न प्रकाशते कामेनावृतं ज्ञानिनोऽपि । किमु अल्पज्ञानिनः ?

**(टी)** ज्ञानपदं किमर्थमिति चेत्, कैमुत्यनयप्रदर्शनार्थमिति ब्रूमः । कामनिरोधे हि द्विधा ज्ञानमुत्पद्यते । कस्यचिन्महालोके प्रवादात्, अस्ति विष्णुः सर्वेश इति श्रद्धासहितः । अन्यस्य तदपि शास्त्राद्विपुलीकृतम् । स एव ज्ञानीत्युच्यते लोके, नेतरः । तत्र कामावृतत्वे ज्ञानीत्युक्तस्य शास्त्रविपुलीकृतज्ञानमपि न हर्यपरोक्षापादकं किम्वितरस्याल्पज्ञानिनः? लोकप्रवादमात्रजातमल्पज्ञानमित्यर्थः[१] ।

अत्र कैमुत्यन्यायप्रदर्शनेन 'ज्ञानिन एव नित्यवैरिणा न मूर्खस्य' इति यदन्यथावर्णनं[२] तदपि [३]कैमुत्यन्यायपराहतमिति सूचयति । यः कामः कामं तिरस्कृत्य मुच्यमानस्य ज्ञानिनोऽपि नित्यवैरीत्युच्यते, किमुतासौ स्वभावमग्नस्य मूर्खस्य नित्यवैरीति । न चायं मम वैरीति मूर्खेणादावविदिते न तस्य नित्यवैरी कामः । न हि रोगिणां ममायं वैरीत्यविदितो चित्तस्य तात्कालिकेष्टापथ्यदो नावैरीत्युच्यते[४] ।

---

१. "लोकप्रवादमात्रजनितं ज्ञानमल्पज्ञानम् । तद्वतः" इति तु प्राचीनटीका । अल्पज्ञानी लोकप्रवादोत्पन्नज्ञान इति भावप्रदीपिका च । – भावरत्नकोशे

अल्पज्ञानिनः गुरूपदेशमात्रजनितज्ञानवतः । – प्र.दी.

२. ज्ञानी हि जानाति – अनेनाहमनर्थे प्रयुक्तः पूर्वमेवेति । दुःखी च भवति नित्यमेव । अत असौ ज्ञानिनो नित्यवैरी न तु मूर्खस्य । – शाङ्करभाष्यम्

ज्ञानिनो ह्यसौ नित्यवैरी । कथम् । कामं दूरतः कृत्वाऽपवर्गमधिगन्तुमिच्छति ज्ञानी । कामश्च तदीयं ज्ञानं तिरस्कृत्य संसारे क्षेप्तुं यतते । पुनरज्ञो यत्नं कृत्वा काममेवानुवर्तते । न तस्य विरोधस्तेन । – भास्करभाष्यम्

३. कैमुत्यनय – पा

४. अपरे तु ज्ञानिनो नित्यवैरिणा । न मूर्खस्य । ज्ञानी हि नाशयिष्यामि काममिति यतते ।

कामो हि देवविशेष एकः । जीवेच्छाऽपि द्विविधा मनोरूपाऽऽत्मरूपा च । न चैतत्त्रितयान्यतमरूपोऽयं प्रकृतः कामः । किन्तु स्वयं चान्यः कामाख्य इति[1] भावेनाह – **कामरूपेण कामाख्येनेति ॥**

(भा) कामरूपेण **कामाख्येन ।**

**(टी)** स च कालनेमिरिति सप्रमाणकमुक्तमन्यत्र[2] । तत्कथम्? इत्याकाङ्क्षायामाह – **नित्यवैरिणेति ॥**

(भा) **नित्यवैरिणा ।**

**(टी)** न ह्येते त्रयः कैवल्यादिभाजां नित्यवैरिण इति भावः ।

ननु वैरिणमपि कामं काम्येन पूरयित्वा मोक्षाय यतेत, को विरोधः? इत्याशङ्कापरिहारायोत्तरपदमनूद्य व्याचष्टे – **दुष्पूरेणेत्यादिना ॥**

(भा) दुष्पूरेण । **दुःखेन हि कामः पूर्यते ।**

**(टी)** ननु सुखेनापि कामं पूरयन्तो दृश्यन्ते । अतः कथं दुष्पूरः? इत्यत आह – **न हीति ॥**

(भा) **न हीन्द्रादिपदं सुखेन लभ्यते ।**

**(टी)** नन्विन्द्रादिपदयोग्यानां स्वस्वपदकामस्य मुक्त्यविरोधित्वात्[3],

---

मूर्खस्तु तमनुवर्तत इति वर्णयन्ति । तदनेनैव निरस्तम् । अपकारित्वं खल्वत्र वैरित्वं विवक्षितम् । तच्च ज्ञान्यपेक्षया मूर्खेऽधिकम् । न हि मूर्खः तन्नानुसन्धत्त इत्येतावता तन्नास्ति । – प्र.दी.

१. इत्येव – पा

२. अखिलप्रेरको विष्णुर्ब्रह्माद्यास्तदवान्तराः ।
असुरा अशुभेष्वेव कामादेरभिमानिनः ।
तत्र कामः कालनेमिः .... – इत्यादिगीतातात्पर्योदाहृतब्रह्मतर्कवचनम्

३. निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टये । – इत्युदाहृतं नारायणाष्टाक्षरकल्पवचनं पूर्वत्र

दुःखेनापि तल्लाभे कथं कामस्य वैरित्वम् ? अयोग्यानां तु दुःखेनापि न लभ्यते । अतः कथमिदमुदाह्रियते ? उच्यते । अयोग्यानामेव हिरण्यकादीनां [1]बलादिन्द्रपदलाभदर्शनात्[2] ।

ननु दुर्लब्धेनापीन्द्रादिपदेन कामं पूरयित्वा मुक्तये यततां कामः किं करिष्यति? इत्याशङ्कापरिहारत्वेनोत्तरं पदं व्याचष्टे – यद्यपीति[3] ॥

**(भा) यद्यपीन्द्रादिपदं प्राप्तं पुनर्ब्रह्मादिपदमिच्छतीत्यलम्बुद्धिर्नास्तीत्यनलः ।**

**(टी)** न केवलं दृष्टान्तत्रयानुगुण्यात् दार्ष्टान्तिकेऽल्पाप्रियमाणभेदो युक्तिमात्रात्, किन्त्वागमादपीत्याह – **उक्तं चेति** ॥

**(भा) उक्तं च –**

**'ज्ञानस्य ब्रह्मणश्चाग्नेर्धूमो बुद्धेर्मलं तथा ।**
**आदर्शस्याथ जीवस्य गर्भस्योल्बो हि कामकः' इति** ॥३९॥

---

(३/३१) तत्र नरहरितीर्थीये - 'आदिपदेन स्वस्वपदकामाधिकारिकध्रुवाद्यनुष्ठितं तपआदिकर्म' इति ।

१. **बलादिन्द्रादि०** – पा

२. ''नन्विन्द्रादिपदयोग्यानां स्वस्वपदकामो मुक्त्यविरोधीति दुःखेनापि तल्लाभे कथं कामस्य वैरित्वम् ? अयोग्यानां तु दुःखेनापि न तल्लभ्यत इति कथमिदमुदाह्रियते ? उच्यते – अयोग्यानामेव हिरण्यकादीनां बलादिन्द्रादिपदलाभः पुराणादिषु श्रुत इति तद्विषयमेवेदं वाक्यम्'' इति **नरहरितीर्थश्रीमच्चरणाः** । **– भावरत्नकोशे**

इदं च 'हिरण्यकादिविषयमेतत्' इति भावप्रदीपिकायाः विवरणरूपम् ।

३. प्राचीनटीकायां 'यद्यपि' इति भाष्यं ''दुर्लभेनापीन्द्रादिपदेन कामं पूरयित्वा मोक्षाय यतने कामः किं करिष्यति ? इत्याशङ्कापरिहारत्वेनोत्तरं पदं व्याचष्टे'' इत्यवतारितम् । **– भावरत्नकोशे**

ननु प्रज्वलनात्मकत्वात् क्रोधोऽनलो युक्तः । कामस्तु कथमनल इत्यतः सोपपत्तिकमन्यथा व्याचष्टे – यद्यपीति ॥ **– प्र.दी.**

**(टी)** ज्ञान्याख्याग्रे ब्रह्माख्याग्नेश्चावरणे धूमवद्धूमः कामः । बुध्याख्यादर्शस्य मलवन्मलः कामः । जीवाख्यगर्भस्योल्बेव इति ज्ञातव्यम् । कप्रत्ययः कुत्सनेन[1] ॥३९॥

ननु पापप्रेरक एव पृष्टो न तदधिष्ठानम् । अतः किमर्थं तदुच्यते? इत्याशङ्कां परिहरन्नुत्तरश्लोकमवतार्य व्याचष्टे – **वधार्थमिति**[2] ॥

(भा) वधार्थं शत्रोरधिष्ठानमाह – इन्द्रियाणीति ॥

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥४०॥**

**(टी)** एतैर्विमोहयत्यन्येन ज्ञानमावृत्येति प्रतीतिर्मा भूदित्याह **एतैरिति** ॥

(भा) एतैर्ज्ञानमावृत्य ।

**(टी)** कथमेतैर्ज्ञानावरणमित्यत आह – **बुद्ध्यादिभिरिति** ॥४०॥

(भा) बुद्ध्यादिभिर्हि विषयगैर्ज्ञानमावृतं भवति ॥४०॥

**तस्मात् त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।**
**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥**

**(टी)** यत इन्द्रियाण्यधिष्ठानानि तस्य, अतस्तानि नियम्य, तं जहीतीन्द्रियनियमनस्य तद्वधहेतुत्वमुच्यते । तत्कथम्? इत्यत आह – **हृताधिष्ठानो हीति** ॥४१॥

(भा) हृताधिष्ठानो हि शत्रुर्नश्यति ॥४१॥

---

१. कामकः = कुत्सितः कामः । – प्र.दी.

२. 'इन्द्रियाणि' इत्यादिकमपृष्टं किमर्थमुच्यते? इत्यत आह – वधार्थमिति ॥ – प्र.दी.

**(टी)** प्रकटमप्युत्तरश्लोकप्रतिपाद्यमपव्याख्यातिरोहितं[1] प्रकाशयति – **शत्रुहनन इति** ॥

(भा) शत्रुहनन आयुधरूपं ज्ञानं वक्तुं ज्ञेयमाह – इन्द्रियाणीति ॥

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥४२॥**

**(टी)** इन्द्रियाद्यभिमानीन्द्रादितारतम्यपूर्वकपरमपुरुषहरिज्ञानं हि कामादिशत्रुनाशकम्[2] ।

ज्ञानस्यायुधरूपेण कामादिशत्रुनाशकत्वे प्रमाणमाह – **असङ्गेति** ॥

(भा) **'असङ्गज्ञानासिमादाय तराति पारम्'**[*] इति ह्युक्तम् ।

**(टी)** इन्द्रियाणि पराणि कस्मात्? इत्याशङ्कायामाह – **शरीरादिति** ॥

(भा) **शरीरादिन्द्रियाणि पराण्युत्कृष्टानि** ।

**(टी)** बुद्धेः सकाशात् परत्वज्ञानस्यैव संसारनिवृत्तिहेतुत्वोक्तेः, तावदेव भगवतः परत्वम्, न तु सर्वोत्तमत्वमिति शङ्का मा भूत् । अव्यक्तादपि परत्वश्रुतेरिति भावेनाह – **न केवलमिति** ॥

(भा) **न केवलं बुद्धेः परः । श्रुत्युक्तप्रकारेणाव्यक्तादपि** ।

**(टी)** का सा श्रुतिः? इत्यत आह – **अव्यक्तादिति** ॥

(भा) **'अव्यक्तात् पुरुषः परः'**[3] इति श्रुतिः ।

---

१. अपव्याख्यामुदाहृत्यानुपदमेव निराकरिष्यति टीकाकारः ।
२. न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ – इति **सहस्रनामाध्याये भारते**
३. कठोपनिषत् ३/११; * भागवते ५/१३/२०

**(टी)** ननु भवतु भगवतः सर्वोत्तमत्वम्। तथाऽपि मुक्तिरत्रोक्तपरिज्ञानमात्रेण किं न स्यात्? इत्याशङ्का मा भूदित्येतत् सप्रमाणकमाह – **न चेति ॥**

**(भा) न च तत्रतत्रोक्तैकदेशज्ञानमात्रेण भवति मुक्तिः। सार्वत्रिकगुणोपसंहारो हि भगवता गुणोपसंहारपादेऽभिहितः – 'आनन्दादयः प्रधानस्य'[१] इत्यादिना। तथा चान्यत्र –**

**'अपौरुषेयवेदेषु विष्णुवेदेषु चैव हि।**
**सर्वत्र ये गुणाः प्रोक्ताः सम्प्रदायागताश्च ये।**
**सर्वैस्तैः सह विज्ञाय ये पश्यन्ति परं हरिम्।**
**तेषामेव भवेन्मुक्तिर्नान्यथा तु कथञ्चन' इति गारुडे।**

**(टी)** अव्यक्तात् परत्वमप्यानन्दादिचतुष्टयान्तर्भूतमेव। न ह्यात्मशब्दोक्त-सर्वस्वामित्वमप्यव्यक्तादवरस्य सम्भवति[२]। **विष्णुवेदा** इतिहासपुराणाद्या-स्तत्कृताः[३]।

यतोऽन्यथा मुक्तिर्न, अतोऽव्यक्तादिपरत्वेन ज्ञेय इत्याह – **तस्मादिति ॥**

**(भा) तस्मादव्यक्तादपि परत्वेन ज्ञेयः।**

**(टी)** अपव्याख्यानं दूषयति – **न चेति ॥**

**(भा) न चात्र जीव उच्यते।**

---

१. ब्रह्मसूत्रम् ३/३/१२

२. ननु 'आनन्दादयः'(ब्र.सू. ३/३/१२) इति सूत्रेणाव्यक्तात् परत्वस्यापि भगवति ज्ञातव्यत्वं कथं प्रतीयते? इति चोद्यम् ''अव्यक्तात् परत्वमप्यानन्दादिचतुष्टयान्तर्भूतमेव। आत्मपदोक्तसर्वस्वामित्वस्याप्यव्यक्तादवरेऽसम्भवात्'' इति समाहितं प्राचीनटीकायाम्। **– भावरत्नकोशे**

३. 'विष्णुवेदेषु' इत्यत्र ''विष्णुकृता इतिहासपुराणपञ्चरात्राद्या विष्णुवेदाः'' इति प्राचीनटीका। **– भावरत्नकोशे**

**(टी)** तत्र तावन्मायी 'किमाश्रयः कामं जह्यादित्युच्यते' इति श्लोकमवतार्य सर्वदृश्येभ्यो[१] बुध्यन्तेभ्योऽभ्यन्तरो यं च देहिनं कामो मोहयतीत्युक्तं स बुद्धेः पर आत्मेति वर्णयति[२]। तदितरस्तु कस्य सन्निधौ कामस्तिष्ठतीति दर्शयितुमाहेत्यवतार्य बुद्धेः परतः स इति काममेव परामृश्यते तस्य प्रकृतत्वादिति[३]।

तदुभयं चानेन निरस्तं भवति । तथा हि । **नात्र बुद्धेः परत्वेन जीव उच्यते** । **चशब्दात् कामोऽपि नोच्यते** । तथा यो बुद्धेः परः परमात्मा सोऽत्र **जीवो नोच्यते** जीवत्वेन नोच्यत इत्यपि चशब्दात्[४]।

तदेतत् साधयति – **रसोऽपीति** ॥

**(भा) 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते'**[५] इत्युक्तत्वात् ।

**(टी)** परमात्मदर्शनादेव रसशब्दोक्तकामनिवृत्तेरुक्तत्वात् द्वितीयाध्याये, तत्पक्ष उक्तविरोध[६] इत्यर्थः ।

---

१. **यः सदृशेभ्यो** – पा

२. इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहीत्युक्तम् । तत्र किमाश्रयः कामं जह्यादित्युच्यते – इन्द्रियाणीति ॥ – **शाङ्करभाष्यम्**

३. कस्य सन्निधौ कामस्तिष्ठतीति साक्षाद्दर्शयितुमाह स्थूलं शरीरमपेक्ष्य – इन्द्रियाणीति ॥ – **भास्करभाष्यम्**

४. मायावादी तु यो बुद्धेः परतस्तु सः इत्यनेन जीव उच्यत इत्याह । तन्निराकरोति – न चेति । कुत इति चेत्, 'एवं बुद्धेः परम्' इत्येतज्ज्ञानस्य कामविनाशसाधनत्वोक्तेः, तस्याश्च भगवत्परिग्रहे घटनात्, अन्यथाऽघटनादिति भावेनोभयत्र प्रमाणमाह – रसोऽपीति ॥ न चात्रेत्युक्तमुपसंहरति – अत इति ॥ भास्करस्तु कामोऽत्रोच्यत इत्याह । तदतीव मन्दम् । 'कामः सङ्कल्पः' इत्यादिश्रुतेस्तस्य मनोधर्मस्य तत्परत्वानुपपत्तेः, पक्षद्वयेऽपि 'इन्द्रियाणि पराणि' इत्यादितारतम्योक्तेर्न प्रयोजनमस्तीति ॥ – **प्र.दी.**

५. गी. २/५९

६. **युक्तिविरोध** – पा

न च जीवज्ञानात् जीवेशाभेदज्ञानात् कामज्ञानाद्वा कामनिवृत्तौ प्रमाणमस्ति । प्रत्युत परमात्मज्ञानं विना नान्यत्साधनात् तन्निवृत्तिरित्यत्र प्रमाणमाह – **अविज्ञायेति** ॥

(भा) **'अविज्ञाय परं मत्तो जयः कामस्य वै कुतः' इति च ।**

**(टी)** यत एवमुक्तविरोधादिदूषणं जीवादिज्ञानात् कामनिवृत्तौ, अतः परमात्मज्ञानमेवात्र कामनिवर्तकं 'परं बुद्ध्वा' इत्यत्रोक्तमित्याह – **अत इति** ॥४२॥

(भा) अतः परमात्मज्ञानमेवात्र विवक्षितम् ॥४२॥

**एवं बुद्धेः परं[१] बुद्ध्वा संस्तभ्यात्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥४३॥**

**॥ इति श्रीमद्भगवद्गीतायां तृतीयोऽध्यायः ॥**

**(टी)** तत्रात्मशब्दयोर्जीवब्रह्मपरत्वेऽपि भेद एवार्थः । न हि स्तम्भनं नामैकीकरणम् । अतस्तयोरत्र विवक्षितमर्थमाह – **आत्मानमिति**[२] ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां तृतीयोऽध्यायः ॥

(भा) आत्मानं मनः । आत्मना बुद्ध्या ॥४३॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये तृतीयोऽध्यायः॥

---

१. बुद्धेः परम् आत्मानम् इति **शाङ्करभाष्यम्** ।
बुद्धेः परम् - कामम् इति **रामानुजभाष्यम्** ।

२. 'संस्तभ्यात्मानमात्मना' इत्यस्य जीवात्मानं परमात्मनैकीकृत्येति व्याख्यानं शब्दबाह्यमित्याशयवानात्मशब्दद्वयं व्याख्याति – आत्मानमिति ॥ **– प्र.दी.**

# चतुर्थोऽध्यायः

**(टी)** पूर्वाध्यायसङ्गतिं दर्शयन्नेव[1] तदध्यायप्रतिपाद्यमाह – बुद्धेरित्यादिना ॥

**(भा) बुद्धेः परस्य माहात्म्यं कर्मभेदो ज्ञानमाहात्म्यं चोच्यतेऽस्मिन्नध्याये ।**

**(टी)** प्रघट्टकभेदप्रदर्शनार्थमेतद्भाष्यम् । अन्यथाऽर्थभेदादध्यायभेदापत्तेः । अर्थैक्यं तूक्तज्ञानकर्मविशेषविस्तारात्मकत्वेन ज्ञातव्यम् । तथा ह्युत्तरप्रस्थाने[2] – 'उक्तयोर्ज्ञानकर्मणोः' इत्यादि । एतदर्थमेवात्र भगवन्महिमोच्यते । तथा हि मध्यमषट्काद्ये – 'साधनं प्राधान्येनोक्तमतीतैरध्यायैः' इति[3] ।

'योगे त्विमाम्'[4] इत्यादिनाऽध्यायद्वयेन योऽयं परमैकान्तधर्म उक्तः स पूर्वैः ब्रह्मादिभिरप्यनुष्ठितः । अतस्त्वयाऽप्यादरेणानुष्ठेय इति भावेनाद्यप्रघट्टकमवतारयति – **पूर्वेति** ॥

**(भा) पूर्वानुष्ठितश्चायं धर्म इत्याह – इममिति ॥१-३॥**

---

१. सूचयन्नेव – पा

२. उक्तयोर्ज्ञानकर्मणोरुभयोर्विशेषविस्तारात्मकोऽयमध्यायः । – **गीतातात्पर्यम्**

३. 'एवं ज्ञात्वा' इतिपर्यन्तं भगवन्महिमोच्यते । तदारभ्य 'श्रेयान्' इति कर्मभेदः । पश्चाज्ज्ञानमाहात्म्यम् । प्रघट्टकभेदप्रदर्शनार्थमेतत् । साक्षादर्थस्तु 'पूर्वोक्तयोर्ज्ञानकर्मणोर्विशेषविस्तारात्मकोऽयमध्यायः' इति । – **भावप्रदीपिका**

उक्तयोर्ज्ञानकर्मणोरुभयोर्विशेषविस्तरात्मकोऽयमध्याय इति पूर्वसङ्गताध्यायार्थस्थितौ, इह प्रकरणभेदप्रतिपादनार्थमाह – बुद्धेरिति ॥ 'एवं ज्ञात्वा' इत्यतः प्राक्तनेन ग्रन्थेन बुद्धेः परस्य विष्णोर्माहात्म्यमुच्यते । आद्यस्य प्रकरणस्य पूर्वेण सङ्गतिं सूचयितुं बुद्धेः परस्य इत्युक्तम् । 'श्रेयान्' इत्यतः पूर्वेण कर्मभेदः निवृत्तस्य कर्मणोऽन्यस्माद्भेदः निवृत्त एव कर्मण्युपासनायज्ञादिरूपेण वा भेदः । ज्ञानमाहात्म्यं शेषेणेति ॥ – **प्र.दी.**

४. गी. २/३९

**श्रीभगवानुवाच –**

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥१॥**

**एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परन्तप ॥२॥**

**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।**
**भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥३॥**

**(टी)** तथा हि मोक्षधर्मे –

'नूनमेकान्तधर्मोऽयं श्रेष्ठो [१]नारायणप्रियः'[२] ।
'केनैष धर्मः कथितो देवेन ऋषिणाऽपि वा'[३] ।
वैशम्पायनः –
'समुपद्येष्वनीकेषु कुरुपाण्डवयोर्मृधे[४] ।
अर्जुने विमनस्के वै[५] गीता भगवतोदिता'[६] ।
'एतमर्थं[७] महाराज पृष्टः पार्थेन नारदः'[८] ।
'यथाऽनुकथितस्तत्र नारदेन तथा श्रुणु ।'[९]
इत्यारभ्य,

'यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप ।
तत्रैष धर्मः कथितः स्वयं नारायणेन ह ।

---

१. नारायणः प्रियः – पा
२. भारते शान्ति ३४८/४
३. च – पा; भारते शान्ति ३४८/६
४. -र्युधे – पा
५. च – पा
६. भारते शान्ति ३४८/८
७. एतदर्थं – पा
८. भारते शान्ति ३४८/११
९. भारते शान्ति ३४८/१२

पितामहाय शुद्धाय युगादौ लोकधारिणे ॥
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ।
ततो ज्येष्ठे च दौहित्रे प्रादाद्दक्षो नृपोत्तम ॥
आदित्ये सवितुर्ज्येष्ठे विवस्वान् जगृहे ततः ।
त्रेतायुगादौ च ततो विवस्वान् मनवे ददौ ॥
मनुश्च [१]लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ।
इक्ष्वाकुणा तु कथितो प्राप्य लोकानवस्थितः ॥
गमिष्यति क्षयान्ते च पुनर्नारायणं नृप ।'[२]
'एवमेष महाधर्म आद्यो राजन् सनातनः ॥
दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ।
धर्मज्ञानेन चैतेन सुप्रयुक्तेन कर्मणा ॥
अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥'[३] इति ।

दक्षस्य दुहितरो बह्व्य इत्यादित्य इत्यदितिश्रुतेः । अदितिश्रुतावपि[४] बह्व इति । सवितुर्ज्येष्ठ इति । स च विवस्वान् ततो दक्षात् जगृहे । एवं च दक्षस्थोऽहं विवस्वते प्रोक्तवानित्यविरोधः । इक्ष्वाकुणा कथितो व्याप्यावस्थित एव किञ्चित्[५] कालं नष्टः । अनन्तरं चशब्दात् कृष्णाभ्यां पाण्डवाभ्यां कथितो लोकान् व्याप्य स्थित्वाऽन्ते नारायणं गमिष्यति[६] ॥१-३॥

---

१. लोके भूत्यर्थं – पा
२. भारते शान्ति ३४८/४८-५२
३. भारते शान्ति ३४८/५५-५६
४. अदितिश्रुता अपि – पा
५. कश्चित् – पा
६. अत्रायं विवेको नरहरितीर्थश्रीमच्चरणैर्विभावितः । तथा हि मोक्षधर्मे –

नूनमेकान्तधर्मोऽयं श्रेयान् नारायणप्रियः ।
केनैष धर्मः कथितो देवेन ऋषिणाऽपि वा ।

**अर्जुन उवाच –**

**अपरं भवतो जन्म परं जन्म विवस्वतः ।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥४॥**

---

वैशम्पायनः –
समुपद्येष्वनीकेषु कुरुपाण्डवयोर्युधे ।
अर्जुने विमनस्के वै गीता भगवतोदिता ।
एतमर्थं महाराज पृष्टः पार्थेन नारदः ।
यथानुकथितस्तत्र नारदेन तथा श्रुणु ।

इत्यारभ्य

यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप ।
तत्रैष धर्मः कथितः स्वयं नारायणेन ह ।
पितामहाय शुद्धाय युगादौ लोकधारिणे ॥
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ।
ततो ज्येष्ठे च दौहित्रे प्रादाद्दक्षो नृपोत्तम ॥
आदित्ये सवितुर्ज्येष्ठे विवस्वान् जगृहे ततः ।
त्रेतायुगादौ च ततो विवस्वान् मनवे ददौ ॥
मनुश्च लोकभूत्यर्थे सुतायेक्ष्वाकवे ददौ ।
इक्ष्वाकुणा तु कथितो प्राप्य लोकानवस्थितः ॥
गमिष्यति क्षयान्ते च पुनर्नारायणं नृप ।
एवमेष महाधर्म आद्यो राजन् सनातनः ॥
दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ।
धर्मज्ञानेन चैतेन सुप्रयुक्तेन कर्मणा ॥
अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥ इति ।

दक्षस्य दुहितरो बह्व्च इत्यादित्य इति अदितिश्रुतेः । अदितिश्रुतावपि बह्व इति सवितुर्ज्येष्ठ इति । स च विवस्वान् ततो दक्षात् जगृहे । एवं च दक्षस्थोऽहं विवस्वते प्रोक्तवानित्यविरोधः । इक्ष्वाकुणा कथितो व्याप्यावस्थितत्वात् कालं नष्टः । अनन्तरं चशब्दात् कृष्णाभ्यां पाण्डवाभ्यां कथितो लोकान् व्याप्य स्थिते नारायणं गमिष्यतीति मोक्षधर्मे गतानुपूर्वी नोपनिबद्धा । किन्तूपयुक्तो भागो गृहीत इति न क्षुद्रोपद्रवः ।

**– भावरत्नकोशे**

**(टी)** भगवतोऽप्यनित्यदेहित्वबुद्ध्याऽर्जुनः पृच्छतीति शङ्कानिवृत्तये तत्प्रश्नतात्पर्यमाह – **मयीति** ॥

**(भा)** 'मयि सर्वाणि'[१] **इत्युक्तं तन्माहात्म्यमादितो ज्ञातुं पृच्छति – अपरमिति** ॥४॥

**(टी)** 'मयि सर्वाणि कर्माणि' इति सर्वकर्तृत्वम्, 'अध्यात्मचेतसा' इति सर्वपरमत्वं चोक्तमित्यर्थः ॥४॥

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥५॥**

यदि जातिस्मरणवत्[२] जन्मान्तरानुभूतस्मृतिमात्रेणोत्तरं भगवतः, तर्ह्यनादित्वं न स्यादिति भावेनाशङ्क्य, एतत्परिहाराय तदुत्तरं श्लोकमवतार्य व्याचष्टे – **न तर्हीति** ॥

**(भा)** न तर्ह्यनादिर्भवानित्यत आह – अजोऽपीति ॥

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥६॥**

**(टी)** नन्वात्मस्वरूपाजत्वं जीवानामप्यस्ति, अतः को विशेषः सर्वेशस्य? इत्याशङ्क्य, परिहारायोत्तरं पदं व्याचष्टे – **अव्यय आत्मेति** ॥

**(भा)** **अव्यय आत्मा देहोऽपीत्यव्ययात्मा ।**

**(टी)** ननु देहस्याविनश्वरत्वमनुमानविरुद्धम् । अतः कथं भगवत्सम्मतं स्यात्? इत्यत आह – **अनन्तमिति** ॥

---

१. गी. ३/३०

२. जातिस्मरवत् – पा

(भा) **'अनन्तं विश्वतोमुखम्'**[१] **इति हि रूपविशेषणमुत्तरत्र ।**

**(टी)** भगवतैव भगवद्रूपस्यानन्तत्वेन विशेष्यमाणत्वात् न तस्याव्ययत्वं भगवदसम्मतम् । न च देहित्वाद्विनाशित्वम् । किन्त्वनन्तत्वेनानुक्तत्वादेवेति भावः [२]।

भागवतेऽपि भगवतैव भगवद्रूपस्याप्यव्ययत्वेनैव विशेषितत्वाच्च न तस्याप्यव्ययत्वं भगवदसम्मतमित्याह – **एतदिति** ॥

(भा) **'एतन्नानावताराणां निधानं बीजमव्ययम्'**[३] **इति च ।**

**(टी)** ननु तत्रैव 'पौरुषं रूपम्'[४] इति तस्य[५] ग्रहणोक्तेर्ग्रहणं च त्याग-शिरस्कमेव । अतः कथमव्ययता तस्य? इत्यत आह – **जगृह इतीति**[६] ॥

(भा) **'जगृहे' इति तु व्यक्तिः ।**

**(टी)** व्यक्तिरेव नोत्पत्तिरित्यत्र का युक्तिः? इत्यत आह – **युक्तय-स्त्विति** ॥

(भा) **युक्तयस्तूक्ताः ।**

---

१. गी. ११/११

२. प्राचीनटीकायां तु – ''भगवद्विग्रहो विनश्वरः विग्रहत्वात् देवदत्तदेहवत्' इत्यनुमानविरुद्धं देहस्यानन्तत्वमित्याशङ्क्योक्तम् – अनन्तमिति । भगवतैव भगवद्विग्रहस्यानन्तत्वेन विशेष्यमाणत्वात् न तस्याव्ययत्वं भगवदसम्मतम् । अनुमानं तु अनन्तत्वेनानुक्तत्व-रूपोपाधिदूषितमिति भावः '' इति व्याख्यातम् । – **भावरत्नकोशे**

३. **भागवते १/३/५**

४. **भागवते १/३/१**

५. क्वचित् 'तस्य' इति नास्ति ।

६. एवं तर्हि कथं तत्रैव 'जगृहे पौरुषं रूपम्' इति रूपग्रहणमुच्यते? गृहीतस्य च त्यागो नियत एवेत्यत आह – जगृह इति ॥ – **प्र.दी.**

**(टी)** द्वितीयाध्यायान्ते विस्तारेणोक्तत्वात् नेह प्रपञ्च्यत इति भावः ।

अन्ये तु[1] भगवत्यप्यात्मन एवानादित्वं वर्णयन्ति । न तु तद्देहस्य । तद्दूषयति – **आत्मेति** ॥

**(भा) आत्मानादित्वं तु सर्वसमम् ।**

**(टी)** तत्पक्षे जीवेभ्यो विशेषो न स्यादीश्वरस्येति भावः ।

अत्र केचित् – वश्यप्रकृतित्वात् देहोपादानसन्न्यासावीशस्य स्वेच्छयैवेति जीवेभ्यो विशेषं वर्णयन्ति । तदयुक्तम् । अनुपचरितस्वतन्त्रो हि वश्यप्रकृतिः । न चासौ जडानित्यदेहानिच्छति, [2]अनाद्यनन्तापरिमिततज्ज्ञानानन्दादिसान्द्रदेहं विना । देहस्येच्छया देहसृष्ट्याद्यपि चिन्त्यम् । 'अनन्तं विश्वतोमुखम्' इत्याद्यनन्तवेदेतिहासादिविरोधश्च तत्पक्षे ।

भवत्वेवमनादिनित्यत्वं तद्देहस्यापि । तथाविधस्य कीदृशी जनिः? इति भावेनाशङ्क्य, तदुत्तरत्वेनोत्तरार्धं व्याचष्टे – **कथमिति** ॥

**(भा) कथमनादिनित्यस्य जनिः? प्रकृतिं स्वामधिष्ठाय । प्रकृत्या जातेषु वसुदेवादिषु । तथैव तेषां जात इव प्रतीयत इत्यर्थः ।**

**(टी)** प्राकृतदेहवतामेव जात इव प्रतीयत इति व्याख्यायाः 'भ्रमतां भ्रमति क्षितिः' इत्यादिवत् 'सम्भवामि' इत्युक्तेऽपि न विरोध इत्युक्तं भवति[3] ।

---

१. अविनश्वर आत्मा स्वरूपं यस्यासावव्ययात्मा । – **भास्करभाष्यम्**

२. अनाद्यनन्तापरिमितज्ञान० – पा

३. 'भ्रमतां भ्रमति क्षितिः' इति न्यायात् स्वयं प्रकृत्या जातत्वात् भगवन्तमपि प्राकृतं पश्यतीत्यर्थः । – **भावप्रदीपिका**

भ्रमतां भ्रमति क्षितिरितिवत् सम्भूतोऽयमिति जनानां भ्रमविषयो भवामीत्यर्थः । – **श्रीविद्याधिराजतीर्थाः**

न चैवं वसुदेवादीनामिव भगवतोऽपि देहकर्ता, तदधीनत्वादिति भावेन विशेषणमवतारयति – **न त्विति** ॥

**(भा) न तु स्वतन्त्रामधिष्ठायेत्याह – स्वामिति** ॥

**(टी)** ननु वशीकृताशेषचेतनायाः प्रकृतेर्भगवद्वशत्वे किं मानम्? इत्यत आह – **द्रव्यमिति** ॥

**(भा) 'द्रव्यं कर्म च' इति ह्युक्तम् ।**

**(टी)** ननु द्रव्यादेर्भगवद्वशत्वप्रतिपादकवाक्यं प्रकृतेर्भगवद्वशत्वे कथमुदाहृतम्? इत्यत आह –**सा हीति** ॥

**(भा) सा हि तत्रोक्ता ।**

**(टी)** प्रकृतिर्हि तत्रोक्ता 'द्रव्य'शब्देनेत्यर्थः ।

ननु पृथिव्यादिकमेव द्रव्यपदोक्तं किं न स्यात्? इत्यत आह – **तत इति** ॥

**(भा) ततः सर्वसृष्टेः ।**

**(टी)** सर्वस्रष्टॄणां भगवद्वशत्वप्रतिपादकं ह्येतद्वाक्यम् । न हि पृथिव्यादिभिः महदादिसृष्टिरिति भावः ।

ननु प्रकृत्या जातानां भगवति जातवत् बुद्धिश्चेत् ब्रह्मादीनामपि सा किं न स्यात्? इत्याशङ्क्य परिहारत्वेनान्त्यपदं व्याचष्टे – **आत्मेति**[1] ॥

---

१. यथा वसुदेवादयो विद्यमानजननीं तव पश्यन्ति तथा सा तवापि भ्रमोत्पादिका न वा? इति शङ्कायामाह – आत्मेति ॥ – **भावप्रदीपिका**

आत्ममायया आत्माविद्ययेति प्रतीतिनिरासायाह – आत्मेति ॥ – **प्र.दी.**

(भा) आत्ममायया आत्मज्ञानेन ।

(टी) भगवज्ज्ञानेनेति भगवदिच्छयैव केचिज्ज्ञातवत् पश्यन्ति भगवन्तमित्यर्थः ।

'....... .................. .. मायया ।
लक्ष्म्या वशगया लोको विष्णुनैव विमोहितः'

इति ह्यन्यत्र[१] । [२]आत्मचिद्बलान्मूढचेतसामित्यत्रापि वक्ष्यति ।

न चायं मायाशब्दः प्रकृतावित्याह[३] – प्रकृतेरिति ॥

(भा) प्रकृतेः पृथगभिधानात् ।

(टी) तस्य ज्ञानवाचित्वे प्रमाणमाह – केतुरिति ॥

(भा) 'केतुः केतश्चितिश्चित्तं मतिः क्रतुर्मनीषा माया' इति ह्यभिधानम् ।

(टी) भवतु चायं मायाशब्दः प्रकृतावपि । तथाऽपि नार्थपुनरुक्तिरित्येतत् सप्रमाणमकमाह – सृष्टीति ॥

(भा) सृष्टिकारणया तेषां शरीरादि सृष्ट्वा विमोहिकयाऽजात एव जात इव प्रतीयते वा । उक्तं च –

'महदादेस्तु माता या श्रीर्भूमिरिति कल्पिता ।
विमोहिका च दुर्गाख्या ताभिर्विष्णुरजोऽपि हि ।
जातवत् प्रथते ह्यात्मचिद्बलान्मूढचेतसाम् ॥' इति ।

---

१. गीतातात्पर्योदाहृतप्रमाणवचनम् ७/१३

२. आत्मविद्बला० – पा

३. मायां तु प्रकृतिं विद्यात् – इति श्वेताश्वतरोपनिषदि ४/१०

**(टी)** [१]आत्मचिद्बलादित्येतत् मायाशब्दस्याद्यव्याख्याने प्रमाणम् ।

ईशनशीलानामपि रमाविधिहरादीनां पराधीनविशेषास्त्यादिजननादिदर्शनात्, नायमीश्वरशब्द ईशनशीलवाची, किन्त्वीशवाचीत्येतत् सप्रमाणकमाह[२] – ईश्वर इत्यादिना[३] ॥

(भा) ईश्वरः ईशेभ्योऽपि वरः । तच्चोक्तम् –

'ईशेभ्यो ब्रह्मरुद्रश्रीशेषादिभ्यो यतो भवान् ।
वरोऽत ईश्वराख्या ते मुख्या नान्यस्य कस्यचित् ॥' इति ब्रह्मवैवर्ते ।
'समर्थ ईश इत्युक्तस्तद्वरत्वात् त्वमीश्वरः' इति च ॥६॥

**(टी)** अकारलोपश्छान्दसः[४] ॥६॥

उत्तरश्लोकद्वयस्य पूर्वसङ्गतेः व्याख्यानस्य सुगमत्वात् तदुद्भवाशङ्कामेवापाकरोति – न जन्मनेत्यादिना ॥

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥७॥**

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥८॥**

(भा) न जन्मनैव[५] परित्राणादिकं कार्यमिति नियमः । तथाऽपि लीलया स्वभावेन च यथेष्टचारी ।

---

१. आत्मविद्बला० – पा २. ईशवाचीत्यत्र प्रमाणमाह – पा

३. नन्वीशनशीलानामपि ब्रह्मादीनामुत्पत्तिमरणदर्शनेन विरोधाभावात् 'ईश्वरोऽपि सम्भवामि' इति कथमुच्यते? इत्यत आह 'स्थेशभासपिसकसो वरच्' इत्येतद्विहायान्यथा व्याचष्टे – ईश्वर इति ॥ – प्र.दी.

४. एतदागमबलादेव समासाकारलोपावनुमन्तव्यौ । – प्र.दी.

५. 'न च जन्मनैव' इति भावप्रदीपिकापाठः ।

**(टी)** साधुपरित्राणादिप्रयोजनाय 'सम्भवामि' इति वदन्नपि, सम्भवं विना परित्राणादि कर्तुं न शक्नोतीति नाशङ्कनीयम् । अनन्तवीर्यत्वात् । तथाऽपि इच्छयैव जन्मानुकुर्वन् स्वावतारादि करोति । न चान्यथापि कर्तुं समर्थस्य किं जन्मानुकरणादिक्लेशेनेति वाच्यम् । लीलयैव तदनुकरणात् । न चेतरवदालस्यादिपरिहाराय भगवतो जन्माद्यनुकरणलीलेति वाच्यम् । तस्यालस्यादिदोषाभावात् । अतः स्वभावादेव लीलया यथावशं चरतीत्यर्थः[1] ।

अस्मिन्नेवार्थे प्रमाणमाह – **तथा हीति** ॥

**(भा)** तथा ह्युक्तम् – 'देवस्यैष स्वभावोऽयम्'[2], 'लोकवत् तु लीलाकैवल्यम्'[3], 'क्रीडतो बालकस्येव चेष्टां तस्य निशामय',

'अरिभयादिव स्वयं पुराद्व्यवात्सीद्यदनन्तवीर्यः ।'[4]
'पूर्णोऽयमस्यात्र न किञ्चिदाप्यं तथाऽपि सर्वाः कुरुते प्रवृत्तीः ।
अतो विरुद्धेषुमिमं वदन्ति परावरज्ञा मुनयः प्रशान्ताः'

– इत्यादिऋग्वेदखिलेषु ॥८॥

**(टी)** एतादृशी हि [5]बालवच्चेष्टा याऽरिभयादिव पुराद्विवासाद्या । न चारिभयं तस्यानन्तवीर्यत्वात् । पूर्णकामोऽयं देवः । अत एवास्य न किञ्चिदाप्यमस्ति । आसाद्यमिष्टमपनोद्यमनिष्टं च नास्तीत्यर्थः । तथाऽपीष्टानिष्टप्राप्तिपरिहारार्थाः प्रवृत्तीः[6] करोति । अत इमं विरुद्धेच्छं वदन्ति । अतोऽयं देवस्य स्वभावः, योऽयम् आ समन्तादिच्छया[7] जगत

---

१. यथेष्टचारीच्छयैव तथा चरति । तथेच्छैव किमर्था? इत्यत उक्तम् – लीलयेति ॥ लीलाऽप्यालस्यपरिहाराद्यर्था न भवतीत्युक्तम् – स्वभावेन चेति ॥ – प्र.दी.

२. माण्डूक्योपनिषत् १/१/१५ ३. ब्रह्मसूत्रम् २/१/३४

४. भागवते ३/२/१६ ४. भगवच्चे –पा.

६. -परिहारार्थां प्रवृत्तिं – पा

७. एषः स्वभावः । आ समन्तादिष्टः स्वभावः । – तत्त्वप्रदीपे (२/१/३४)

उत्पत्त्यादिप्रणयनव्यापारः[१] । स एव च तल्लीलाकेवलभावः । स चान्येषां सुखदुःखमध्यसम्प्राप्त्यै भवतीत्यनवद्यम्[२] ॥८॥

**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥९॥**

**(टी)** ननूक्तलक्षणजन्मकर्मज्ञानमात्रेण मुक्तिश्चेत् 'नान्यः पन्था अयनाय विद्यते'[३] इत्यादिश्रुतिविरोध इत्यत आह – **पृथगिति** ॥

**(भा) पृथङ्मुक्त्युक्तिः सर्वज्ञाननियमदर्शनार्थम् । न तु तावन्मात्रेण मुक्तिरित्युक्तम् ।**

**(टी)** एतदपि ज्ञात्वैव मुक्तिरित्येवार्थो, नत्वेतदेव ज्ञात्वेत्युक्तं गताध्याये[४] ।

इतोऽपि [५]नैकदेशज्ञानमात्रेण मुक्तिः । किन्तु सर्ववेदाद्युक्तपरमात्मस्वरूपं ज्ञात्वा, उपास्य, दृष्ट्वैवेति भावेन प्रमाणमाह – **वेदादिति** ॥

**(भा) 'वेदाद्युक्तं तु सर्वं यो ज्ञात्वोपास्ते सदा हि माम् ।**
**तस्यैव दर्शनपथं यामि नान्यस्य कस्यचित् ॥'**

**– इत्युक्तेश्च महाकौर्मे ।**

---

१. इतरपदार्थः प्राचीनटीकातः अवधेयः । **– भावरत्नकोशे**

अयमेषः इयमिच्छा । अत्र – प्रवृत्तिषु । विरुद्धेषुम् – लोकविपरीतेच्छम् । **– प्र.दी.**

२. स्रक्ष्ये हि चेतनगणान् सुखदुःखमध्यसम्प्राप्तये तनुभृतां विहृतिं ममेच्छन् ।
सोऽयं विहार इह मे तनुभृत्स्वभावसम्भूतये भवति भूतिकृदेव भूत्याः ॥

**–म.भा.ता.नि. १/५**

३. तैत्तिरीयारण्यके ३/१/३

४. ३/४२

५. नैकैक० – पा

**(टी)** ननूभयोरपि प्रामाण्याविशेषात्, 'जन्म कर्म च' इत्यस्यानुसारेणान्येषां गतिः किं न स्यात्? इत्यत आह – **अत्रोक्तस्येति ॥**

**(भा) अत्रोक्तस्यैतज्ज्ञात्वैव जन्म नैतीति गतिः, इतरवाक्यानां नान्या गतिः । 'नान्यस्य कस्यचित्' इति विशेषणात् ।**

**(टी)** इतोऽपि नैकदेशज्ञानमात्रेण मुच्यत इत्याह – **तत्त्वत इति ॥**

**(भा) 'तत्त्वतः' इति विशेषणाच्च सर्वज्ञानमापतति ।**

**(टी)** यत्रयत्रैकदेशज्ञाने मुक्तिरुच्यते तत्रतत्र तत्त्वत इति विशेषणे सति न विरोध इत्याह – **यत्रैवमिति ॥**

**(भा) यत्रैवं भवति तत्र तत्त्वत इति विशेषणे न विरोधः ।**

**(टी)** तत्त्वत इति विशेषणे सर्वज्ञानं कथमापतति? इत्यत आह – **उक्तं चेति ॥९॥**

**(भा) उक्तं च –**

**'एकं च तत्त्वतो ज्ञातुं विना सर्वज्ञतां नरः ।**
**न समर्थो महेन्द्रोऽपि तस्मात् सर्वत्र जिज्ञसेत्' इति स्कान्दे ॥९॥**

**(टी)** तत्त्वतो भगवज्जन्म कर्म च ज्ञात्वा बहवो मुक्ताः । अतोऽस्मिन्नादरः साधने कर्तव्य इति भावेनोत्तरं श्लोकमवतार्य व्याचष्टे – **सन्ति चेति ॥**

**(भा) सन्ति च तथा मुक्ता इत्याह** – वीतरागेति ॥

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥१०॥**

**(भा)** मन्मयाः मत्प्रचुराः । सर्वत्र मां विना न किञ्चित् पश्यन्तीत्यर्थः ॥

**(टी)** सर्वेषु पदार्थेषु स्थितं हरिं विनाऽन्यं न पश्यन्तीत्यर्थः ॥१०॥

येषामेतादृशज्ञानं नास्ति, किन्तु सामान्यतः सर्वदेवोत्तमो विष्णुरिति ज्ञात्वा, अन्यदेवानपीष्ट्वा, अन्ते विष्णौ समर्पयन्ति तेषां[1] का गतिः? इत्याकाङ्क्षोत्तरत्वेन उत्तरश्लोकार्धमवतार्य व्याचष्टे – **न चेति** ॥

**(भा) न च मद्भजनमात्रेण मुक्तिर्भवत्यन्यदेवतादिरूपेण । तथाऽपि सर्वेषामानुरूप्येण फलं ददामीत्याह – ये यथेति ॥**

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।**

**(टी)** एवंविधाधिकारिभिरन्यदेवताद्युद्दिष्टमपि हविर्भगवान् भुङ्क्ते इत्येतदेवान्यदेवतादिरूपेण तद्भजनम्[2] ।

न च सेवकस्य गुणभावदर्शनादस्यापि स स्यादित्याशङ्कनीयम् । सर्वप्रमाणविरोधात् इति भावेनाह – **सेवयामीति** ॥

**(भा) सेवयामि फलदानेन । न तु गुणभावेन ।**

**(टी)** अन्यदेवतायाजिनामपि भगवानेव फलद इत्ययं विशेषः कथम्? इत्याकाङ्क्षोत्तरत्वेन उत्तरश्लोकमवतार्य व्याचष्टे – **कथमिति** ॥

(भा) कथमयं विशेष इत्यत आह – मम वर्त्मेति ॥

**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥११॥**

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।**

---

१. अन्यदैवतपूजाऽपि यस्मिन्नन्ते समर्पिता ।
स्वर्गादिफलहेतुः स्यान्नान्यथा तं भजेद्धरिम् ॥ इत्याग्नेये । – **गीतातात्पर्ये**

२. विष्णुं सामान्यतः सर्वोत्तमं ज्ञात्वा, अन्यदेवताः पितॄंश्चेष्ट्वा अन्ते विष्णौ समर्पणमन्यदेवतादिरूपेण भगवद्भजनम् । – **प्र.दी.**

(भा) अन्यदेवता यजन्तोऽपि मम वर्त्मैवानुवर्तन्ते । सर्वकर्मकर्तृत्वाद्भोक्तृत्वाच्च मम ।

**(टी)** अन्यदेवता यजन्तोऽपि हि द्विविधा[१] भगवन्मार्गमनुवर्तन्ते । बिम्बभूतस्य भगवतः सर्वकर्मकर्तृत्वात् तदनुकुर्वन्तः तत्प्रतिबिम्बरूपिणोऽन्यदेवतायाजिनः तद्वर्त्मैवानुवर्तन्ते, तेषामेव कर्मणां सिद्धिमुत्पत्तिं काङ्क्षन्तः । तथा भगवत एव [२]सर्वदेवताहविर्भोक्तृत्वादन्यदेवतोद्देशेन हविस्त्यजन्तोऽपि तद्वर्त्मैवानुवर्तन्त इति भावः[३] ।

ननु [४]देवतान्तरोद्दिष्टहविषां भगवानेव भोक्तेत्येतत् कथं भगवत्सम्मतं स्यात्? इत्यत आह – **येऽपीति** ॥

(भा) 'येऽप्यन्यदेवताभक्ताः'[५] इति हि वक्ष्यति ।

**(टी)** नन्विन्द्रादिनामभिरुद्दिश्यत्यक्तानां भगवत्प्रोक्तौ कथं मन्त्रप्रामाण्यम्? इत्यत आह – **यो देवानामिति**[६] ॥

---

१. द्विधा – पा  २. सर्वदेवतोद्दिष्टहवि० – पा

३. अनन्यदेवतायागात् भक्त्युद्रेकादकामनात् ।
सदा योगाच्च वैशिष्ट्यं त्रैविद्यात् वैष्णवादपि ।
स्याद्धि भागवतस्यैव तेन ब्रह्मादयोऽखिलाः ।
अश्वमेधादिभिर्यज्ञैरपि केशवयाजिनः ।
वैष्णवा इति बुद्ध्यैव मानयन्त्यन्यदेवताः । – इत्याग्नेये – **गीतातात्पर्ये** ९/२०

इदमुक्तं भवति । अहमेव सर्वयज्ञानां भोक्ता च प्रेरकश्च । तदेतज्ज्ञात्वा भागवता निष्कामा मामेव यजन्ते । त्रैविद्यास्त्वेतत् तत्त्वतोऽजानाः कर्मणां सिद्धिं काङ्क्षन्तोऽन्यदेवता यजन्ते । – **प्र.दी.**

४. देवतोद्दिष्ट० – पा

५. गी. ९/२३

६. नन्विन्द्रादिनामभिः प्रदत्ताहुतिभोक्ता हरिश्चेत् मन्त्राप्रामाण्यमित्यत आह – य इति ॥
– **भावप्रदीपिका**

(भा) 'यो देवानां नामधा एक एव'[१] इति श्रुतिः ।

**(टी)** स च [२]सर्वदेवतानामवाच्यः कः? इत्याकाङ्क्षायां लिङ्गबलात् पद्मनाभ एवेत्याह – **भगवानिति** ॥११॥

(भा) भगवानेव च तत्राभिधीयते । 'अजस्य नाभावध्येकमर्पितम्'[३] इति लिङ्गात् ॥११॥

**(टी)** नन्वस्तु [४]सर्वदेवतानामवाच्यत्वं विष्णोः, तथाऽपि भागवतकर्तृकेष्वेव यागेषु [५]सर्वदेवतानामभिः भगवानीड्यः स्यात् । त्रैविद्यकर्तृकेष्विन्द्रादय एव किं न स्युः? इति भावेनाशङ्क्य, तदुत्तरत्वेनोत्तरमवतार्य व्याचष्टे – **कुत इति** ॥

(भा) कुतो मम वर्त्मानुवर्तन्ते? क्षिप्रं हि ।

**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥१२॥**

(भा) अत एव हि फलप्राप्तिः ।

**(टी)** न हि देवतादिवन्मनुष्यजनिश्चिरकालेन फलं साधयति । यदि कस्मिंश्चिद्यागे[६] न गृह्णीयाद्धविर्भगवान् तर्हि तस्य फलं न स्यात् । न हि भगवद्भजनं विना फलमिति भावः ।

ननु वीणागानादिवद्यागादितुष्टा इन्द्रादय एव फलदाः स्युः, किं तत्र भगवता? इत्यत आह – **तस्मादिति** ॥

(भा) 'तस्मात् ते धनसनयः'[७] इति हि श्रुतिः ॥१२॥

---

१. ऋग्वेदे ८/३/१७-६
२. सर्वदेवतावाच्य० – पा
३. ऋग्वेदे ८/३/१७
४. सर्वदेवतावाच्यत्वं- पा
५. सर्वदेवताभिः – पा
६. -त्स्थाने – पा
७. छान्दोग्योपनिषत् १/३/९

**(टी)** वीणायामपि राजाद्यक्षिस्थं[1] हरिमेव गायन्ति[2] । अत एव ततो धनं लभन्ते नान्यथा । तद्वदिन्द्रादिनामभिरिष्टाद्भगवत एव यथायोग्यं फलं लभन्ते, त्रैविद्या भागवताश्चेति भावः [3]॥१२॥

न चाश्चर्यं भगवतः सर्वकर्तृत्वं सर्वयज्ञभोक्तृत्वम्, तत एव हेतोः सर्वकर्मफलदत्वं च । यतः स एव सर्वकर्मिणां[4] स्रष्टेति भावेनोत्तरश्लोकमवतार्य व्याचष्टे – **अहमेवेति** ॥

**(भा) अहमेव हि कर्तेत्याह** – चातुर्वर्ण्यमिति ॥

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥१३॥**

**(भा) चतुर्वर्णसमुदायः ।**

**(टी)** समुदायसमुदायिनोरत्यन्तभेदाभावात् चतुर्वर्णसमुदायः 'चातुवर्ण्यम्' इति विवरणं युज्यते । न च समुदायस्यावस्तुत्वं [5]पटस्याप्यवस्तुत्वापत्तेरिति भावः[6] ।

---

१. **राजाद्यन्तःस्थं** - इति भावरत्नकोशपाठः ।

२. 'तद्य इमे वीणायां गायन्ति । एतं ते गायन्ति' – **छान्दोग्योपनिषत् १/७/६**

३. धनेति ॥ धनस्य सनिर्येषामिति व्यधिकरणो बहुव्रीहिः । यद्वा, षण सम्भक्तौ इत्यस्य भावे रूपं सन इति । ततो मत्वर्थीय इकारस्तद्धितः । विचित्रा हि तद्धितगतिः । धनशब्दस्य प्रत्यक्षोपलब्धफलमात्रलक्षणार्थ इति भावः । तथा च प्राचीनटीका ''वन्दि-गानादितुष्टाद्राजादेर्यथा वन्दी धनं लभते, तथा यागादितुष्टादिन्द्रादेरेव यजमानः फलं लभताम् । किं भगवतेत्याशङ्क्याह – तस्मादिति ॥ वीणायामपि राजाद्यन्तस्थं हरिमेव गायन्ति । अत एव ततो धनं लभन्ते, नान्यथा । तद्वत् इन्द्रादिनामभिरिष्टाद्भगवत एव फलं लभन्ते'' इति ॥ – **भावरत्नकोशे**

धनसनयः धनलाभवन्तः । – **प्र.दी.**

४. **सर्वकर्मणां** – पा ५. **एकस्याप्य०** – पा

६. प्राचीनटीकायां तु समुदायसमुदायिनोरत्यन्तभेदाभावात् 'चतुर्वर्णा एव चातुर्वर्ण्यम्' इति

तत्र तावत् सत्त्वादिगुणत्रयविभागेन चतुर्वर्णोत्पत्तिं दर्शयति – **सात्त्विक इत्यादिना ॥**

**(भा) सात्त्विको ब्राह्मणः । सात्त्विकराजसः क्षत्रियः । राजसतामसो वैश्यः । तामसः शूद्र इति गुणविभागः ।**

**(टी)** [1]निर्देशप्राथम्याद्रजोगुणादपि सत्त्वमधिकं क्षत्रिये । तत एव हेतोर्वैश्ये रजोऽधिकं तमसः । रजसस्तमोऽधिकमित्येव तामसः शूद्र उच्यते । न तु सत्त्वादपीति भावः[2] ।

कर्मविभागस्योपरि भगवतैव वक्ष्यमाणत्वात् न सोऽस्माभिरत्र कथित इति भावेनाह – **कर्मेति ॥**

**(भा) कर्मविभागस्तु 'शमो दमः'[3] इत्यादिना वक्ष्यते ।**

**(टी)** अत्र केचित् 'अकर्तारम्' इति पदभ्रान्ताः सर्ववेदाद्युक्तं भगवत्सर्वकर्तृत्वं मिथ्येति वर्णयन्ति[4] । तत्पक्षे वेदादिविरोधं सूचयन्नेव

---

स्वार्थिकष्यञ्प्रत्यय एव 'चतुर्वर्णसमुदायश्चातुर्वर्ण्यम्' इति विवृत इत्युक्तम् ।
– **भावरत्नकोशे**

विचित्रा हि तद्धितगतिः' इति वचनादतिरिक्तार्थसम्भवे चतुर्वर्णादिभ्यः स्वार्थ उपसङ्ख्यानम् इति नादरणीयमिति भावेनाह – चतुर्वर्णेति ॥ – **प्र.दी.**

१. -प्राधान्याद्रजो० – पा

२. तामसः शूद्रः इति भाष्यं रजसस्तमोऽधिकमित्येतावता तामसः शूद्र उच्यते, न तु सत्त्वादपीति प्राचीनटीकां हृदि कृत्वा विवृणोति – रजोपेक्षयेति । – **भावरत्नकोशे**

रजोपेक्षया तमोऽधिकं शूद्र इत्यसौ तामसः । – **प्र.दी.**

३. गी. १८/४२

४. हन्त तर्हि चातुर्वर्ण्यसर्गादेः कर्मणः कर्तृत्वात् तत्फलेन युज्यसे । अतो न त्वं नित्यमुक्तो नित्येश्वर इति । उच्यते । यद्यपि माया संव्यवहारेण तस्य कर्मणः कर्तारमपि सन्तं मां परमार्थतो विद्ध्यकर्तारम् । अत एवाव्ययम् । असंसारिणं च मां विद्धि ।
– **शाङ्करभाष्यम्**

तद्व्याचष्टे – **क्रियायामिति**[१] ॥

**(भा) क्रियायां वैलक्षण्यात् कर्ताऽप्यकर्ता ।**

**(टी)** सर्वकर्तुर्भगवतः क्रियावैलक्षण्यं श्रुत्या[२] दर्शयति – **तथा हीति** ॥

**(भा) तथा हि श्रुतिः 'विश्वकर्मा विमनाः'[३] इत्यादि ।**

**(टी)** मनसोऽभिनिवेशराहित्यं विमनस्त्वम्[४] । विमनसोऽपि या क्रिया सेतरक्रियाविलक्षणेत्यर्थः । अनेन वेदविरोधः सूचितः तत्पक्षे ।

जगत्कर्तुः क्रियावैलक्षण्यं प्रकारान्तरेण प्रदर्शयद्वाक्यमुदाहरति – **तनुरिति** ॥

**(भा) 'तनुर्विद्या क्रियाऽऽकृतिः'[५] इत्यादि च ।**

**(टी)** तदाकृतिरेव तत्क्रियेति देवदत्तादेरिव भिन्नक्रियाभावात् कर्ताऽप्यकर्तोच्यत इति भावः[६] । अनेन पुराणविरोधः सूचितस्तत्पक्षे[७] ।

---

१. 'क्रियाया मिथ्यात्वात् कर्ताऽप्यकर्तेति परव्याख्यां प्रत्याख्याति – साधितं चेति ॥' इति प्रमेयदीपिकायाम् 'साधितं च' इति भाष्यावतारिकारूपायाम् ।

२. क्वचित् 'श्रुत्या' इति नास्ति ।

३. ऋग्वेदे ८/३/१५-८२

४. उत्तरत्र 'अत एव न मां कर्माणि लिम्पन्ति' इति भाष्यव्याख्यानावसरे अतःशब्दः परामर्शरूप इत्यभ्युपगम्य अत्र 'विमनाः' इत्यपि तदर्थकमिति सूचितं भावप्रदीपिकायाम् । तदनुसारेणैव प्रवृत्ताऽत्रत्यभावप्रकाशिका ।

५. भागवते ६/४/४६

६. अप्रयत्नात् स्वतन्त्रत्वात् फलानां च विवर्जनात् ।
क्रियायाश्च स्वरूपत्वादकर्तेति च तं विदुः । – इति पाद्मे – **भाग.ता. १/३/३५**

७. कथं वैलक्षण्यमित्यतः श्रुत्यैव दर्शयति – तथा हीति ॥ विश्वकर्मापि विमनाः तत्राभिनिवेशरहित इत्यर्थः । प्रकारान्तरेण वैलक्षण्यं पुराणेन दर्शयति – तनुरिति ॥

– **प्र.दी.**

भगवतः कर्तृत्वादिकर्मयाथार्थ्यस्य द्वितीयाध्याये[१] साधितत्वान्नेह प्रपञ्च्यत इति भावेनाह – साधितं चेति ॥१३॥

(भा) साधितं चैतत् पुरस्तात् ॥१३॥

**(टी)** ननु यदि परमार्थतः कर्ता भगवान् सर्वस्यापि चातुर्वर्ण्यस्य, तर्हि किञ्चित्कर्तृभ्यो जीवेभ्योऽतिशयेनैव लिप्येतैतैः[२] कर्मभिः । अतः कथं तस्येशत्वम्? इत्याशङ्क्य, परिहारत्वेनोत्तरं श्लोकं व्याचष्टे – अत एवेति ॥

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥१४॥**

(भा) अत एव न मां कर्माणि लिम्पन्ति ।

**(टी)** यत एवं सर्वकर्मिणां, सर्वकर्मणां, तत्फलानां चानभिनिवेशादेव कर्ता हरिः, अतः सर्वेशत्वात् एव न तं **कर्माणि लिम्पन्ति** । न तु कर्तृत्वाद्यपारमार्थिकत्वनिश्चयादित्यर्थः ।

इतोऽपि न भगवतः कर्मलेपः तदपारमार्थिकत्वनिश्चयात् किन्त्वाप्तकामत्वेन निःस्पृहत्वादेवेत्याह – इतश्चेति ॥

(भा) इतश्च न लिम्पन्तीत्याह – न मे कर्मफले स्पृहा ॥

**(टी)** ननु भगवान् चातुर्वर्ण्यं सर्वं वा जगत् प्रविश्य विहर्तुं हि तत् ससर्ज । सा विहृतिर्जगत्सुखदुःखमध्यसम्प्राप्तयेऽस्तु नाम । तथाऽपि सा विहारेच्छा कर्मफलेच्छैव । अतः कथं न तस्य कर्मफलस्पृहा? इत्यत आह – इच्छामात्रं त्विति ॥

---

१. २/२४
२. लिप्येत – पा

**(भा)** इच्छामात्रं त्वस्ति । न तु *तत्राभिनिवेशः* ।

**(टी)** आप्तकामत्वाविरोधित्वान्नेच्छामात्रास्तित्वे कश्चिद्दोषः, अपि तु गुण एवेति भावः ।

कुतोऽयं विशेषः? इत्यत आह – **तच्चेति** ॥

**(भा) तच्चोक्तम्** –

> **'आकाङ्क्षन्नपि देवोऽसौ नेच्छते लोकवत् परः ।**
> **न ह्याग्रहस्तस्य विष्णोर्ज्ञानं कामो हि तस्य तु'** इति ।

**(टी)** उत्तरार्धस्य [1]यदपव्याख्यानम् – 'एवं योऽन्योऽपि मामात्मत्वेनाभिजानाति तत्स्वाधीनदेहारम्भककर्माणि' इति[2] । तत्र 'आत्मत्वेन' इति पदाध्याहारस्यायोगात्, अनुपयोगाच्चेति स्पष्टत्वान्न तद्दूषणमुद्भावितम् ।

यदलिप्तत्वज्ञान्यपि कर्मलेपात् मुच्यते, न तं कर्माणि लिम्पन्तीति किमु वर्णनीयमिति व्याख्यानमविस्पष्टत्वान्न कृतम्[3] ।

नन्वेक एव जीवः प्रतिबिम्बरूपः । तदज्ञानपरिकल्पितमेव चतुर्वर्णादिजडाजडात्मकं[4] विश्वम् । न तु कश्चित् परमार्थतः कर्ता विश्वस्य । तस्येदानीमपि नाहं कर्ता न मे कर्मफलस्पृहा इत्यापरोक्षेणात्मनो बिम्बैक्याज्ञानादेवेदं विश्वं

---

१. इत्येवं योऽन्योपि मामात्मत्वेनाभिजानाति नाहं कर्ता, न मे कर्मफले स्पृहा इति, स कर्मभिर्न बद्ध्यते । तस्यापि न देहाद्यारम्भकाणि कर्माणि भवन्तीत्यर्थः ।

– **शाङ्करभाष्यम्**

२. **स्वाधीनदेहाधीनकर्माणीति** – पा

३. यस्यालिप्तत्वं जानन्नपि सर्वकर्मलेपान्मुच्यते, न मां कर्माणि लिम्पन्तीति किं वर्णनीयमित्याशयेनाह – इतीति ॥ – **श्रीविद्याधिराजतीर्थाः**

**कैमुत्येनापि स्वस्य कर्मालेपमाह – इतीति ॥ – श्रीराघवेन्द्रतीर्थाः गीताविवृतौ**

४. **चतुर्वर्णादिकं जडाजडात्मकं** – पा

प्रतीयते । येषां तु पक्षे परमार्थत एव परेशात् स्वातन्त्र्यादिसकल-कल्याणगुणगणाकरात् मुखबाहूरुपद्भ्यश्चातुर्वर्ण्याद्यनेकविभेदं विश्वमुत्पद्यते तत्तथात्वज्ञानादेव च मुक्तिर्जीवानाम्, तेषां पक्षेऽस्मत्पक्षे वेतःपुरा न कस्यापि मुक्तिरिति न । किन्तु यदा केचिज्ज्ञानिनस्तदा ते मुक्ता भवन्ति, तदनन्तरं च केचिदिति ।

एवं सति क्रमेण सर्वमुक्तिः स्यात् । तथा सत्यनादितोऽतीतस्यैव कालस्यानन्त्यादेतद्दिनपर्यन्तं विश्वं न प्रवर्तेतेति भावेनाशङ्क्य परिहरति – **न चेति**[1] ॥

**(भा) न च केचिन्मुक्ता भवन्तीति क्रमेण सर्वमुक्तिः । तथाहि श्रुतिः –**

**'ज्ञात्वा तमेनं मनसा हृदा च भूयो न मृत्युमुपयाति विद्वानिति कथं वा इत्यनन्ता इत्यनन्तवदिति होवाच' इति ॥१४ ॥**

**(टी)** इतिशब्दो हेत्वर्थः । केचिन्मुक्ता भवन्तीत्यस्माद्धेतोर्न सर्वमुक्तिरा-शङ्कनीया । अनन्तत्वाज्जीवानामिति भावः ।

वेदोऽपीमं प्रश्नं परिहरतीत्याह । 'तं परमात्मानम् एवं उक्तप्रकारेण **मनसा** ज्ञानेन **हृदा** प्रेम्णा **च**[2] दृष्ट्वा **पुनर्मृत्युं नोपयाति विद्वान्'** इति वदन्ति

---

१. तत्रैकजीववादिनामाक्षेपमुद्भाव्य प्रतिषेधति – न चेति ॥ केचिदिदानीं मुक्ता भवन्ति, केचिद्भूता इति पक्षेऽतीत एव काले क्रमेण सर्वमुक्तिः स्यात् । तथा चेदानीं संसारानुपलम्भः स्यादिति न शङ्कनीयम् । – **प्र.दी.**

२. 'मनसा' 'हृदा च' इति पुनरुक्तम् । 'स्वान्तं हृन्मानसं मनः' इत्यभिधानादिति वा । 'चन्द्रमा मनो भूत्वा हृदयं प्राविशत्' इति श्रुत्या हृदयस्य मनोधिष्ठानत्वावेदनेन हृदा ज्ञात्वा इति कथं ज्ञानकरणत्वोक्तिरित्यत आह – हृदा बुद्ध्या चेति ॥ प्राचीनटीकायां तु ''मनसा ज्ञानेन ज्ञात्वा हृदा दृष्ट्वा अपरोक्षीकृत्य च'' इत्युक्तम् । – **भावरत्नकोशे** हृदा बुद्ध्या च । – प्र.दी.

वैदिकाः । 'तर्ह्यनन्ताः संसारिणः कथं दृश्यन्ते? किन्त्वितःपूर्वमेव सर्वमुक्तिः स्यात्' इति प्रश्नाशयः । इतिशब्दः प्रश्नसमाप्तौ । **अनन्तवदिति होवाच** इति परिहारः । यथा हि बिम्बभूतो भगवाननन्तसङ्ख्यस्तद्वत् तत्प्रतिबिम्बभूतर्जीवाऽ-पीत्यर्थः[1] । 'रूपं रूपं प्रतिरूपो बभूव'[2] इत्यादिश्रुतेः ।

न चातीतकालानन्त्यात् जीवानन्त्येऽपि सर्वमुक्तिः स्यादिति वाच्यम् । जीवानामेकैकराशेरेव मिलितातीतानागतकालक्षणेभ्योऽप्यनन्तगुणितत्वोक्ते-र्वत्सश्रुतौ[3] ॥१४॥

ननु 'अजोऽपि' इत्युक्तलक्षणपरब्रह्मतत्त्वापरोक्षज्ञान्येवार्जुनो मुमुक्षुश्च, इन्द्रावतारत्वात् । 'नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः'[4] इत्यादिश्रुतेः । अतः कथं 'स एवायं मया तेऽद्य योगः प्रोक्तः' इति भगवताऽत्युत्तमकर्मयोग उपदिश्यते? इत्याशङ्कां सूचयन् तत्परिहारत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे – **एवमिति** ॥

**(भा) एवं ज्ञात्वाऽपि कर्मकरण आचारोऽप्यस्तीत्याह – एवमिति ॥**

---

१. -जीवा अपीत्यर्थः – पा

२. काठकोपनिषत् २/२/९,१०

३. अनागता अतीताश्च यावन्तः सहिताः क्षणाः ।
अतीतानागताश्चैव यावन्तः परमाणवः ।
ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक् । इति **तत्वनिर्णयोदाहृतवत्सश्रुतिवचनम्**
कालक्रमेणाधिगतविद्येषु मुच्यमानेषु संसारिणां समाप्तिः स्यादिति यदेकजीववादिनोक्तं तदनन्तानन्तत्वात् तेषां न समाप्तिरिति श्रुत्यादिना परिहरति – अनागता इत्यादिना ॥
– इति **न्यायरत्नावल्यां तत्त्वनिर्णयटीकायां श्रीपद्मनाभतीर्थश्रीचरणाः**
ननु कालोऽप्यनन्तोत इत्यस्योत्तरम् 'अनन्तवत्' इति । यथा भगवान् कालक्षणेभ्योऽ-प्यतिशयेनानन्तः, तथाऽनन्ताः । **– प्र.दी.**

४. इति श्रुतेः – पा; **गीतातात्पर्योपोद्घाते** उदाहृता श्रुतिरियम् ।

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतम् ॥१५॥**

(भा) पूर्वतरं कर्म पूर्वभावीत्यर्थः ॥१५॥

**(टी)** भवतु मुमुक्षुरपरोक्षज्ञानी च । तथाऽपि ज्ञानाङ्गत्वेन तत्पूर्वमवश्यम्भावि यत्कर्म, तज्ज्ञात्वाऽपि कुर्वेव । न तूष्णीं तिष्ठ । फलेऽतिशायकत्वात् तस्य । न ह्यन्यथा पूर्वे मुमुक्षवो ज्ञात्वाऽपि कर्म कुर्वन्तीत्यर्थः ॥१५॥

कर्तव्यस्य दुर्विज्ञेयत्वोक्तौ सम्यगेव सतां तज्जिज्ञासा भवति । [1]ततस्तदुक्तावतीवानुभवमारोहतीति भावेनोत्तरश्लोकमवतारयति – कर्मेति[2] ॥

(भा) कर्म कुर्वित्युक्तम् । तस्य कर्मणो दुर्विज्ञेयत्वमाह सम्यग्वक्तुम् – किं कर्मेति ॥१६॥

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।**
**तत् ते(ऽ)कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१६॥**

**(टी)** ते कर्माकर्मणी प्रवक्ष्यामीति ज्ञातव्यम् । उभयोरपि प्रकृतत्वादुभयथाऽपि पदसम्भवात्[3] ॥१६॥

ननु कर्मादिज्ञानमपि कस्यचिन्मुक्तिसाधनं चेत्, 'नान्यः पन्था अयनाय' इत्यादिश्रुतिविरोध इत्याशङ्क्य, श्रुतिविरोधमुत्तरश्लोकव्याख्यया परिहरिष्यन्[4]

---

१. अतः – पा

२. कर्मेति ॥ तस्य कर्तव्यतयोक्तस्य । किमर्थम्? सम्यग्वक्तुम् । एतदेव सम्यग्वचनं यज्जिज्ञासवे कथनम् । जिज्ञासा च दुर्विज्ञेयत्वोक्तौ भवतीति भावः । अत एव प्रकर्षेण वक्ष्यामीत्याह । – प्र.दी.

३. 'अकर्म'पदेन विकर्मोपलक्षणम् । 'तत् ते(ऽ)कर्म' इत्यत्र 'कर्म''अकर्म' इति पदच्छेदः । तत्रापि 'अकर्म'पदं विकर्मोपलक्षकम् । – **भावप्रदीपिका**

४. -मुत्तरश्लोकं व्याख्याय – पा

कर्मादिज्ञानं विना न कस्यापि मुक्तिरिति भावेन तावन्निरन्तरं श्लोकमवतार्य तत्र प्रमाणमाह – **न केवलमित्यादिना** ॥

(भा) न केवलं तज्ज्ञात्वा मोक्ष्यसे, ज्ञात्वैवेत्याशयवानाह – कर्मण इति ॥

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७॥**

(भा) तच्चोक्तम् –

'अज्ञात्वा भगवान् कस्य कर्माकर्मविकर्मकम् ।
दर्शनं याति हि मुने कुतो मुक्तिश्च तद्विना ॥' इति ।

**(टी)** अत्र केचित् विकर्माकर्मशब्दयोः प्रतिषिद्धमेवार्थमाहुः[1] । तद्व्युदासाय तयोरर्थभेदमाह – **अकर्मेत्यादिना** ॥

**(भा) अकर्म कर्माकरणम् । कर्माकर्मान्यद्विकर्म । निषिद्धकर्म । बन्धकत्वात् ।**

**(टी)** श्रुत्या विहिताकाम्यानुष्ठानं कर्म । 'कुरु कर्म' इत्यादिनाऽत्राकाम्यस्यैव प्रस्तुतत्वात् । कर्माकरणमकर्म । ताभ्यामन्यत् सर्वमपि विकर्म, बन्धकत्वात् । बन्धस्यानिष्टत्वात्, इष्टसाधनस्यैव विधेयत्वादिति भावः ।

अध्याहारादिक्लेशपरिहारार्थमन्वयं च सूचयति – **तत इति** ॥

**(भा) ततो विविच्य कर्मादि बोद्धव्यमित्यादि ।**

**(टी)** कर्माकर्मान्यद्विकर्मेति यदुक्तं ततो विकर्मणो विविच्य कर्माकर्म च बोद्धव्यम् । न चात्र 'कर्माकर्म च' इत्यध्याहारः । 'तत् ते(ऽ)कर्म' इति

---

१. विकर्म यच्छास्त्रबाह्यं पाषण्डिभिराचर्यमाणं धातुवादशिल्पकर्मादि च । अकर्मणश्च प्रतिषिद्धलशुनभक्षणादेः । – **भास्करभाष्यम्**

प्रकृतत्वादुभयोरपि । अनेन 'बोद्धव्यं च विकर्मणः' इत्यस्यार्थो दर्शितः । इतरयोरर्थप्रदर्शनाय आदिशब्दश्चरमः । तथाहि – कर्मणो विविच्याकर्म विकर्म च बोद्धव्यम् । 'तत् तेऽकर्म' इत्यत्राकरणीयत्वेन विकर्मणोऽप्यकर्मशब्दोक्तत्वेन प्रस्तुतत्वान्न तस्याप्यध्याहारः । एवमकर्मणो विविच्य कर्म विकर्म बोद्धव्यमित्यर्थः ।

कवीनां मोहश्चेत्, शापादिरेव कारणमित्याशङ्कां परिहर्तुमन्त्यपादमवतारयति – **न चेति** ॥

(भा) न च शापादिना कवयोऽप्यत्र मोहिताः । अशक्यं चैतज्ज्ञातुमित्याह – गहनेति ॥१७॥

**(टी)** यस्य कर्मादेः सम्यग्वचनाय दुर्विज्ञेयत्वमुक्त्वाऽतिविज्ञेयत्वमुक्तम्, तत्सम्यग्वचनपरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे – **कर्मादीति** ॥

(भा) कर्मादिस्वरूपमाह – कर्मणीति ॥

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१८॥**

(भा) कर्मणि क्रियमाणे सति अकर्म यः पश्येत् ।

**(टी)** विहिते **कर्मणि क्रियमाणे**ऽपि, **अकर्म यः पश्येत्**, 'स्वस्य' इति शेषः[१] ।

तथा हि तद्विवृणोति – **विष्णोरेवेति** ॥

(भा) विष्णोरेव कर्म, नाहं चित्प्रतिबिम्बः किञ्चित् करोमीति ।

---

१. कर्मणीति ॥ वर्णाश्रमोचिते । – प्र.दी.

**(टी)** न मे विष्णुवत् स्वतन्त्रं कर्म, प्रतिबिम्बत्वात् । अतः परिशेषात् बिम्बचेष्टैव मच्चेष्टेति भावः ।

न केवलं मम चेष्टैव विष्ण्वधीनेति जानन् बुद्धिमान्, किन्तु सर्वं तेनैव क्रियत इति जानन्नेवेति[१] भावेनोत्तरपादं व्याचष्टे – **अकर्मणीति ॥**

**(भा) अकर्मणि सुप्त्यादावकरणावस्थायां परमेश्वरस्य यः कर्म पश्यति ।**

**(टी)** कथमकर्मशब्दोक्तः सुप्त्यादिरित्यत उच्यते – **अकरणावस्थायामिति**[२] **॥ आदिशब्देन** स्वप्नप्रलयौ[३] ।

तदेतद्विवृणोति[४] – **अयमेवेति ॥**

**(भा) 'अयमेव परमेश्वरः सर्वदा सर्वसृष्ट्यादि करोति' इति स बुद्धिमान् ज्ञानी । स एव च युक्तो योगयुक्तः । सर्वाकरणात् स एव च कृत्स्नकर्मकृत् कृत्स्नफलवत्वात् ॥१८॥**

**(टी)** सर्वदा इति ॥ [५]सुप्तिसन्ध्यप्रलयादौ[६] सुप्तोत्थापनस्वप्नजाग्रत्वप्रपञ्चादिकमयमेव करोतीत्यर्थः[७] । अत एव तादृशबुद्ध्याऽ-

---

१. जानन् इति – पा

२. सुप्त्यादिकं कथमकर्म? इत्यत उक्तम् – अकरणेति ॥ – **प्र.दी.**

३. प्राचीनटीकायां तु आदिशब्देन स्वप्नप्रलयौ ग्राह्यावित्युक्तम् । – **भावरत्नकोशे**

४. तदेव विवृणोति – पा

५. सुप्तिप्रलयसन्ध्यादौ – पा

६. सन्ध्यं स्वप्नः । 'सन्ध्यं तृतीयं स्वप्नस्थानम्' इति श्रुतेः । – **ब्र.सू.भा ४/४/१३**

७. विश्वस्योदयमातनोति तदनु त्राणं विधत्ते पुनः
सौख्यासौतरहानिसाधनमलं वक्ति श्रुतीर्व्यञ्जयन् ।
स्वापं प्रापयति श्रमापहृतये कल्पावसाने च यः
तं देवं पितरं पतिं गुरुतमं वन्दे रमावल्लभम् ॥
– इति **श्रीजयतीर्थश्रीचरणाः विष्णुतत्त्वनिर्णयटीकायाम्**

नुष्ठितं[१] कर्मस्वरूप उक्ते सत्यकर्मविकर्मणोः स्वरूपं ज्ञातुं शक्यम् । **'अकर्म कर्माकरणम् । कर्माकर्मान्यद्विकर्म'** इत्युक्तत्वात् ॥१८॥

ननु –

'स्वातन्त्र्यं मन्यमानस्य रागाद्धर्मं च कुर्वतः ।
तन्निमित्तस्तु दोषः स्यात्'

इत्यादौ स्वातन्त्र्याद्यभिमानिकृतकर्मण इव फलकामादिकृतकर्मणोऽपि दोषहेतुत्वोक्तेः कथमेतत् कर्मस्वरूपम्? इत्याशङ्क्य, उत्तरश्लोकैरपि कर्मस्वरूपस्यैव विस्तार्यमाणत्वान्न[२] विरोध इति भावेनाह – **एतदेवेति**[३] ॥

**(भा)** एतदेव प्रपञ्चयति – यस्येत्यादिश्लोकपञ्चकेन ॥

**यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥१९॥**

**त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः ॥२०॥**

**(टी)** यस्योक्तप्रकारेण भगवतः स्वतन्त्रसर्वकर्मकर्तृत्वादिज्ञानात्, आत्मनश्च तत्प्रतिबिम्बभूतस्य केवलं तदायत्तचेष्टादिज्ञानात्, सर्वे समारम्भा अहं करिष्यामीति सङ्कल्पवर्जिताः[४], मत्कर्मणः फलं स्यादिति कामवर्जिताश्च, तं तेनैव ज्ञानेनैव दग्धकर्माणं बुधाः पण्डितं प्राहुरित्यभिप्रेत्याह – **उक्तेति** ॥

---

१. बुद्ध्यनुष्ठितं – पा

२. विस्तीर्यमाणत्वान्न – पा

३. ननु कथं स्वातन्त्र्यमात्रं विना कृतं कर्म भवति, रागस्याप्यकर्तव्यत्वात्? इत्यत आह – एतदेवेति ॥ – **भावप्रदीपिका**

४. सङ्कल्पत्यागस्य स्वातन्त्र्येण कर्तृत्वभ्रमाभावरूपत्वात्, स्वातन्त्र्येण कर्माभावज्ञानस्य च तत्र स्वामित्वाभावज्ञानरूपत्वात् तयोश्च महावैलक्षण्यादिति द्रष्टव्यम् । तथा च प्राचीनटीका ''अहं करोमि इति भावना सङ्कल्पः'' इति । – **भावरत्नकोशे**

**(भा)** उक्तप्रकारेण ज्ञानाग्निदग्धकर्माणम् ॥

**(टी)** स्वारोपिताहङ्कारनिमित्तफलकामत्यागात्, स्वस्येश्वराधीनत्वादि-याथार्थ्यज्ञानाच्च न कर्माणि बध्नन्तीत्युक्तम् । तत्र तावत् त्यागे विशेषमाह – **न चेति** ॥

**(भा)** **न च कामसङ्कल्पाभावेनालम्** । आसङ्गं स्नेहं च **त्यक्त्वा** ।

**(टी)** फलकामाभावेऽपि यदि फले स्नेहः[1] स्यात्, तथाऽपि बध्नन्ति कर्माणीति सोऽपि त्याज्य इत्यर्थः[2] ।

ज्ञानेऽपि विशेषमाह – **ज्ञानस्वरूपमिति** ॥

**(भा)** **ज्ञानस्वरूपमाह पुनः** – नित्यतृप्त इति ॥ **नित्यतृप्तनिराश्रयेश्वर-सरूपोऽहमस्मीति तथाविधः ॥१९,२०॥**

**(टी)** न केवलं चित्प्रतिबिम्बत्वात् चित्त्वमात्रमस्य[3] । किन्तु नित्यतृप्त-निराश्रयेश्वरप्रतिबिम्बत्वात् स्वयं च नित्यतृप्तः । अत एव निराश्रयश्च । अतृप्तो

---

१. **फलस्नेहः** – पा

२. आसङ्गम् इत्यनूद्य स्नेहम् इति व्याख्यानं भाष्ये । तत्र स्नेह आसक्तिः प्रीतिः । स च कामादन्य एव । 'सङ्गात् सञ्जायते कामः' इति भगवतैव तयोः कार्यकारणभावस्योक्त-त्वात् । तथा च पूर्वोक्तमेवात्रोच्यत इति न चोद्यावकाश इति भाष्यभावः स्फुटत्वान्नोक्तः । अत एवान्यथा व्याचष्ट इत्येवोक्तम् । प्राचीनटीकायामपि ''फलकामा-भावेऽपि यदि फले स्नेहः स्यात्, तथाऽपि बध्नन्त्येव कर्माणीति सोऽपि त्याज्यः'' इति कामस्नेहौ पृथगभिहितौ । **– भावरत्नकोशे**

'यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः' इत्यनेन यदुक्तं तदेव 'त्यक्त्वा कर्मफलासङ्गम्' इत्यनेनोच्यते । सङ्कल्पो हि कर्मासङ्गः । कामश्च फलासङ्ग इत्यतः सङ्गतिपूर्वमन्यथा व्याचष्टे – न चेति ॥ **– प्र.दी.**

३. **चित्त्वमात्रं स्यात्** – पा

ह्यन्यानाश्रयति । **युक्ताश्च बिम्बधर्माः प्रतिबिम्बे**[१] इत्युक्तत्वात् । **संसारे तु** तृप्त्यादेरभिभूतत्वात् अन्यकामादिरपि भवति ॥१९,२०॥

तत्त्यागोपायपरतयैतत्तृतीयं श्लोकमवतारयति – **कामादीति** ॥

(भा) कामादित्यागोपायमाह – निराशीरिति ॥

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥२१॥**

**(टी)** निराशीस्त्वं त्यक्तकामता ।

तत्र यतचित्तात्मत्वं[२] साधनमिति भावेन योजयति – **यतेति** ॥

(भा) **यतचित्तात्मा भूत्वा निराशीरित्यर्थः** ।

**(टी)** नात्रात्मशब्देन सेन्द्रियो देह उच्यते[३] । मनोनिरोधेनैव तन्निरोधसिद्धेः । अतो मन एवेति भावेनाह – **आत्मेति** ॥

(भा) आत्मा **मनः** ।

**(टी)** ननु परिग्रहत्यागस्य[४] कामादित्यागोपायत्वे परिग्रहिणां कामाद्युपहतिः स्यादित्यत आह – **परीति** ॥

(भा) **परिग्रहत्यागोऽनभिमानम्** ।

**(टी)** तथा हि मोक्षधर्मे[५] जनकवाक्यम् –

---

१. २/२४
२. यतचित्तात्मकत्वं – पा
३. आत्मशब्देन सेन्द्रियं शरीरं गृह्यते । – **भास्करभाष्यम्**
४. परिग्रहत्यागोपायस्य – पा
५. भारते शान्ति १७८/२

'ससुखं बत जीवामि[1] यस्य मे नास्ति किञ्चन[2] ।
मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ॥' इति[3] ।

ननूक्तोपायेन यस्त्यक्तकामादिः स कर्मण्यभितः सर्वतः, सर्वस्मिन् विहिते कर्मणि प्रवृत्तोऽपि नैव किञ्चित् [4]करोतीत्यतिविरुद्धमित्याशङ्कापरिहारत्वेन श्लोकशेषं व्याचष्टे – **नैवेति** ॥

**(भा) नैव किञ्चित् करोतीत्यस्याभिप्रायमाह** – नाप्नोति किल्बिष-मिति ॥२१॥

**(टी)** द्विविधं हि कर्मफलम् । फलकामकर्माहङ्कारादिनिमित्तदोषात्मकं 'सर्वारम्भा हि दोषेण'[5] इत्यादावुदितम्, सुकर्मजनितगुणात्मकं च । एवं सति यः सर्वमपि विहितं कर्म केवलं शारीरमेव करोति सेन्द्रियशरीरमात्रनिर्वर्त्यं न तु 'अहं करिष्ये', 'अत एव तत्फलं मे स्यात्', 'तदपि प्रियं मम' इति

---

१. अनन्तं बत मे वित्तं – इति प्रचलितभारतपाठः ।

२. कञ्चन – पा

३. परिग्रहत्यागोऽनभिमानम् । तथा ह्युक्तम् –

सुसुखं बत जीवामि यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ॥ इति । – इति **श्रीविद्याधिराजतीर्थाः**

देहादिरूपपरिग्रहे सत्यपि तदभिमानाभाव एव परिग्रहत्याग इति विवक्षित इति न कोऽपि दोष इति भावः । तथा च प्राचीनटीका – तथा हि मोक्षधर्मे जनकवाक्यम् –

'ससुखं बत जीवामि यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते ॥' – **भावरत्नकोशे**

अनभिमानम् इति स्थितिरित्यादि क्रियाविशेषणम् । अर्थाभावेऽव्ययीभावो वाऽयम् । अभिमानाभाव इत्यर्थः । – **प्र.दी.**

४. **करोतीत्येतद्विरुद्ध०** – पा

५. गी. १८/४८

मनसि निरूढम्, स फलकामकर्माहङ्कारादिनिमित्तकिल्बिषं नाप्नोति । किन्तु सुकर्मजनितगुणमेवेति नैव किञ्चित्करोतीत्यर्थः[१] ॥२१॥

ननूत्तरश्लोके 'कर्मण्यकर्म' इति श्लोकार्थलेशस्याप्यप्रतीतेः कथं तत्प्रपञ्चात्मकत्वम्? इत्यत आह – यतेति ॥

(भा) यतचित्तात्मनो लक्षणमाह – यदृच्छालाभेति ॥

**यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।**
**समः सिद्धावसिद्धौ च कृत्वाऽपि न निबद्ध्यते ॥२२॥**

**(टी)** 'कर्मण्यकर्म' इति श्लोकोक्तो यः कर्माहङ्कारादिः, तदुपायभूतयतचित्तात्मकत्वलक्षणोक्तेस्तत्प्रपञ्चात्मकत्वमिति भावः[२] ।

ननु कामक्रोधादिराहित्यं द्वन्द्वातीतत्वम् । तत्र कामाभावे घटादि-

---

१. ननूक्तोपायेन यस्त्यक्तकामादिः सर्वकर्मण्यभितः सर्वतः प्रवृत्तौ नैव किञ्चित् करोतीत्येतद्विरुद्धमित्याशङ्क्य तस्याभिप्रायमाह – नाप्नोति किल्बिषमिति ॥ कर्मफलसङ्गाभावात् तन्निबन्धनदोषराहित्यमेव सेन्द्रियशरीरनिर्वर्त्यकर्मकारिणोऽकर्तृत्वमिति भावः । – **श्रीविद्याधिराजतीर्थाः**

प्राचीनटीकायां तु "ननूक्तोपायेन यस्त्यक्तकामादि स कर्मण्यभितः सर्वतः सर्वस्मिन् विहिते कर्मणि प्रवृत्तोऽपि नैव किञ्चित् करोतीत्यतिविरुद्धमित्याशङ्कापरिहारत्वेन श्लोकशेषं व्याचष्टे – नैवेति ॥ द्विविधं हि कर्मफलम् । फलकामकर्माहङ्कारादिनिमित्तदोषात्मकं 'सर्वारम्भा हि दोषेण' इत्यादावुदितम्, सुकर्मजनितगुणात्मकं च । एवं सति यः सर्वमपि विहितं केवलं शारीरमेव करोति सेन्द्रियशरीरमात्रनिर्वर्त्यं न त्वहं करिष्ये अत एव तत्फलं मे स्यात् तदपि प्रियं ममेति मनसि निरूढं स फलकामकर्माहङ्कारादिनिमित्तकिल्बिषं नाप्नोति । किन्तु सुकर्मजनितगुणमेवेति नैव किञ्चित् करोतीत्यस्यार्थ इति, नैव किञ्चित् करोतीत्यस्याभिप्रायमाह – नाप्नोति किल्बिषमिति" इति भाष्यं व्याख्यातम् ॥ – **भावरत्नकोशे**

२. व्याख्यानव्याख्येयत्वेन न पुनरुक्तिदोष इत्यर्थः । – **प्र.दी.**

वज्जडत्वापत्तेः[१] न कस्यापि कामत्यागः[२] । क्रोधोऽपि न सर्वात्मना त्यक्तुं शक्यः । कामादेव[३] क्रोधदर्शनात् । 'कामं दहन्ति कृतिनो ननु रोषदृष्ट्या'[४] इति वचनादिति भावेनाशङ्कते – **कथमिति**[५] ॥

**(भा) कथं द्वन्द्वातीतत्वमिति[६] ।**

**(टी)** तामाशङ्कां 'द्वन्द्वातीत'पदं व्याचक्षाणो भगवानेव परिहरतीति भावेन तृतीयं पादमवतारयति – **आहेति** ।

**(भा) आह – समः सिद्धाविति ॥२२॥**

**(टी)** यथा यदृच्छया यत्किञ्चिदाहारादिसिद्धौ नाधिकं वाञ्छति, नाल्पदातारं कुप्यति । तथा कदाचिदाहारादेरसिद्धावपि नान्यतो वाञ्छति, अदातारं च न कुप्यतीत्येतदेव च द्वन्द्वातीतत्वम् । न तु सर्वथा कामक्रोधादिराहित्यमिति भावः[७] ॥२२॥

---

१. जडात्मत्वापत्तेः – पा

२. चेतनस्य त्वसुप्तस्य कुत्र दृष्टा ह्यकामता ।
अव्यक्तिरेव कामानां न नाशो मोहसुप्तयोः ॥ – अनुव्याख्यानम् ३/४/१९

३. कामादावेव – पा

४. भागवते २/७/७

५. कामाद्यभावे कथं चित्त्वम्? अतो द्वन्द्वत्यागोऽयुक्त इत्याशङ्क्य, तृतीयपादमवतारयति – कथमिति । – भावप्रदीपिका

६. 'इत्यत आह' – प्रचलितपाठः । 'इत्याह' - इति हृपाठः ।

७. प्राचीनटीकायां तु ''कामक्रोधादिराहित्यं द्वन्द्वातीतत्वम् । तत्र कामाभावे घटादिवज्जडतापत्तेः न कस्यापि कामत्यागः । क्रोधोऽपि न सर्वात्मना त्यक्तुं शक्यः । कामादेव क्रोधदर्शनात् 'कामं दहन्ति कृतिनो ननु रोषदृष्ट्या' इति वचनादिति भावेनाशङ्कते – कथमिति ॥ तामाशङ्कां द्वन्द्वातीतपदं व्याचक्षाणो भगवानेव परिहरतीति भावेन तृतीयपादमवतारयति – आहेति ॥ यथा यदृच्छया यत्किञ्चिदाहारादिसिद्धौ नाधिकं वाञ्छन्ति । नाल्पदातारं कुप्यति । तथा कदाचिदाहारादेरसिद्धावपि नान्यतो

न चोत्तरश्लोकस्य 'यस्य' इत्यादिना गतार्थता । उक्तार्थसङ्ग्रहात्मकत्वेनोपसंहाररूपत्वात् । अतः 'अतः'शब्दाद्यभावेऽप्युपसंहारपरोऽयं श्लोक इति भावेनाह – उपेति[१] ॥

(भा) उपसंहरति – गतसङ्गस्येति ॥

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥२३॥**

(भा) [२]गतसङ्गस्य फलस्नेहरहितस्य । मुक्तस्य शरीराद्यनभिमानिनः । ज्ञानावस्थितचेतसः परमेश्वरज्ञानिनः ॥२३॥

**(टी)** 'यज्ञाय' भगवते कुर्वतः 'कर्म' सह पूर्वोत्तराघाभ्यां प्रलीयते । यदनादिकर्म यावन्मोक्षं तत्सर्वं न[३] बध्नातीत्यर्थः ।

'एवं नृणां क्रियायोगाः[४] सर्वे संसृतिहेतवः ।

---

वाञ्छन्ति, अदातारं च न कुप्यतीत्येतदेव च द्वन्द्वातीतत्वम् । न तु सर्वथा कामक्रोधादिराहित्यमिति भावः'' इति 'कथम्' इत्यादिभाष्यं व्याख्यातम् ।

– भावरत्नकोशे

१. यदुक्तं कामादिवर्जनं तदेव गतसङ्गस्य इत्यनेनोच्यते । 'त्यक्तसर्वपरिग्रहः' इत्येतत् 'मुक्तस्य' इत्यनेन, 'कर्मणि' इति 'नित्यतृप्तः' इति च 'ज्ञानावस्थितचेतसः' इत्यनेन अतः पुनरुक्तिरित्यत आह – उपसंहरतीति ॥ – प्र.दी.

२. उपसंहरति – गतसङ्गस्येति । गतसङ्गस्य फलस्नेहरहितस्य । स्वातन्त्र्याभिमानाच्छरीराभिमानाद्वा मुक्तस्य । मुक्तसदृशस्य वा । ज्ञानावस्थितचेतसः परमेश्वरज्ञाननिष्ठचित्तस्य । यज्ञाय भगवते । आचरतः कर्म समग्रं प्रविलीयते बन्धकं न भवति । उक्तं च –
''एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवात्मविनाशाय कल्प्यन्ते कल्पिताः परे ॥'' इति – श्रीविद्याधिराजतीर्थाः

३. तन्न – पा

४. क्रियायोगात् – पा

त एवात्मविनाशाय कल्प्यन्ते कल्पिताः परे[१] ॥'[२]

इत्यादेः, इति भाष्यशेषः ॥२३॥

न हि महीं प्राप्य[३] भगवच्चरणारविन्दस्नेहं विनाऽल्पफलस्वर्गादिस्नेहं त्यजति । तथा शरीरतत्क्रियादेर्भगवदधीनत्वज्ञानं विनाऽहंममताभिमान-हानिस्तत्रेति[४] गतसङ्गस्य मुक्तस्य यत् परमेश्वरज्ञानित्वमर्थात् प्रतीयते तदतिस्फुटं करोतीत्याह – **ज्ञानेति** ॥

(भा) ज्ञानावस्थितचेतस्त्वं स्पष्टयति – ब्रह्मार्पणमिति ॥

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्म कर्म समाधिना ॥२४॥**

**(टी)** तदधीनत्वमेव कर्मादेर्ब्रह्मत्वं वेदेतिहासाद्युक्तम् । न तद्विवर्तत्वेन तत्परिमाणत्वेन[५] वा । नापि तद्व्यतिरेकेणाभावः[६] । तथैव पुराणे व्याख्यातत्वादित्याह – **सर्वमिति** ॥

(भा) सर्वमेतद्ब्रह्मेत्युच्यते । तदधीनसत्ताप्रतीतित्वात् । न तु तत्स्वरूप-त्वात् । उक्तं हि –

'त्वदधीनं यतः सर्वमतः सर्वो भवानिति ।
वदन्ति मुनयः सर्वे न तु सर्वस्वरूपतः ॥' इति पाद्मे ।

---

१. '' 'एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवात्मविमोक्षाय कल्प्यन्ते कल्पिताः परे ॥' इति'' इत्युत्तरार्धः प्राचीनटीकायां व्याख्यातः । – **भावरत्नकोशे**

२. भागवते १/५/३४; ३. महाप्राप्यभगवच्चरणारविन्दस्नेहं – पा

४. ०हंममाभिमानस्तत्रेति – पा

५. हविः विशेष्यते अर्प्यतेऽनेन इति अर्पणं सृगादि । तद्ब्रह्मकार्यत्वात् ब्रह्म । – इत्यादि **रामानुजभाष्यम्**

६. ब्रह्म एव इति पश्यति । तस्य आत्मव्यतिरेकेणाभावं पश्यति । – **शाङ्करभाष्यम्**

**(टी)** सर्वस्य ब्रह्मनेतृकत्वब्रह्माधारत्वश्रुतेश्च न ब्रह्मत्वमितिहासाद्यर्थ इत्याह – **सर्वं तदिति** ॥

**(भा)** 'सर्वं तत्प्रज्ञानेत्रम्'[१] इति च ।

**(टी)** 'एतं ह्येव बह्वृचा' इत्यारभ्य[२] कथ्यमानशंसनादौ[३] कर्मणि, द्यावा-पृथिव्यादौ सर्वस्मिन्नियामकत्वादिरूपेणान्तर्गतस्य भगवत एव परब्रह्मत्वा-वधारणाच्च, न कर्मादेर्ब्रह्मत्वं वेदाद्यर्थ इति भावेनाह – **एतमिति** ॥

**(भा)** 'एतं ह्येव बह्वृचाः' इत्यादि च ।

**(टी)** 'ब्रह्माख्ये[४] कर्मणि समाधिर्यस्य' इत्यन्ये[५] । तत्पक्षे समाधेः ब्रह्माधीनत्वं नोक्तं स्यादिति तद्व्युदासार्थमाह – **समाधिनेति**[६] ॥२४॥

**(भा)** समाधिना सह ब्रह्मैव कर्म ॥२४॥

**(टी)** 'कुरु कर्म' इत्युक्त्वा, तस्य कर्मणः स्वरूपमभिहितं 'कर्मणि' इत्यादिना । तदपि यज्ञदानाद्यात्मकम् । तत्रायज्ञस्यायं परं च लोकः सुखवासो न भवतीति ज्ञापयितुं, सर्वाश्रमियोग्यान् यज्ञविशेषानाहेत्यभिप्रायेणोत्तरं प्रघट्टकमवतारयति – **यज्ञभेदानिति** ॥

---

१. ऐतरेयोपनिषत् २/५/३

२. ऐतरेयोपनिषत् २/८/३-७

३. उक्थशंसनादौ – पा

४. ब्रह्माख्ये च – पा

५. ब्रह्म एव कर्म ब्रह्मकर्म । तस्मिन् समाधिर्यस्य स ब्रह्मकर्मसमाधिः । – **शाङ्करभाष्यम्**
ब्रह्मात्मकं कर्म ब्रह्मकर्म । तस्मिन् कर्मणि समाधिर्यस्यासौ ब्रह्मकर्मसमाधिस्तेन ।
– **भास्करभाष्यम्** ।

६. ब्रह्मकर्म ब्रह्मविषयः समाधिर्यस्यासौ तथोक्त इति व्याख्यानं प्रक्रमविरुद्धमिति भावेनान्यथा व्याख्याति – समाधिनेति ॥ समाधिरपि ब्रह्मेत्यर्थः । – **प्र.दी.**

(भा) यज्ञभेदानाह – दैवमित्यादिना ॥

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥२५॥**

**(टी)** 'दैव'शब्दस्येष्टवाचित्वात् 'देवा इज्यन्ते[१] यस्मिन् यज्ञे स दैवयज्ञः' इत्यन्यैर्व्याख्यातत्वाच्च[२], पक्षद्वयप्रतीतावत्र भगवद्विवक्षितं दैवशब्दार्थं तावदाह – **दैवमिति** ॥

(भा) दैवं **भगवन्तम्** ।

**(टी)** ननु यदि दैवशब्दोक्तं भगवन्तमुपासत इति वाक्यार्थः, न तु दैवाख्यं यज्ञं कुर्वत इति, तर्हि कथं यज्ञभेदा उच्यन्तेऽस्मिन् प्रघट्टके? इत्यत आह – **स एवेति** ॥

(भा) **स एव तेषां यज्ञः** ।

**(टी)** ननु 'सः' इत्यनेन भगवत्तदुपासनयोर्मध्ये किं परामृश्यते? इत्यत आह – **भगवदुपासनमिति** ॥

(भा) **भगवदुपासनम्**[३],

**(टी)** नन्वस्मिन् पक्षे कथं यज्ञशब्दान्वयः? इत्यत आह – **यज्ञमिति** ॥

(भा) **यज्ञमिति क्रियाविशेषणम्** ।

(टी) उपासनं यथा यज्ञो भवति तथोपासत इत्यर्थः ।

---

१. **दैवमदृष्टमिज्यते** – पा
२. दैवमेव । देवा इज्यन्ते येन यज्ञेनासौ दैवो यज्ञः । – **शाङ्करभाष्यम्**
३. भगवदित्यादिकं क्रियाविशेषणत्वप्रदर्शनार्थमेकमेव वाक्यम् । – **प्र.दी.**

'एव'कारार्थमाह – **नान्यदिति** ॥

**(भा) नान्यत् तेषामस्ति यतीनां केषाञ्चित् ।**

**(टी)** षष्ठे चैतद्विस्तारयिष्यति । 'दैव'शब्दस्य यज्ञविशेषत्व एवकारो व्यर्थः स्यात् । पितृयज्ञादेरपि तैरेव क्रियमाणत्वात् ।

यज्ञस्याध्वरे प्रसिद्धत्वेऽप्युत्तरार्धगतप्रथमयज्ञशब्दो भगवद्विषय एवेत्येतत् सप्रमाणकमाह – **यज्ञमिति** ॥

**(भा) यज्ञं भगवन्तम् । 'यज्ञेन यज्ञम्'[1], 'यज्ञो विष्णुर्देवता' इत्यादि-श्रुतिभ्यः ।**

**(टी)** द्वितीयस्त्वध्वर एवेत्याह – **यज्ञेनेति** ॥

**(भा) यज्ञेन प्रसिद्धेनैव ।**

**(टी)** 'दध्ना जुहोति' इत्यादिवत् 'यज्ञेन जुहोति' इति दधिप्रक्षेपेण होमोत्पत्तिवद्यज्ञार्पणेन होमोत्पत्तेरित्यर्थः[2] ।

एतेनैतदपि प्रत्युक्तम् । यदाहुरन्ये 'यज्ञाख्यं स्वात्मानं यज्ञाख्येन स्वात्मनैव ब्रह्माख्याग्नौ प्रक्षिपन् सोऽयं ज्ञानयज्ञः' इति[3] । तत्पक्षे जीवब्रह्मणोराधाराधेयादे-

---

१. ऋग्वेदे ८/४/१९-२०

२. एतदनुसारेणैव **श्रीविद्याधिराजतीर्थाश्च** – 'यथा दध्ना जुहोति' इत्यत्र दधिप्रक्षेपेण होमनिष्पत्तिस्तथाऽत्रापि यत्रार्पणेनेत्यर्थः । – इति ।

३. ब्रह्म च तदग्निश्च स होमाधिकरणत्वविवक्षया ब्रह्माग्निः । तस्मिन् ब्रह्माग्नौ । अपरे अन्ये ब्रह्मविदः । यज्ञं यज्ञशब्दवाच्य आत्मा । आत्मनामसु यज्ञशब्दस्य पाठात् । तमात्मानं यज्ञं परमार्थतः परमेव ब्रह्म सन्तं बुद्ध्याद्युपाधिसंयुक्तमध्यस्तसर्वोपाधिधर्मकमाहुतिरूपं यज्ञेनैवात्मनैवोक्तलक्षणेनोपजुह्वति प्रक्षिपन्ति । सोपाधिकस्यात्मनो निरुपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं स तस्मिन् होमः तं कुर्वन्ति ब्रह्मात्मैक्यत्वदर्शननिष्ठाः सन्न्यासिन इत्यर्थः । **– शाङ्करभाष्यम्**

मिथ्यात्वेनैव न ज्ञानयज्ञः स्यात् । न च तयोरेकत्वचिन्तनं होमम्[१] । अश्रुतकल्पनाप्रसङ्गात् । होमबुद्ध्यनुत्पत्तेश्चेत्येषा दिक्[२] ।

ननु प्रथमयज्ञशब्दस्य हरिविषयत्वे कथमत्रान्वयः? इत्याशङ्क्य, 'तं यज्ञम्' इत्यादाविव 'यज्ञं प्रति जुह्वति' इति स्थानचतुष्टयेऽप्यन्वयसम्भवादिति भावेनाह – यज्ञं प्रतीति ॥

**(भा)** यज्ञं प्रति जुह्वतीति सर्वत्र समं, 'तं यज्ञम्'[३] इत्यादौ ।

**(टी)** तं पुरुषं पशुं, यज्ञं भगवन्तं प्रति बर्हिषि यज्ञे प्रौक्षन्नित्यर्थः ।

'तं यज्ञम्' इत्यस्योक्तार्थत्वे प्रमाणमाह – उक्तं चेति[४] ॥२५॥

**(भा)** उक्तं च –

'विष्णुं रुद्रेण पशुना ब्रह्मा ज्येष्ठेन सूनुना ।
अयजन्मानसे यज्ञे पितरं प्रपितामहः ॥' इति ॥२५॥

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥२६॥**

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥२७॥**

**(भा)** आत्मसंयमाख्योपायाग्नौ ॥२७॥

---

यज्ञेनात्मनात्मसमीपवर्तिना मनसोपजुह्वति । ब्रह्मात्मनोरेकीकरणं विवक्षितम् ।
– भास्करभाष्यम्

१. होमः – पा
२. -श्चेत्यादि दिक् – पा
३. तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः । – ऋग्वेदे ८/४/१८
४. एवं तर्ह्यग्रतो जातं तं पुरुषं यज्ञं भगवन्तं प्रति बर्हिषि प्रौक्षन्नित्यर्थः स्यात् । स च निर्मूल इत्यत आह – उक्तं चेति ॥ – प्र.दी.

**(टी)** आत्मा अन्तःकरणम् । तस्य संयमे सतीन्द्रियादिसंयमो भवतीति तस्योपायतेति[१] भावः[२] ॥२७॥

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः[३] ॥२८॥**

**(टी)** यथैतेषु यज्ञशब्दप्रत्ययौ स्याताम्, तथैतान् द्रव्ययज्ञादीन् निरूपयति – **द्रव्यमित्यादिना** ॥

(भा) द्रव्यं जुह्वतीति द्रव्ययज्ञाः ।

**(टी)** द्रव्यं सोमादि ।

न तापसा[४] एव तपोयज्ञाः । किन्तु वक्ष्यमाणप्रकारेण[५] तद्भगवत्यर्पित एवेति भावेनाह – **तप इति** ॥

(भा) तपः परमेश्वरार्पणबुद्ध्या तत्र जुह्वतीति तपोयज्ञा इत्यादि ।

(टी) आदिशब्देन योगं परमेश्वरार्पणबुध्या परमेश्वरे जुह्वतीति योगयज्ञा इत्यादि ।

एतदेव विवृणोति – **इदमित्यादिना** ॥

---

१. -तेति हि भावः – पा

२. गीतागतयोगशब्दार्थो य उपाय इतीति भावः । विवृतं च प्राचीनटीकायाम् ''आत्मनोऽन्तःकरणस्य संयमे सति इन्द्रियादिसंयमो भवतीति तस्योपायता'' इति ।
**– भावरत्नकोशे**

आत्मसंयमाख्यो य उपायः स एवाग्निः । **– प्र.दी.**

३. शंसितव्रताः – पा

४. तापवशाः – पा

५. तदर्पण एव च होमबुद्धिः – इत्यनुपदमेव **भाष्ये**

(भा) इदं तपो हविः, एतद्ब्रह्माग्नौ जुहोमि तत्पूजार्थमिति होमः । तदर्पण एव च होमबुद्धिः ॥२८॥

**(टी)** तस्य तपसो ब्रह्मण्यर्पणे सत्येव होमबुद्धिः, न तु तपश्चरणमात्रे सतीत्यर्थः[१] ॥२८॥

**अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥२९॥**

**(टी)** 'अपाने' इत्यादिश्लोकस्य पूरणरेचककुम्भकपरत्वेन [२]यदपव्याख्यानम्, तन्निराकुर्वन् यथार्थमाह – अपर इति ॥

---

१. ''तस्य तपसो ब्रह्मण्यर्पणे सत्येव होमबुद्धिः, न तु तपश्चरणमात्रे सतीत्यर्थः'' इति 'तदर्पण एव च होमबुद्धिः' इति भाष्यं व्याख्यातं प्राचीनटीकायामिति तत्तात्पर्यमाह – अनेनैवेति । – **भावरत्नकोशे**

अनेनैव प्रकारेण यज्ञत्वसम्पादनम्, नान्यथेत्यर्थः । – **प्र.दी.**

२. अपाने अपानवृत्तौ जुह्वति प्रक्षिपन्ति, प्राणं प्राणवृत्तिं पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । प्राणेऽपानं तथाऽपरे जुह्वति रेचकाख्यं च प्राणायामं कुर्वन्तीत्येतत् । प्राणापानगती मुखनासिकाभ्यां वायोर्निर्गमनं प्राणस्य गतिः । तद्विपर्ययेण अधोगमनमपानस्य ते प्राणापानगती । एते रुद्ध्वा निरुद्ध्य प्राणायामपरायणाः । प्राणायामतत्पराः कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । – **शाङ्करभाष्यम्**

अपाने पूरणवृत्तौ प्राणं रेचकवृत्तिं जुह्वति । मस्तकमध्यवर्तिनी सुषुम्ना नाडी । तद्वारेण बाह्यं वायुमन्तःप्रवेशयन्ति । आदित्यमण्डलादारभ्य हृदये चित्तप्रवेशानुसारी वायुः प्रवेशितो भवति । अथ विपर्ययेण प्राणे रेचकवृत्तौ पूरणवृत्तिं यावदादित्यस्तावच्चित्तवृत्तिमूर्ध्वामुद्गमयन्ति सोऽयं ब्रह्मपथो योगिनामुत्क्रान्तिकाले सम्यगभ्यस्त उपयुज्यते । प्राणापानगती प्राणापानवृत्ती रुद्ध्वा निरुद्ध्य यतिवच्छरीरं कुम्भकवृत्त्या पूरयित्वा कुम्भकप्राणायामपरायणाः । – **भास्करभाष्यम्**

अपरे कर्मयोगिनः प्राणायामेषु निष्ठां कुर्वन्ति । ते च त्रिविधाः । पूरकरेचककुम्भकभेदेन । अपाने जुह्वति प्राणमिति पूरकः । प्राणेऽपानमिति रेचकः । प्राणापानगती रुद्ध्वा प्राणान् प्राणेषु जुह्वतीति कुम्भकः । – **रामानुजभाष्यम्**

(भा) [१]अपरे प्राणायामपरायणाः प्राणमपाने जुह्वति, अपानं च प्राणे । कुम्भकस्था एव भवन्तीत्यर्थः ॥२९॥

**(टी)** येऽपरे **प्राणायामपरायणाः** ते प्राणापानगती रुध्वा, रेचनपूरणे हित्वा, प्राणापानावितरेतरयोः जुह्वति[२] । अस्यायं फलितार्थः '**कुम्भकस्थाः**' इत्युत्तरार्धोक्तम् ॥२९॥

**अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥३०॥**

**(टी)** तत्रैव तद्धोमं घटयति – **नियताहारत्वेनेति** ॥

(भा) **नियताहारत्वेनैव प्राणशोषात् प्राणान् प्राणेषु जुह्वति ।**

**(टी)** यथास्थितानामपीन्द्रियाणां नियताहारत्वे सत्यग्नौ हुताहुतीवच्छोषदर्शनात् तेष्वेव तेषां होम इति भावः ।

यद्वा, मनआदिषु वागादिहोम[३] उत्तरार्धोक्त इत्याह – **यच्छेदिति** ॥

(भा) **'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि'**[४] **इत्यादिश्रुत्युक्तप्रकारेण वा ।**

---

१. 'अपाने जुह्वति' इत्येतत् पूरकरेचककुम्भकपरतया केचिद्व्याचक्षते । तदसत् । अध्याहारादिप्रसङ्गात् । पूरकरेचकयोः कुम्भकार्थत्वेन पृथक् प्राणायामत्वाभावाच्चेति भावेन कुम्भकमात्रपरतया योजयति – अपर इति ॥ **– प्र.दी.**

२. ''प्राणापानगती रुद्ध्वा, रेचनपूरणे हि प्राणापानौ इतरेतरयोर्जुह्वति'' इति व्याख्यातं प्राचीनटीकायाम् । **– भावरत्नकोशे**

परायणा इत्यतः परं प्राणापानगती रुद्ध्वा इति द्रष्टव्यम् **– प्र.दी.**

३. **वागादिषु मनआदिहोमः – पा**

४. **काठकोपनिषत् १/७/१३**

**(टी)** नन्वविरोधात्[१] श्रुतत्वाच्च, एवमेव[२] व्याख्यानं किं न स्यात्? इत्यत आह – **अन्यदिति** ॥३०॥

**(भा)** अन्यदपि ग्रन्थान्तरे सिद्धम् – 'यदस्याल्पाशनं तेन प्राणाः प्राणेषु वै हुताः' इति ॥३०॥

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥३१॥**
**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥३२॥**

**(टी)** 'नन्वहं मुमुक्षुरन्यदैवत्यज्योतिष्टोमादियज्ञं कथं करिष्यामि?' इति भ्रान्त्या स्वविहितो यज्ञो न त्याज्य इति च सूचनाय यदुक्तं भगवता परब्रह्मण एव सर्वयज्ञभोक्तृत्वम् 'एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे' इति ।

तदन्यैराच्छादितं – 'ब्रह्मणो वेदस्य वेदसिद्धा एव च ते[३] यज्ञाः' इति[४] । अतः पुनर्भगवद्भावप्रकाशाय ब्रह्मशब्दार्थमाह – **ब्रह्मण इति**[५] ॥

**(भा)** ब्रह्मणः **परमात्मनो मुखे** ।

---

१. नन्वन्यविरोधात् – पा
२. श्रुतत्वाच्च इदमेव – पा
३. चैते – पा
४. एवं यथोक्ता बहुविधा बहुप्रकारा यज्ञा वितता विस्तीर्णा ब्रह्मणो वेदस्य मुखे द्वारे । – **शाङ्करभाष्यम् ।**
एवमुक्तेन प्रकारेण ब्रह्मणो मुखे । ब्रह्म वेदः । तस्य मुखं द्वारमुपलब्धिस्थानम् । वेदवाक्येषु विततः प्रथिताः । – **भास्करभाष्यम्**
५. ब्रह्मणो मुखे वितता इत्यस्य वेदे प्रतिपादिता इति व्याख्यानमसत् । मुखशब्दवैयर्थ्या-दित्यभिप्रायेणाह – ब्रह्मण इति ॥ – **प्र.दी.**

**(टी)** कथमयं भावो भगवतः? इत्यत आह – **अहं हीति** ॥

(भा) 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च'[१] इति हि वक्ष्यति ।

**(टी)** ननु भवतु सर्वो यज्ञो विष्णुदैवत्यः । तथाऽपि 'सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः'[२] इति सर्वकर्मणां दोषावृतत्वोक्तेर्न कर्मात्मकं युद्धाश्वमेधादियज्ञं करोमि, किन्त्वकर्मात्मकं ज्ञानादियज्ञमित्याशङ्कापरिहारत्वेनोत्तरार्धं व्याचष्टे – **मानसेति** ॥

(भा) **मानसवाचिककायिककर्मजा एव हि ते सर्वे । एवं ज्ञात्वा, तानि कर्माणि कृत्वा, विमोक्ष्यसे ।**

**(टी)** नन्वत्र **तानि कर्माणि** कृत्वा इत्ययमंशः कथमागच्छति? इत्यत आह – **युद्धमिति** ॥३२॥

(भा) युद्धं परित्यज्य यन्मोक्षार्थं करिष्यसि तदपि कर्म । अतो विहितं न त्याज्यमिति भावः ॥३२॥

**श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥३३॥**

**(टी)** सर्वपदागतार्थत्वेनाखिलपदार्थमाह – **अखिलमिति** ॥

(भा) अखिलम् उपासनाद्यङ्गयुक्तम् ।

**(टी)** 'तां ध्यात्वा वषट्करिष्यन्'[३] इत्यादिवचनादस्ति कर्माङ्गमप्युपासनम् । तदादिभिरङ्गैर्युक्तमखिलमित्यर्थः[४] ।

---

१. गी. ९/२४ २. गी. १८/४८

३. तां ध्यायेत् वषट्करिष्यन् – पा

४. सर्वं कर्म अखिलं 'तां ध्यायेत् वषट्करिष्यन्' इत्याद्युपासनाद्यङ्गसहितं ज्ञाने ज्ञानो-

'ज्ञाने परिसमाप्यते' इत्यस्यार्थमाह – **ज्ञानफलमेवेति** ॥

**(भा) ज्ञानफलमेवेत्यर्थः ॥३३॥**

**(टी)** ज्ञानं फलं यस्य तत् ज्ञानफलम् । द्रव्ययज्ञादि सर्वं कर्म स्वस्वाङ्गजातयुक्तं यदि ज्ञानं जनयति तर्ह्येव तत्पूर्णं नान्यथेत्यर्थः[1] ॥३३॥

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥३४॥**

**(टी)** न च 'तद्विद्धि' इत्यादिनाऽर्जुनस्याज्ञानिता शङ्कनीयेत्याह – **इदानीमिति** ॥

**(भा) इदानीमपि ज्ञान्येव । तथाऽप्यभिभवान्मोहः ।**

**(टी)** तत्र प्रमाणं द्वितीयाध्याय[2] उक्तमित्याह – **मा त्विति** ॥

**(भा) मा तूक्ता ॥३४॥**

---

त्पत्तौ । परिसमाप्यते उपक्षीणं भवति । ज्ञानफलमेवेत्यर्थः । – **श्रीविद्याधिराजतीर्थाः**

ननूपासनायाः कर्मसाध्यत्वात् कथं कर्मप्रत्यङ्गत्वमुच्यत इत्यत आह – **कर्मसमृद्ध्यर्थानीति** ॥ कर्मणां सम्पूर्णफलावास्यर्थान्यपि कानिचिदुपासनानि वेद एव उच्यन्त इति तेषां कर्माङ्गत्वमुपपद्यत इति भाष्ये तथोक्तमिति भावः । तथा च प्राचीनटीकायां '' 'ध्यात्वा वषट्करिष्यन्' इत्यादिवचनादस्ति कर्माङ्गमुपासनम्'' इति । **भावरत्नकोशे**

कर्मसमृद्ध्यर्थान्युपासनानि वेद एवोच्यन्ते । **– प्र.दी.**

१. ''ज्ञानं फलं यस्य तज्ज्ञानफलम् । द्रव्ययज्ञादि सर्वं कर्म स्वस्वाङ्गजातयुक्तं यदि ज्ञानं जनयति तर्ह्येव तत्परिपूर्णं नान्यथेत्यर्थः'' इति प्राचीनटीकायां भाष्यार्थस्य स्फुटत्वादत्र भावमात्रमुक्तम् । **– भावरत्नकोशे**

ज्ञानेति ॥ परिसमाप्तिः सम्पूर्णता सफलता । सा च ज्ञाने सतीति सन्निधानात् ज्ञानलक्षणेनैव फलेनेति भावः । **– प्र.दी.**

२. २/४७

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥३५॥**

**(टी)** 'यत्' इत्यादिश्लोकोत्तरार्धं व्याचष्टे – येनेति ॥

**(भा)** येन ज्ञानेन ।

**(टी)** आत्मनीत्युक्ते त्वयीति शङ्का स्यात् । तद्व्यावृत्त्यर्थं 'मयि' इति । न च त्वदादिवदहं परिच्छिन्न इत्येतदर्थम् 'आत्मनि' इति[१] । एतदेवाह – मय्यात्मभूत इति[२] ॥३५॥

**(भा)** मयि आत्मभूते सर्वभूतानि अथो तस्मादेव **मोहनाशात्** पश्यसि ॥३५॥

**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥३६॥**

**यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥३७॥**

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥३८॥**

**(टी)** 'अपि चेदसि' इत्यादेरर्थमाह – **करणभूतमिति** ॥

**(भा)** **करणभूतं ज्ञानं स्तौति पुनः श्लोकत्रयेण** ॥३६-३८॥

---

१. 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते' इति आत्मशब्दो निरुक्तः **भारते** ।

२. न च त्वदादिरिवाहं परिच्छिन्न इति ज्ञापयितुमात्मनीत्युक्तमित्यभिप्रेत्याह – मय्यात्मभूत इति ॥ इति भाष्यावतारस्य प्राचीनटीकात अवगमात् तदर्थमाह – आत्मभूते सर्वान्तर्यामिणीति । – **भावरत्नकोशे**

**(टी)** 'श्रेयान्' इत्यादिश्लोकत्रयेणापि ज्ञानमेव स्तुतमिति सूचयति पुनः-शब्देन । स्तुतिप्रकारभेदात् त्रिकविभागः ॥३६-३८॥

उत्तरश्लोकत्रयस्य सैकस्यार्थमाह – तत्साधनमिति ॥

(भा) तत्साधनं विरोधिफलं च तदुक्तैरुक्त्वोपसंहरति ॥३९-४२॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये चतुर्थोऽध्यायः ॥

**श्रद्धावाँल्लभते ज्ञानं मत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥३९॥**

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४०॥**

**योगसन्न्यस्तकर्माणं ज्ञानसञ्छिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥४१॥**

**तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥४२॥**

**॥ इति श्रीमद्भगवद्गीतायां चतुर्थोऽध्यायः ॥**

**(टी)** ज्ञानसाधनं, ज्ञानविरोधि, ज्ञानतद्विरोधिनोः फलं च[१]। तत्र विरोधिफलं विनाशादि । ज्ञानफलं बन्धपरिहारोऽप्रतिहतविष्णुनिष्ठाबुद्धेः सुखरूपिणी ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां चतुर्थोध्यायः ॥**

१. 'ज्ञानसाधनं ज्ञानविरोधि ज्ञानतद्विरोधिनोः फलम्' इति प्राचीनटीकां मनसि निधायाह – तस्येत्यादि ॥ – भावरत्नकोशे

तस्य ज्ञानस्य साधनम् अन्तरङ्गं श्रद्धादिकम् । विरोधि अज्ञानादिकम् । ज्ञानस्य फलं परशान्त्यादिकम् । विरोधिनः फलं विनाशादिकमिति ॥ – प्र.दी.

# पञ्चमोऽध्यायः

(टी) नन्वाद्यं षट्कं प्राधान्येन साधनपरम्।[१] मोक्षसाधनं ज्ञानम्, तत्साधनं च कर्म सम्यगेवोक्तमतीताध्यायैः। अतः किं [२]पञ्चमेन? इत्याकाङ्क्षायामाह – तृतीयेति ॥

(भा) तृतीयाध्यायोक्तमेव कर्मयोगं प्रपञ्चयत्यनेनाध्यायेन।

(टी) ननु तृतीयसङ्गतस्याध्यायस्य चतुर्थानन्तर्ये को हेतुः? इत्याकाङ्क्षां परिहरन्नेवाद्यं श्लोकं व्याख्यातुमुपक्रमते – यदृच्छेति ॥

(भा) 'यदृच्छालाभसन्तुष्टः'[३] इत्यादि सन्न्यासम्, 'कुरु कर्मैव'[४] इत्यादि कर्मयोगं च।

(टी) 'यदृच्छालाभ..' इत्यादिचतुर्थाध्यायोक्तकर्मसन्न्यासकर्मयोगविषया[५]-काङ्क्षोत्तरत्वेन तृतीयाध्यायोक्तप्रपञ्चात्मकत्वादस्य चतुर्थाध्यायानन्तर्यमिति भावः[६]।

**अर्जुन उवाच**

**सन्न्यासं कर्मणां कृष्ण पुनर्योगं च शंससि।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥१॥**

---

१. आद्ये षट्के प्राधान्येन साधनपरे – पा

२. प्रपञ्चने० – पा

३. गी. ४/२२

४. गी. ४/१५

५. -कर्मन्यासकर्मयोगविषया० – पा

६. चतुर्थाध्यायोक्तस्यार्थस्यैतदध्यायोत्थानबीजत्वात् तृतीयाध्यायप्रपञ्चनात्मकस्याप्यस्य चतुर्थानन्तर्यं युक्तमित्यनेन ज्ञापितम्। – प्र.दी.

(टी) न केवलं सन्न्यासं कर्मयोगं च शंससि, किन्तु कारयस्यपीति भावेन कृष्णेति सम्बोधितो भगवानर्जुनेनेत्यभिप्रायेण 'कृष्ण'शब्दार्थं सप्रमाणकमाह – **नियमनादिनेति**[1] ॥

**(भा) नियमनादिना सकललोककर्षणात् कृष्णः ।**

**'यतः कर्षसि देवेश नियम्य सकलं जगत् ।**

**अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः' इति महाकौर्मे ।**

(टी) द्वन्द्वत्याग एवात्र सन्न्यासः, न माय्युक्तप्रकारेण[2] निष्क्रियपरमात्माऽहमिति ज्ञानेन शास्त्रीयसर्वकर्मप्रहाणमिति भावेनाह – **सन्न्यासशब्दार्थमिति** ॥

**(भा) सन्न्यासशब्दार्थं भगवानेव वक्ष्यति ।**

(टी) ननु यदि द्वन्द्वत्याग एवात्र सन्न्यासः, तर्हि सन्न्यासकर्मयोगयोरेकेनापि कर्तुं शक्यत्वात् तयोरन्यतरं मे ब्रूहीति प्रश्नोऽनुपपन्न इत्यत आह – **अयमिति** ॥

---

१. योगसन्न्यासकारयितृत्वात् तयोः श्रेयो जानात्येव भगवानित्यभिप्रायेण प्रयुक्तकृष्णशब्दार्थमाह –नियमनादिना ॥ – **भावप्रदीपिका**

''न केवलं सन्न्यासं कर्मयोगं च शंससि, किन्तु कारयस्यपि'' इति भावेन 'कृष्ण' इति सम्बोधनेऽभिप्राय उक्तः प्राचीनटीकायाम् । – **भावरत्नकोशे**

मुद्रितपुस्तके प्रकरणभेदः प्रामादिकः ।

२. जन्मादिसर्वविक्रियारहितत्वेन निष्क्रियमात्मानमात्मत्वेन यो वेत्ति यस्यात्मविदः सम्यग्दर्शनेनापास्तमिथ्याज्ञानस्य निष्क्रियात्मस्वरूपावस्थानलक्षणं सर्वकर्मसन्न्यासमुक्त्वा तद्विपरीतस्य मिथ्याज्ञानमूलकर्तृत्वाभिमानपुरःसरस्य सक्रियात्मस्वरूपावस्थानरूपस्य कर्मयोगस्येह शास्त्रे तत्र तत्रात्मस्वरूपनिरूपणत्वप्रदेशेषु सम्यज्ज्ञानमिथ्याज्ञानतत्कार्यविरोधादभावः प्रतिपाद्यते यस्मात्, तस्मादात्मविदो निवृत्तमिथ्याज्ञानस्य विपर्यय ज्ञानमूलः कर्मयोगो न सम्भवतीति युक्तमुक्तं स्यात् । – **शाङ्करभाष्यम्**

(भा) अयं प्रश्नाशयः – यदि सन्न्यासः श्रेयोऽधिकः स्यात् तर्हि सन्न्यासस्येषद्विरोधि युद्धमिति ॥१॥

(टी) यदि कर्मयोगोऽधिकः स्यात्[१] तर्ह्येव युद्धं विधीयेत, यदि तु सन्न्यासः न तर्हि तद्विधानं घटते । युद्धस्य कामक्रोधात्मकत्वात्, तत्त्यागात्मकत्वाच्च सन्न्यासस्येति भावः ।

अमुख्याधिकारिषु युद्धकरणकामक्रोधहानयोर्विरोधित्वेऽपि मुख्याधिकारिष्वविरोधात् ईषद्विरोधि इति[२] ॥१॥

**श्रीभगवानुवाच–**

**सन्न्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसन्न्यासात् कर्मयोगो विशिष्यते ॥२॥**

नन्वेतत्प्रश्नपरिहारविषयौ द्वन्द्वत्यागकर्मयोगौ कस्मात् ? यत्याश्रमकर्मयोगौ किं न स्याताम् ? इत्याशङ्क्य, द्वन्द्वत्यागादेव सन्न्यासात् कर्मयोगस्याधिकवचनात्, यत्याश्रमात् गृहस्थादिकर्मणामाधानाग्निहोत्रादीनामवरत्ववचनाच्च, इति भावेनाह – **नायमिति**[३] ॥

---

१. सन्न्यासात् – पा

२. अत एव एवमपि प्रश्नस्य घटनीयत्वादेव । प्राचीनटीकायां तु – "अमुख्याधिकारिषु युद्धकरणे कामक्रोधादिप्रसक्त्या विरोधित्वेऽपि मुख्याधिकारिष्वविरोधादीषदित्युक्तम्" इत्युक्तम् । – **भावरत्नकोशे**

नन्वेतत् 'घोरे' इति चोदितं, 'श्रेयान्' इति परिहृतं च । सत्यम् । अत एवात्र ईषदित्युक्तम् । – **प्र.दी.**

३. नायमिति ॥ अयं परिहारवाक्यस्थः । प्रश्नवाक्यस्थस्य तात्पर्यनिर्णये तथाभ्युपगतत्वात् – इति तु **प्रमेयदीपिकायाम्** । भावप्रदीपिकायां तु 'नन्वेवं प्रश्नाभिप्रायकथनादपि वरं सन्न्यासपदोक्तयत्याश्रमयोगपदोक्तपारमहंस्ययोः किं वरमित्यभिप्रायकथनमित्यत आह – नायमिति ॥' इत्युक्तम् ।

(भा) नायं सन्न्यासो यत्याश्रमः –

'द्वन्द्वत्यागात् तु संन्यासात् मत्पूजैव गरीयसी' इति वचनात् ।
'तानि वा एतान्यवराणि तपांसि, न्यास एवात्यरेचयत्'[1] इति च ।

(टी) यान्येतानि आधानाग्निहोत्रादीनि तपांसि तान्यवराणि वै न्यास एवात्यरेचयत् अधिकोऽभवदित्यर्थः[2] । 'एतत् खलु वाव[3] तप इत्याहुः, यः स्वयं सन्ददाति[4]' इति तपस्त्वेन श्रूयमाणदक्षिणादानपूर्वत्वात् तपस्त्वमाधानादीनाम्[5] ।

ननु यत्याश्रमादपि सन्न्यासाद्वरः[6] कर्मयोगः । सन्न्यासस्य निष्क्रियत्वात्, अनिष्टपरिहारमात्रत्वेनाल्पफलत्वात्, [7]कर्मयोगासमर्थवृद्धान्धपङ्ग्वाद्यधिकारित्वाच्च । कर्मयोगस्य तु वेदाद्युक्तसर्वकर्मानुष्ठानलक्षणत्वात्, स्वर्गादिसर्वेष्टफलत्वात्, समर्थाधिकारित्वाच्च । अतो यत् सन्न्यासस्य कर्मयोगादाधिक्यवचनं वेदे तदुत्तमे वयस्यनुष्ठीयमानत्वेनोपचारमात्रमित्याशङ्कापरिहारत्वेन नारदीयवाक्यमुदाहरति – **सन्न्यासस्त्विति**[8] ॥

---

१. महानारायणोपनिषत् १६/१२
२. अत्यरेचयत् – अतिरिच्यत इति । अधिको भवतीत्यर्थः । ''अधिकोऽभवत्'' इति प्राचीनटीकारीत्या अत्रापि 'अत्यरिच्यत' इत्यपि भवति । – **भावरत्नकोशे**
अत्यरेचयत् – अतिरिच्यत ॥ – **प्र.दी.**
३. वाऽत्र – पा, वा च – पा
४. यत् स्वं ददाति – पा
५. 'एतत् खलु वाव तप इत्याहुः, यः स्वयं सन्ददाति' इति यजुःसंहितावाक्योदाहरणपूर्वकं ''तपस्त्वेन श्रूयमाणदक्षिणादानपूर्वत्वात् तपस्त्वमाधानादीनाम्'' इति प्राचीनटीकायां कृता । – **भावरत्नकोशे**
६. न्यासाद्वरः – पा
७. कर्मयोगासमर्थाधिकारित्वाच्च – पा
८. गृहस्थाश्रमाद्यत्याश्रमस्योत्तमत्वमयुक्तम् । गृहस्थाश्रमो हि सर्वधर्मोपपन्नः । तत्समर्थे

(भा) 'संन्यासस्तु तुरीयो यो निष्क्रियाख्यः सधर्मकः ।
न तस्मादुत्तमो धर्मो लोके कश्चन विद्यते ।
तद्भक्तोऽपि हि यद्गच्छेत् तद्गृहस्थो न धार्मिकः ।
मद्भक्तिश्च विरक्तिस्तदधिकारो निगद्यते ।
यदाऽधिकारो भवति ब्रह्मचार्यपि प्रव्रजेत्' इति नारदीये ।

(टी) कुटीचकात् तुरीयो यः [१]पारमहंस्यलक्षणसन्न्यासः[२] स बाह्यकर्मसङ्कोचेन निष्क्रियाख्योऽपि स्वविहितासाधारणमहाधर्मत्वेन **सधर्मकश्च** । अतो क्रियत्वाद्वक्रियत्वाद्वा न तस्य कर्मयोगादवरत्वम् । सन्न्यासिभक्तोऽपि धार्मिकगृहस्थप्राप्यान्महदिष्टं प्राप्नोति, किमुत सन्न्यासीति । नानिष्टपरिहारमात्रत्वेनाल्पफलत्वादवरत्वं सन्न्यासस्य । नापि कर्मयोगासमर्थाधिकारत्वेनावरत्वं सन्न्यासस्य । धर्ममात्रदुर्लभहरिभक्तीतरविरक्त्योः सन्न्यासाधिकारिविशेषत्वात् । अतो यदा हरिभक्तीतरविरक्ती भवतः तदेव सन्न्यसेत् **ब्रह्मचर्यादपि**, न चरमे वयसीति नियमः । अतो यदुक्तम् **न्यास**[३] **एवात्यरेचयत्** इति तन्मुख्यमेव । नोत्तमे वयस्यनुष्ठीयमानत्वेन उपचारमात्रमित्यर्थः ।

हरिभक्तीतरविरक्त्योरेव सन्न्यासाधिकारिविशेषणत्वमित्येतच्छ्रुत्याऽपि समर्थयति – **ब्रह्मचर्यादिति**[४] ॥

---

मध्यमे वयस्यनुष्ठेयो महाफलश्च । यत्याश्रमस्तु निष्क्रियश्चरमे वयसि गृहस्थकर्मानधिकृतैरन्धपङ्ग्वादिभिरनुष्ठेयोऽल्पफलश्चेति केचित् । तन्निरासार्थमाह सन्न्यासस्त्विति ॥ **प्रदी.**

१. **परमहंसलक्षणः सन्न्यासः** – पा

२. 'सन्न्यासस्तु तुरीयः' इत्यस्य कुटीचकात् तुरीयः सन्न्यासः परमहंसलक्षण इति प्राचीनटीका । – **भावरत्नकोशे**

३. **सन्न्यास** – पा

४. ''हरिभक्तीतरविरक्त्योरेव सन्न्यासाधिकारिविशेषणत्वमित्येतच्छ्रुत्याऽपि समर्थयते – ब्रह्मचर्यादेव'' इत्यवतारितं प्राचीनटीकायाम् । – **भावरत्नकोशे**

**(भा) 'ब्रह्मचर्यादेव प्रव्रजेत्', 'यदहरेव विरजेत्'[१] इति च ।**

(टी) **विरजेदिति** ॥ हरौ विशिष्टरागोऽन्यत्र विरागो भवेदित्यर्थः[२] । अतः कर्मकरणासमर्थानामेव सन्न्यास इति मत्वा न तस्यावरत्वं कल्पनीयम् ।

भगवदतिप्रीतिविषयत्वात्, तदनधिकारिणामेव कर्मविधानाच्च, वरः सन्न्यासस्तुरीय इत्येतत् [३]ब्रह्मपुराणवाक्येनाह – **सन्न्यासेति**[४] ॥

**(भा) 'संन्यासे तु तुरीये वै प्रीतिर्मम गरीयसी ।**
**येषामत्राधिकारो न तेषां कर्मेति निश्चयः' इत्यादेश्च ब्राह्मे ।**

(टी) यत एव श्रुतिपुराणयुक्तिभ्यः सन्न्यासस्याधिक्यं प्रतीयते तुरीयस्य, अतोऽत्र प्रश्नपरिहाराभ्यामवरत्वेनोक्तः सन्न्यासः न यत्याश्रम इत्युपसंहरति – **अत इति**[५] ॥२॥

**(भा) अतो नात्राश्रमः संन्यास उक्तः ॥२॥**

(टी) द्वन्द्वत्यागस्यैतत्सन्न्यासशब्दार्थत्वेनोच्यमानत्वाच्च न पूर्वोक्त-सन्न्यासो यत्याश्रम इति भावेनाह – **सन्न्यासशब्दार्थमिति** ॥

---

१. जाबालोपनिषत् ४/१

२. प्राचीनटीकायां तु – ''विरजेत् हरौ विशिष्टरागः, अन्यत्र विगतरागो भवेत्'' इत्यर्थ उक्तः । – **भावरत्नकोशे** ; विरजेत् विरक्तो भवेत् । – **प्र.दी.**

३. **ब्राह्मपुराण** – पा

४. भगवदतिप्रीतिविषयत्वात् तदनधिकारिणामेव कर्मविधानाच्च 'वरः सन्न्यासस्तुरीयः' इति पुराणवाक्येनाह – सन्न्यास इति । ''तुरीये पारमहंसलक्षणे'' इति प्राचीनटीकायाम् अवतारितं वचनमिति, तत्र कर्मशब्दार्थं प्रकृतोपयुक्तमाह – कर्मेत्याश्रमान्तरमिति ।
– **भावरत्नकोशे**

प्राचीनटीकाप्रमेयदीपिकयोः समुच्चितयोरेवाध्ययनं भाष्यभावं प्रकाशयतीति भावरत्न-कोशाभिप्रायः ।

५. 'अत इति ॥ अत्र परिहारवाक्ये ।' – इत्येव प्रमेयदीपिका ।

(भा) सन्यासशब्दार्थमाह – ज्ञेय इति ॥

**ज्ञेयः स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ॥३॥**

(टी) नन्वनेन यत्याश्रममेव सन्न्यासशब्दार्थत्वमर्जुनः पृच्छतीत्यवगम्यते । अन्यथा तं प्रति सन्न्यासशब्दार्थाभिधानवैय्यर्थ्यादित्यत आह **सन्न्यासस्येति** ॥

**(भा) सन्न्यासस्य निःश्रेयसकरत्वं ज्ञापयितुं तच्छब्दार्थं स्मारयति ज्ञेय इति ॥३॥**

(टी) द्वन्द्वत्यागलक्षणसन्न्यासोऽर्जुनस्य प्रसिद्धोऽपि[१] सुस्मरणार्थं भगवतोच्यत इत्यदोषः । तत्र स्मरणं चास्य सन्न्यासस्य निःश्रेयसकरत्वज्ञापनाय । द्वन्द्वत्यागस्यान्यत्र निःश्रेयसकरत्वप्रसिद्धेः 'द्वन्द्वातीतः कृत्वाऽपि न निबध्यते'[२] इत्यादाविति भावः ॥३॥

ननु यो गृहमेधसौख्यं हेयत्वेन न मन्यते, किन्तूपादेयत्वेन वाञ्छति, क्रुद्ध्यति च तद्विरोधिनः, तस्य च[३] वरीयस्योऽपि वाचस्तत्त्वग्रहणाय न स्युः । यस्तु कामक्रोधविहीनः, तस्यैव तत्त्वग्रहणाय स्युरिति ज्ञानान्तरङ्गत्वेनोच्यमानत्वात् द्वन्द्वत्यागोऽपि सन्न्यासः कथं कर्मयोगादवरः स्यात्? किन्तूत्तम इत्याशङ्क्य, एतत्परिहारायोत्तरं श्लोकमवतार्य व्याचष्टे – **सन्न्यासो हीति** ॥

**(भा) सन्न्यासो हि ज्ञानान्तरङ्गत्वेनोक्तः 'न तस्य तत्त्वग्रहणाय'[४] इत्यादौ । अतः कथं सोऽवमः? इत्यत आह – साङ्ख्ययोगाविति ॥**

---

१. सुप्रसिद्धोऽपि – पा
२. गी. ४/२२
३. क्वचित् 'च'इति नास्ति ।
४. भागवते ५/११/३

**साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥४॥**

(टी) योगस्यापि ज्ञानान्तरङ्गत्वान्न तस्य हीनत्वं द्वन्द्वत्यागात् । किन्तूत्तमत्वमेव भगवत्पूजात्मकत्वेनेति भावेनाह –उभयोरपीति ॥

(भा) उभयोरप्यन्तरङ्गत्वेनाविरोधः ।

(टी) ननु [1]श्रुतिपुराणेषु योगशब्दोक्तयागादेः कर्मणः, [2]साङ्ख्यशब्दोक्तज्ञानात् भिन्नमार्गत्वानुगमात् कथं योगस्य ज्ञानान्तरङ्गत्वम्? इत्यत आह – अग्निमुग्ध[3] इति ॥

(भा) 'अग्निमुग्धो ह वै धूमतान्तः स्वं लोकं न प्रतिजानाति'[4] 'मा वः पदव्यः पितरस्मदाश्रिता या यज्ञशालासनधूमवर्त्मनाम्'[5] इत्यादि तु काम्यकर्मविषयमिति भावः ।

(टी) काम्यकर्मैव निन्द्यते, नित्यकर्म तु ज्ञानान्तरङ्गमेवेत्यर्थः ।

ननु नित्यकर्मापि न ज्ञानान्तरङ्गम्, किन्तु केवलप्रत्यवायपरिहारार्थमिति केचित् । तान् प्रत्याह – ये त्विति[6] ॥

(भा) ये त्वन्यथा वदन्ति ते बालाः ॥४॥

---

१. श्रुतिपुराणाभ्यां – पा
२. साङ्ख्ययोगशब्दोक्त० – पा
३. अग्निमुग्धा – पा
४. मुण्डकोपनिषत् (३/२/१२)
'अग्निमुग्धा धूमतान्ताः स्वं लोकं न विदन्ति ते' भागवते ११/२१/२७
५. भागवते ४/४/२१
६. नन्वकाम्यमपि नित्यं नैमित्तिकं च कर्म प्रत्यवायपरिहारार्थमेव । न ज्ञानान्तरङ्गमिति विद्वांस एव मन्यन्त इत्यत आह – ये त्विति ॥ – प्र.दी.

(टी) 'विविदिषन्ति यज्ञेन'[१] इत्यादिश्रुतितात्पर्यालोचनासामर्थ्यात्[२] बालाः । ये त्वज्ञानिनामेव कर्मयोगो न ज्ञानिनामिति वदन्ति ते बालाः । 'यदेव विद्यया' इत्यादिश्रुति[३]सूत्रतात्पर्यार्थालोचनायामसामर्थ्यादिति[४] भावः[५] ॥४॥

ननु यद्यपि ज्ञानमेकमास्थितः कर्मफलमपि विन्दते स्वर्गादिकं 'पुरुषार्थोऽतःशब्दात्'[६] इत्यादेः । तथाऽपि कर्मणो ज्ञानाङ्गत्वे किमायातमित्यत आह –**एकमपीत्यस्येति** ॥

(भा) 'एकमपि' इत्यस्याभिप्रायमाह – यत् साङ्ख्यैरिति ।

**यत् साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥५॥**

(भा) योगिभिरपि ज्ञानद्वारा ज्ञानफलं प्राप्यत इत्यर्थः ॥५॥

(टी) यथा साङ्ख्यैः कर्मफलं प्राप्यते, तथा योगिभिरपि ज्ञानफलं प्राप्यते । तदपि ज्ञानद्वारा । 'नान्यः पन्था अयनाय विद्यते', 'कर्मणा ज्ञानमातनोति, ज्ञानेनामृती भवति' इत्यादिश्रुतेः । अतः कर्मणो ज्ञानान्तरङ्गत्वमित्यर्थः ॥५॥

---

१. बृहदारण्यकोपनिषत् ६/४/२२
२. -लोचनसामर्थ्यात् – पा
३. ॐ विद्यैव तु निर्धारणात् ॐ (ब्र.सू. ३/३/४८)
४. -तात्पर्यालोचनायासामर्थ्यादिति – पा
५. '' 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाकाशेन' इत्यादिश्रुतितात्पर्यालोचनासामर्थ्यात् विवेकशून्या इत्यर्थः'' इति प्राचीनटीका । – **भावरत्नकोशे**
बाला अविवेकिनः । – **प्र.दी.**
६. 'ॐ पुरुषार्थोऽतःशब्दादिति बादरायणः ॐ' ब्र.सू.३/४/१
एवमुत्पन्ननिर्दोषभगवद्दर्शनात् सदा ।
अपेक्षितफलप्राप्तिरारब्धस्यानतिक्रमात् । – **अनुव्याख्याने** (३/४/१)

'सन्न्यासः कर्मयोगश्च' इत्येतद्व्याख्याने द्वन्द्वत्यागात् तु सन्न्यासात् मत्पूजा इति वाक्योदाहरणेन भगवत्पूजात्मकत्वात् कर्मयोगः सन्न्यासाद्वर इत्युक्तम् । अधुनाऽनेन विना निःश्रेयकरत्वाभावाच्च स[1] तस्माद्वर इत्याह – इतश्चेति ॥

(भा) इतश्च सन्न्यासाद्योगो वर इत्याह – सन्न्यासस्त्विति ॥

**सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥६॥**

(टी) ननु निःश्रेयसकरयोरेव सन्न्यासकर्मयोगयोः कर्मयोगस्यातिनिःश्रेयसकरत्वमेव समर्थनीयम् । न तु सन्न्यासस्य दुःखहेतुत्वम् । पूर्वापरविरोधादित्याशङ्क्य तदेव समर्थ्यत इति भावेनाह – **योगाभाव इति** ॥

**(भा) योगाभावे मोक्षादिफलं न भवति । अतः कामजयादिदुःखमेव तस्य ।**

(टी) योगरहितसन्न्यासस्य निष्फलत्वात् साधनानुष्ठानश्रम एवावशिष्यत इत्युच्यते । न तु नरकादिदुःखहेतुत्वम् । निष्फलत्वं च मोक्षादिमहाफलाभावादेव । न तु सर्वथा फलाभावादित्यर्थः ।

किञ्चित्फलहेतोरपि मुक्त्यहेतोरफलत्वोक्तिरयुक्तेत्यतः सप्रमाणकमाह – **मोक्षादिति** ॥

**(भा) मोक्षाद्येव हि फलम्; अन्यत्फलमल्पत्वादफलमेवेत्याशयः । तच्चोक्तम् – 'विना मोक्षफलं यत् तु न तत् फलमुदीर्यते' इति पाद्मे ।**

(टी) नन्वेवं तर्ह्यारोग्यहेतोरौषधादेरफलत्वोक्तिः किं न स्यात्? इत्यत आह – **यत्त्विति**[2] ॥

---

१. क्वचित् स इति नास्ति ।

२. तर्हि कृष्यादेरफलत्वव्यवहारः किं न स्यात्? इत्यत आह – यत्त्विति ॥–**भावप्रदीपिका**
नतु मोक्षफलाभावेऽपि धान्यादिनैव कृष्यादिकं सफलमित्युच्यते । तत्कथमेवमभिहितम् ?

**(भा) यत् तु महाफलयोग्यं तस्याल्पं फलमेव न भवति । यथा पद्मरागस्य तण्डुलमुष्टिः ।**

(टी) औषधादेर्मुक्तिहेतुत्वयोग्यताभावात् नातिप्रसङ्ग इति भावः ।

ननु योगरहितसन्यासवत् सहितस्याप्यमुक्तिसाधनत्वे कथं साधनत्वं योगस्य तदुत्तमत्वम्? इत्याशङ्कापरिहारत्वेनोत्तरार्धमवतार्य व्याचष्टे – **महाफलश्चेति** ॥

**(भा) महाफलश्च योगयुक्तश्चेत् सन्न्यास इत्याह** – योगयुक्त इति ॥

(टी) नन्वनेन योगयुक्तसन्न्यासस्य मुक्तिसाधनत्वं नोच्यते । अत्र तद्वाचकपदाभावादित्याशङ्क्य, मुनिपदं तद्वाचकमित्येतत् सप्रमाणकमाह – **मुनिरिति** ॥६॥

**(भा)** मुनिः सन्न्यासी । **तच्चोक्तम्** –

**'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः'** इति ॥६॥

(टी) ननु कर्मैव योगः कर्मयोगः । कर्मणश्च बन्धकत्वात् कथं तद्युक्तः सन्न्यासी ब्रह्म गच्छति? इत्याशङ्कापरिहारायोक्तप्रपञ्चात्मकत्वेनोत्तरं श्लोकमवतारयति – **एतदेवेति** ॥

**(भा)** एतदेव **प्रपञ्चयति** – योगयुक्त इति ॥

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥७॥**

(टी) यथावद्विष्णुं ज्ञात्वा, तदर्थत्वेन कर्मकरणमित्येतत् कर्मकरणमेव

---

इत्यत उक्तं विवृणोति – यत्त्विति ॥ महाफलं साधयितुं योग्यमित्यर्थः । मोक्षादिग्रहणं प्रकृतापेक्षयैव कृतमिति भावः । – **प्र.दी.**

कर्मकौशलमेव योगः, न कर्ममात्रम् । अतस्तद्युक्तः सन्न्यासी कर्म कुर्वन्नपि न लिप्यत इति युक्तमेव । 'विशुद्धात्मा विजितात्मा जितेन्द्रियः' इति सन्न्यास्युच्यते । विशुद्धबुद्धित्वात् विजितमनाः । अत एव जितबाह्येन्द्रियश्च । अतः [1]स कामक्रोधवर्जित इत्यर्थः[2] ।

जीवपरमात्मैक्यस्य[3] लाक्षणिकत्वात् सर्वप्रमाणविरुद्धत्वाच्च, 'सर्वभूतात्मभूतात्मा' इत्यस्य मुख्यार्थं सर्वप्रमाणानुकूलमाह – **सर्वेति** ॥७॥

**(भा) सर्वभूतात्मभूतः परमेश्वरः[4] । 'यच्चाप्नोति' इत्यादेः । स आत्मभूतः स्वसमीपं प्रत्यादानादिकर्ता यस्य सः** सर्वभूतात्मभूतात्मा ॥७॥

**(टी)** न केवलं द्वन्द्वत्यागः सन्न्यासः । किन्तु भगवत्प्रेरितेन्द्रियादिभिः [5]क्रियमाणे कर्मणि 'अहं करोमि' इति सङ्कल्पत्यागरहित इति भावेन 'नैव' इत्यादिश्लोकद्वयमवतारयति – **सन्न्यासमिति** ॥

**(भा) सन्न्यासं स्पष्टयति पुनः श्लोकद्वयेन** ॥८, ९॥

---

१. **सकामक्रोध०** – पा

२. कारणोपन्यासेनेति ॥ विशुद्धात्मा विजितात्मा जितेन्द्रियः इति यद्द्वेषादिवर्जने कारणं तदुपन्यासेनेत्यर्थः । तथा च प्राचीनटीका "विशुद्धात्मा विशुद्धबुद्धिः विशुद्धबुद्धित्वात् विजितमनाः । अत एव जितबाह्येन्द्रियः । अतो द्वेषादिवर्जितः" इति । **– भावरत्नकोशे**

प्रपञ्चनं च 'यो न द्वेष्टि' इत्यत्रोक्तद्वेषादिवर्जनकारणोपन्यासेन ब्रह्माधिगच्छतीत्युक्तब्रह्मज्ञानावान्तरफलोपन्यासेन चेति ज्ञातव्यम् । **– प्र.दी.**

३. सर्वभूतात्मभूतात्मा सर्वेषां ब्रह्मादीनां स्तम्बपर्यन्तानां भूतानामात्मभूत आत्मा प्रत्यक्चेतनो यस्य सः सर्वभूतात्मभूतात्मा सम्यग्दर्शीत्यर्थः । **– शाङ्करभाष्यम्**

सर्वभूतानामात्मभूत आत्मा यस्य सोऽयम् । **– भास्करभाष्यम्**

४. सर्वभूतात्मभूतो हि वासुदेवो महाबलः । **– भारते शान्ति ३३९/३३**

५. **क्रियमाणकर्मणि** – पा

**नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यन् श्रुण्वन् स्पृशञ्जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥८॥**
**प्रलपन् विसृजन् गृह्णन्नुन्मिषन् निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥९॥**

(टी) 'विशुद्धात्मा' इत्यादिनेषत्स्पष्टितत्वात्[1] पुनः इति[2] । कामसङ्कल्पादिदोषरहितस्यैव विशुद्धबुद्धित्वात् ॥८,९॥

कश्चिदेवमाह – 'नित्यनैमित्तिकं कर्म कुर्वन्नन्यत् परित्यजन् मुच्यते संसृतेरतः कामत्याग एव कर्मालेपहेतुः, न सङ्कल्पत्यागादिः' इति । [3]अन्यस्त्वन्यथा – 'निष्क्रियेण परमात्मनैकीभावं पश्यत आत्मनः कर्माभावज्ञानात् सर्वकर्म-सन्न्यासाधिकार एव तस्य न किञ्चित् कर्तव्यम्' इति ।

तौ निराकर्तुमुत्तरं श्लोकमवतारयति – **सन्न्यासेति** ॥

(भा) सन्न्यासयोगयुक्त एव च कर्मणा न लिप्यत इत्याह – ब्रह्मणीति ॥

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥१०॥**

(टी) सन्न्यासेन योगेन च युक्तः **सन्न्यासयोगयुक्तः** । स एव कर्मणा न लिप्यते । तद्रहितस्तु लिप्यत एव । [4]नित्यनैमित्तिकं[5] कर्म कुर्वन्, तथा निष्क्रियेण परमात्मनैकीभूतस्य मम सर्वकर्मसन्न्यास एवाधिकारो न तु कर्मणीति यः कर्मयोगं जहाति, स तु सर्वकर्तुः परमात्मनो निष्क्रियत्वज्ञानदोषात्, स्वस्याल्पकर्तुः तेनाभेदज्ञानदोषात्, स्वविहित-

---

१. साधितत्वात् – पा
२. ज्ञेय इत्यादिना विशुद्धात्मेत्यादिना च स्पष्टीकृतत्वात् पुनरिति ॥ स्पष्टनं च प्रागनुक्तसङ्कल्पत्यागस्याभिधानात् । – प्र.दी.
३. शाङ्कर इत्यर्थः । २. एवं नित्य० – पा; ३. -त्तिकमपि० – पा

कर्मत्यागदोषाच्च नरक एव पततीति चशब्दार्थः । एवमेषः श्लोकत्रयार्थः सङ्ग्रहेणावगन्तव्यः । स्वतन्त्रं हि कर्तृत्वं च [१]तदभावात् भगवत्तदस्य(?) तदायत्तसर्वचेष्टः नैवाहं किञ्चित् करोमि । भगवत्प्रेरितान्येव मन-आदीन्द्रियाण्येवार्थेषु वर्तन्ते । अतः स एव कर्ता । भगवत्पूजात्मकानि[२] च तानि कर्माणीत्युभयथाऽपि तस्मिन्नेव परे ब्रह्मणि कर्माण्याधाय स्वर्गादिफलस्नेहं त्यक्त्वा, यः करोति स न लिप्यते । अन्यस्तु लिप्यत एवेति[३] ।

नन्वेवं तर्हि 'विष्णुमित्र त्वदागमनं विनाऽस्मद्यज्ञो न सिद्ध्यति' इतिवत् सन्न्यासयोगौ विना कर्मालेपाख्यं कैवल्यं न सिद्ध्यतीति यः साधननियमः प्रतीयते, स चौपचारिकः किं न स्यात् ? ततश्च त्वदधीनसर्वकर्मसन्न्यास एवाधिकारो न कर्मयोग इत्याशङ्कामात्रं परिहरति – **साधनेति ॥**

**(भा) साधननियमस्योपचारत्वनिवृत्त्यर्थं पुनः पुनः फलकथनम् ॥१०॥**

(टी) फलमेव तात्पर्यलिङ्गम्[४] । किं पुनस्तदभ्यासः ? [५]तस्मान्मुख्य एव साधननियम इति भावः ॥१०॥

---

१. तद्दत्तवान् - पा

२. तत्पूजात्मकानि – पा

३. विष्णुनार्थेष्वीरितानि मनआदीनि सर्वशः ।
वर्तन्तेऽन्यो न स्वतन्त्र इति जानन् हि तत्त्ववित् ॥ इति च ।

तत्पूजात्मकानि तत्कृतानि मम शुभार्थमिति ब्रह्मण्याधानम् । स्वातन्त्र्याभावापेक्षयैव जीवस्याकर्तृत्वम् ।

स्ववन्दनं यथा पित्रा कारितं शिशुकर्तृकम् ।
एवं पूजा विष्ण्वधीना भवेज्जीवकृतेत्यपि ॥ – इति प्रवृत्ते ॥ – गीतातात्पर्ये

४. उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती लिङ्गं तात्पर्यनिर्णये ॥

– इति समन्वयाधिकरणभाष्योदाहृतबृहत्संहितावचनम्

५. तस्मान्मुख्यमेव – पा

तत्त्वदर्शिनामपि शुकादीनां सन्न्यासकर्मयोगयोराचरणदर्शनाच्च नैकतरोऽपि त्याज्य इति भावेनोत्तरं श्लोकमवतारयति – एवं चेति ॥

(भा) एवञ्चाचार इत्याह – कायेनेति ॥११॥

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥११॥**

(टी) प्रसिद्धं हि तेषामपि स्वाश्रमोचितं मानसवाचकादिकं कर्म पुराणादिषु ।

'केवलैः' कर्माहङ्कारादिरहितैः कायादिभिः, 'आत्मशुद्धये' संसार-मोक्षायेत्यर्थः[१] ॥११॥

इतोऽपि सन्न्यासयोगाववश्यानुष्ठेयौ नैव त्याज्यौ कथञ्चिदिति भावेनोत्तर-श्लोकमवतारयति – पुनरिति ॥

(भा) पुनर्युक्त्यादिनियमनार्थं [२]युक्तायुक्तफलमाह – युक्त इति ॥

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।**
**अयुक्तः कामकारेण फले सक्तो निबद्ध्यते ॥१२॥**

---

१. कायादिभिरिन्द्रियान्तैः केवलैः कामाहङ्काररहितैः स्नानध्यानादितत्त्वनिश्चयादिश्रवणकीर्तनादिकर्माणि सङ्गं फलस्नेहं त्यक्त्वा, आत्मनः चित्तस्य शुद्धये जीवस्यान्यथाकारपरित्यागेन स्वरूपाविर्भावाय च कुर्वन्ति । – **श्रीविद्याधिराजतीर्थाः**

अत एव प्राचीनटीकायां "प्रसिद्धं हि तेषामपि स्वाश्रमोचितं मानसवाचकादिकं कर्म" इति वाचकशब्दप्रयोग इत्यपि आहुः । केवलैः कामाहङ्कारादिहीनैरिन्द्रियैः योगिनोऽपि तत्त्वदर्शिनः शुकादयोऽपि सङ्गं फलस्नेहं च त्यक्त्वा, आत्मशुद्धये मनसः पापालेप-लक्षणफलाय, प्राचीनटीकारीत्या जीवस्यान्यथाकारपरित्यागेन स्वरूपाविर्भावरूपमुक्तस्य इति वा कर्म स्नान-सन्ध्यावन्दन-तत्त्वनिश्चयार्थश्रवण-कीर्तनादिरूपं कुर्वन्तीति । – **भावरत्नकोशे**

२. 'युक्त्ययुक्तिफलमाह' इति ह्र पाठः भावप्रदीपिकाननुगुणः, प्रमेयदीपिकाननुगुणश्च ।

(भा) युक्तो योगयुक्तः ॥१२॥

(टी) युक्तिर्योगः । आदिशब्देन सन्यासः 'कर्मफलं त्यक्त्वा' इत्युक्तः । तत्सहिता युक्तिः कार्येति तयोर्नियमनम् इत्यर्थः ॥१२॥

ननु 'तयोस्तु कर्मसन्यासात्' इत्युक्तत्वान्न द्वन्द्वत्याग एव सन्यासः, किन्तु कर्मत्याग एव । कर्मत्यागिनस्तु कथं [1]कर्मयोगादि? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकमवतारयति – पुनरिति ॥

(भा) पुनः सन्यासशब्दार्थं स्पष्टयति – सर्वकर्माणीति ॥

**सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी ।**
**नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥१३॥**

(भा) मनसेति विशेषणादभिमानत्यागः ॥१३॥

(टी) भवतु नाम कर्मत्याग एव सन्यासः । स च 'मनसा' इति विशेषणादभिमानत्याग एव । अतः सन्यासिनः कर्मयोगो न विरुद्ध्यते । देहेन्द्रियैः क्रियमाणेऽपि कर्मणि 'नाहं करोमि' इत्यभिमानत्यागसम्भवादिति भावः ॥१३॥

ननु यदि वचनदर्शनादिकर्मवत्येव नवद्वारे देहे 'नाहं वच्मि, न पश्यामि, न श्रावयामि शिष्यान्' इत्यभिमत्यैवाकुर्वन्न[2] कारयंश्चास्ते । तर्ह्यसौ विप्रलम्भकः किं न स्यात्? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकद्वयमवतारयति – न चेति[3] ॥

१. कर्मयोगः स्यात्? – पा; २. -त्यैव वाऽकुर्वन्न – पा

३. ननु दर्शनादिकं कुर्वन्नेव न किञ्चित् करोमीति मन्येतेत्युक्तम् । मिथ्याज्ञानस्य विप्रलम्भस्य वा प्रसङ्गादित्याशङ्कानिरासाय परमेश्वरेरितः कुर्वन् कारयन्नपि स्वातन्त्र्येण न करोति न कारयति चेतुच्यत इत्याह – न कर्तृत्वमिति ।
– **श्रीविद्याधिराजतीर्थाः**

दर्शनादिकं कुर्वन्नेव नैव किञ्चित् करोमीति मन्येत इत्युक्तम् । नैव कुर्वन् न कारयन्निति

(भा) न च करोति वस्तुत इत्याह – न कर्तृत्वमिति ।।

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं .........**

(टी) चशब्दान्न कारयति च । तथाहि । कर्माणि न सृजतीति न करोतीत्यर्थः । कर्तृत्वं लोकस्य न सृजतीति न कारयतीत्यर्थः । यत एवं न कर्ता न च कारयिता, अतः कर्मफलसंयोगं न कस्यापि सृजति स्वमन्यं च सुखदुःखाभ्यां न स्वयं संयोजयतीत्यर्थः ।

तथाऽपि न तस्य कर्मयोगे प्रवृत्त्यभावः शङ्कनीय इत्युच्यते – **'स्वभावस्त्विति ।।'**

**..... .... ..... ..... स्वभावस्तु प्रवर्तते ।।१४।।**
**नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।।१५।।**

(टी) स्वः स्वतन्त्रः परमात्मा । तेनैव सदा स्वयं भवति भावयति चान्यानिति स्वभावः सन्न्यासी । प्रतिबिम्बसत्ताक्रिययोर्बिम्बाधीनत्वात् । तुशब्दात् सर्वेषां स्वभावत्वेऽप्ययं स्वभावत्वं जानन्नेव प्रवर्तत इति विशेषः[१] ।

---

च । तर्हि मिथ्याज्ञानी प्रसज्येत । न कारयन् इति वदन् मिथ्यावादी । प्राचीनटीकारीत्या 'विप्रलम्भकश्च स्यात्' इति शङ्कानिरासाय परमेश्वरप्रेरितः कुर्वन् कारयन्नपि स्वातन्त्र्येण न करोति न कारयति चेति प्रतीतिव्यवहारौ युक्ताविति भावेनेदमुच्यते – न कर्तृत्वमिति ।। – **भावरत्नकोशे**

१. स्वः स्वतन्त्रः परमात्मा । 'स्वातन्त्र्यात् स्व इति प्रोक्तः' इत्युक्तेः । तेनैव सदा स्वयं भवति भावयति चान्यानिति स्वभावः । तथा स्वतन्त्रं भावयति ध्यायतीति स्वभावः । स्वतन्त्रः परमात्मा । स एव मद्गतः स्वयं करोतीति नाहं स्वातन्त्र्येण किञ्चित् करोमि तत्प्रसादात् तदायत्तकर्मणैवाहं विहितकृदिति भावयन्नेव स्वविहितकर्मयोगे प्रवर्तत इति भावः । – **श्रीविद्याधिराजतीर्थाः**

यद्वा स्वतन्त्रं भावयति ध्यायतीति स्वभावः । स्वतन्त्रः परमात्मैव सर्वं करोति, तेनैवाहं विहितकृदित्युच्यते तत्प्रसादादिति भावयन्नेव स्वविहित-कर्मयोगे प्रवर्तते । एवं ध्यायन् कर्तृत्वेन कारयितृत्वेन वा स्वविहितकर्मयोगे प्रवर्तमानो न कस्यापि पापं पुण्यं वाऽऽदत्ते[1] ।

ननु यद्यात्मनः परः स्वतन्त्रोऽन्यः कर्ताऽस्ति, यत्कर्तृके कर्मणि 'अहं करोमि' इत्यभिमन्यते जीवः, तर्हि कथं तं सर्वे न पश्यन्ति? इत्यत उच्यते – अज्ञानेनेति[2] ॥ इति श्लोकद्वयार्थः ।

नन्वेवं जीवपरमौ विविच्य, जीवकर्तृत्वस्यैव निषेधे प्रभुशब्दः कथं तत्रेत्यत आह – **प्रभुर्हीति** ॥

**(भा) प्रभुर्हि जीवो जडमपेक्ष्य ॥१४॥**

(टी) एतेन 'विभु'शब्दार्थोऽपि सोऽवगन्तव्यः । जडापेक्षया विशिष्ट-भवनत्वात्[3]॥१४॥

---

१. स्वः स्वतन्त्रः परमात्मा । तेनैव सदा स्वयं भवति भावयति चान्यानिति स्वभावः सन्न्यासी । प्रतिबिम्बसत्ताक्रिययोर्बिम्बाधीनत्वात् तुशब्दः । सर्वेषां स्वभावत्वेऽप्ययं स्वभावत्वं जानन्नेव प्रवर्तत इति विशेषार्थः । स्वं स्वतन्त्रं भावयति ध्यायतीति वा स्वभावः । स्वतन्त्रः परमात्मैव मद्गतः सर्वं करोति, नाहं स्वातन्त्र्येण किञ्चित् करोमि । तत्प्रसादायत्तकर्मणैवाहं विहितकृदित्युच्यत इति भावयन्निति यावत् । स एव स्वविहितकर्मयोगे प्रवर्तते । अनेन यदुक्तम् – 'जीवस्य कर्तृत्वफलसम्बन्धयोरभावे कर्मयोगे स न प्रवर्तेत' इति तन्निरस्तम् । स्वातन्त्र्याभावविवक्षयैवाकर्तृत्वस्याभ्युपगतत्वेन भगवदधीनतया कर्तृत्वोपपत्त्या फलसम्बन्धस्य सम्भवेन तत्र प्रवृत्तेरनौचित्याभावादिति । तथा चोक्तम् – स्ववन्दनं यथा पित्रा कारितं शिशुकर्तृकम् । एवं पूजा विष्ण्वधीना भवेज्जीवकृतेत्यपि ॥ इति । अस्वतन्त्रेऽपि कर्तृशब्द-प्रयोगः फलसम्बन्धश्चास्तीति, एवमक्षरयोजना प्राचीनटीकायां कृता । – **भावरत्नकोशे**

२. गीताप्रतीकमिदम् ।

३. ननु यद्यात्मनः परः स्वतन्त्रोऽन्यः कर्ताऽस्ति, तत्कर्तृके कर्मणि 'अहं करोमि'

ननु ज्ञानस्याज्ञानावृतत्वे किमज्ञाननाशकं स्यात्? इत्यत आह – ज्ञानमेवेति ॥

(भा) ज्ञानमेवाज्ञाननाशकमित्याह – ज्ञानेनेति ॥

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥१६॥**

(टी) यथाऽऽदित्यस्तमो निवर्तयन्नेव धरामण्डलं प्रकाशयति, तथा पञ्चपर्वात्मकमज्ञानं[१] निवर्तयदेवापरोक्षज्ञानं ब्रह्म प्रकाशयतीति न मन्तव्यम् । किन्तु परोक्षतत्त्वज्ञाननिवर्तितपञ्चपर्वाज्ञानस्यैवापरोक्षज्ञानमुदेतीति भावेनाह – **प्रथमेति**[२] ॥१६॥

---

इत्यभिमन्यते जीवः, तर्हि कथं तं न पश्यति ? इत्यत उक्तम् – अज्ञानेनेति इति प्राचीनटीकायां 'नादत्ते' इति गीताक्षराणि व्याख्यातानि । जडापेक्षया विभुः समर्थो जीव इति पूर्वभाष्यादेव व्याख्यातप्रायं विभुपदम् । विवृतं च जडापेक्षया विशिष्टभवनत्वाद्विभुर्जीव इति तत्रैव । भावप्रदीपिकायां प्रभुविभुशब्दौ विधिनिषेधशास्त्रपरिवृतत्वेन जीवे प्रयुक्ताविति तत्पदप्रयोजनमुक्तम् । – **भावरत्नकोशे**

अस्य जीवविषयत्वे 'प्रभुः' इत्येतन्न सम्भवतीत्यत आह – प्रभुर्हीति ॥ अनेन विभुरित्येतदुपपादितप्रायम् । – **प्र.दी.**

१. 'तमस्तु शार्वरं प्रोक्तं मोहश्चैव विपर्ययः ।
तदाग्रहो महामोहस्तामिस्रः क्रोध उच्यते ।
मरणं त्वन्धतामिस्रमविद्या पाञ्चपर्विका ।' इति भारते – **भाग.ता. ३/१३/२**

२. एवं ज्ञानद्वयानङ्गीकारे बाधकमाह – अन्यथेति । अनेन वृत्तिज्ञानमविद्यां शिथिलयति इत्यत्र वृत्तिज्ञानमपि द्विविधम् । तत्र परोक्षज्ञानमविद्यानाशकम् । अपरोक्षं तु परब्रह्म प्रकाशयतीति स्वाशय उद्घाटितो भवति । तथा च प्राचीनटीका – ''परोक्षतत्त्वज्ञाननिवर्तितपञ्चपर्वाज्ञानस्यैवापरोक्षज्ञानमुदेति'' इति । – **भावरत्नकोशे**

वृत्तिज्ञानं त्वविद्यां शिथिलयति, ब्रह्म प्रकाशयतीत्येतदनेनाहेत्यर्थः । .... प्रथमेति ॥ तृतीयान्तपदोक्तं द्वितीयमपरोक्षमिति शेषः । अन्यथा द्विर्ज्ञानग्रहणं व्यर्थं स्यादिति भावः । – **प्र.दी.**

(भा) प्रथमज्ञानं परोक्षम् ॥१६॥

(टी) ननु परोक्षज्ञानोत्पन्नमपरोक्षज्ञानं सर्वकल्मषापनोदेनापुनरावर्तिं साधयत्येव । किं तत्र तद्बुद्धित्वादिसाधनान्तरेण? इत्यत आह – **अपरोक्षेति** ॥

(भा) अपरोक्षज्ञानाव्यवहितसाधनमाह – तद्बुद्धय इति ॥१७॥

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१७॥**

(टी) सत्यम्, मुक्तावपरोक्षज्ञानं विना नान्यत् साधनमिति । तदुत्पत्तौ तु ध्यानादिव्यवहितपरोक्षज्ञानं विनाऽन्यदप्यस्त्यव्यवहितं साधनं तद्बुद्धित्वादिकम् ।

तथा हि । न सकृद्भगवत्परोक्षज्ञानेन चरितार्थाः, किन्तु पुनः तत्र बुद्धिर्येषां ते तद्बुद्धयः । स आत्मा आदानकर्ता स्वामी येषां ते तदात्मानः । न चासौ स्वामीति बुद्धिरपगच्छति येषामापद्यपि[1], अनापदि वा प्रतीकादिषु ते तन्निष्ठाः । सममेतावत् देवदैवमनुष्ययोः । अथ देवानामेव । स एव परमयनं येषां ते तत्परायाणाः । तच्चक्षुराद्याश्रिता वयमिति ध्यायिन इत्यर्थः[2] ।

---

१. आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः । नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत् ॥ – इति भविष्यत्पर्वणि । – ब्र.सू.भा. ४/१/३

स्वामी विष्णुरिति ध्यानं विशेषणविशेष्यतः ।
कर्तव्यं सर्वथैवैतन्न कथञ्चन विस्मरेत् ।
इति सत्तत्ववचनं षाड्गुण्यवचनं परम् ।
मम स्वामी हरिर्नित्यं सर्वस्य पतिरेव च ।
इति ध्येयः सर्वदैव भगवान् विष्णुरव्ययः । – अनुव्याख्यानम् ४/१/१७,१८

२. उपासनाङ्गदेवानां परमाङ्गतया भवेत् ।
उपसंहृतिर्विशेषे तु फलानामन्यथा न तु ।

यद्वा, स देवः परो येषां ते तत्पराः, अयनं तेषां गुर्वादित्वेन ते तत्परायणाः[१] । ते चापरोक्षज्ञानेन निर्धूतकल्मषाः निर्धूतपापाः, अपुनरावृत्तिं गच्छन्तीत्यर्थः[२] ॥१७॥

समदर्शनमप्यपरोक्षज्ञानद्वारेणैवापुनरावृत्तिसाधनम् । न तु साक्षादिति भावेनोत्तरश्लोकमवतारयति – परमेश्वरेति ॥

(भा) **परमेश्वरस्वरूपाणां सर्वत्र साम्यदर्शनं चापरोक्षज्ञानसाधनमित्याशयवानाह** – विद्येति ॥१८॥

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥१८॥**

(टी) 'ब्राह्मणे गवि' इत्यधिकरणे सप्तमी । समदृष्टिविषयस्तु ततः

---

पुरुषाणां विशेषाद्वा यथायोगं भविष्यति ॥ इति बृहत्तन्त्रे ।

– ब्र.सू.भा. ३/३/५८

१. एतदनुसारेण **विद्याधिराजतीर्थाश्च** – 'स एव परमयनं येषां ते तत्परायणाः । चक्षुराद्याश्रिता वयमिति ध्यायिन इत्यर्थः । एतच्च देवताविषयम् ।
स्वोत्पत्त्यङ्गं तु देवानां विष्णोश्चिन्त्यं सदैव तु ।
तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः' इति वचनात् ।
यद्वा, स एव परो येषां ते तत्पराः । ते अयनं येषां ते गुर्वादित्वेन तत्परायणाः ।' इति ।

२. " न सकृत् परोक्षज्ञानेन चरितार्थम्, किन्तु तत्र बुद्धिर्येषां ते तद्बुद्धयः । स भगवान् आत्मा स्वामी येषां ते तदात्मानः । तन्निष्ठाः तस्मिन् परमात्मनि निष्ठा मम स्वामीति बुद्धेरनापदि आपद्यप्यचलनं तेषां ते तथोक्ताः । सममेतद्देवमनुष्ययोः । अथ देवानामेव विशेष उच्यते – तत्परायणा इति ॥ स एव भगवान् परम् अयनं येषां ते तथोक्ताः । 'चक्षुराद्याश्रिता वयम्' इति ध्यायिन इत्यर्थः । यद्वा, स एव परो येषां ते तत्पराः । ते अयनं येषां गुर्वादित्वेन ते तत्परायणाः । ते च अपरोक्षज्ञानेन निर्धूतकल्मषाः परिगतपापा अपुनरावृत्तिं मुक्तिं गच्छन्ति" इति प्राचीनटीकातोऽप्यवसेयः । – **भावरत्नकोशे**

ब्रह्मैव । 'निर्दोषं हि समं ब्रह्म' इति[1] वक्ष्यति[2] । न च तेषामेव ब्रह्मता । सर्वप्रमाणविरोधादिति भावः ॥१८॥

ननु कथमपरोक्षज्ञानसाधनमेव साम्यज्ञानम् ? मुक्तिसाधनं किं न स्यात् ? 'तैर्जितः सर्गः' इति [3]पुनःसर्जनाभावोक्तेरित्यत आह – तदेवेति ॥

(भा) तदेव स्तौति – इहैवेति ॥१९॥

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥१९॥**

(टी) अपरोक्षज्ञानद्वारा सर्गजयहेतुत्वाविरोधात् । अन्यथा 'दृष्ट्वैव तं मुच्यते' इत्यादिश्रुतिविरोधात् । न च 'पण्डिताः समदर्शिनः' इति [4]दर्शनत्ववचनादिदमेवापरोक्षज्ञानमिति वाच्यम् । तथा सति स्वदेह एव ब्रह्मदर्शिनो मुक्तिः स्यादिति भावः[5] ॥१९॥

अत्र केनचित्[6] 'विद्याविनय' इत्यादिश्लोकयोः स्वोक्तजातिसङ्करे श्रुतिस्मृतिविरोधमाशङ्क्य तासां कर्मविषयत्वात्, अत्रेतःपरं सर्वकर्म-

---

१. इति ह – पा

२. एतदनुसारेण गीतालक्षालङ्कारेऽपि वादिराजतीर्थश्रीचरणाः । ''निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः इत्युत्तरश्लोके कृष्णेनैव समपदस्य ब्रह्मपरतया व्याख्यातत्वाच्च ।'' इति ।

परमेश्वरविषयता 'निर्दोषं हि' इत्युत्तरवाक्यगम्या । – प्र.दी.

३. पुनर्जन्माभावोक्तेः – पा ; ४. दर्शनवचना० – पा

५. ननूत्तरवाक्ये साम्यदर्शनं मुक्तिसाधनमेवोच्यते । तत्कथमुच्यतेऽपरोक्षज्ञानसाधनमिति । प्राग्ज्ञानिनोऽपि जन्मान्तरसद्भाव उक्तः । तत्कथम् 'इहैव' इति तद्देह एव मुक्तिरुक्तेत्यत आह – तदेवेति ॥ स्तुतावधिकोक्तिः सम्भवतीति भावः । – प्र.दी.

६. कर्मविषयं च समासमाभ्यामित्यादि । इदं तु सर्वकर्मसन्न्यासिविषयं प्रस्तुतम् । 'सर्वकर्माणि मनसा' इत्यारभ्य आ अध्यायपरिसमाप्तेः । – **शाङ्करभाष्यम्**

सन्न्यासस्योच्यमानत्वात् न विरोध इत्युक्तम् । तद्वचःशङ्कमानबुद्धीनां श्रीगीतानुयायिनां सुखप्रतिपत्त्यर्थमध्यायशेषमाह – **सन्न्यासेति**[१] ॥२०॥

(भा) सन्न्यासयोगज्ञानानि मिलित्वा प्रपञ्चयत्यध्यायशेषेण ॥२०॥

**न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥२०॥**

(टी) न केवलमितः परमपि कर्मयोगमाचष्ट इत्येतावत् । किन्तु तस्याधिक्यं स्पष्टयति । अत इतःपरं सर्वकर्मबहिष्कृतानेवाधिकृत्य तेषां जातिसङ्करज्ञानं श्रेयःसाधनत्वेन उच्यत इति नाशङ्कनीयमिति भावेनाह – **पुनरिति** ॥

(भा) पुनर्योगस्याधिक्यं स्पष्टयति – बाह्यस्पर्शेष्विति ॥

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥२१॥**

(टी) श्लोकेऽस्मिन् [२]यत्तच्छब्दान्वयस्य दुर्गमत्वादन्वयमाह – **कामेति** ॥

**(भा) कामरहित आत्मनि यत् सुखं विन्दति स एव ब्रह्मयोगयुक्तात्मा चेत् तदेवाक्षयं सुखं विन्दति ।**

(टी) **आत्मनि यत्सुखम्** आत्मधर्मत्वेनात्मस्वरूपभूतं सुखं **स एव कामरहित एव । तदेव स्वरूपसुखमेव ।**

---

१. अध्यायशेषेण ज्ञानिनः सर्वकर्मप्रहाणमुच्यत इत्यपव्याख्यानमेवेति ज्ञापयितुमध्यायशेषार्थं दर्शयति – सन्न्यासेति ॥ – **भावप्रदीपिका**

अत्र कश्चिदाध्यायपरिसमाप्तेर्ज्ञानिनः कर्माभावः प्रतिपाद्यत इत्याह । अपरस्तु ज्ञानस्वरूपं तत्सहकारिसाधनं च प्रतिपाद्यत इति । तदुभयमसत् । अप्रतीतेरिति भावेनाध्यायशेषप्रतिपाद्यमाह – सन्न्यासेति ॥ – **प्र.दी.**

२. तच्छब्दा० – पा

ननु कामरहितोऽप्यहोरात्रादिकर्मयोगं ब्रह्मार्थत्वेन ब्रह्मयोगमनुतिष्ठन्नपि नाक्षयं सुखमनुभवति । तत्कथं ब्रह्मयोगयुक्तात्माऽक्षयं सुखं विन्दति? इत्यत आह – **ब्रह्मविषय इति** ॥

**(भा) ब्रह्मविषयो योगो ब्रह्मयोगः ।**

(टी) तदपि स्पष्टयन् श्लोकतात्पर्यमाह – **ध्यानादिति** ॥

**(भा) ध्यानादियुक्तस्यैवात्मसुखमक्षयम्, अन्यथा नेत्यर्थः ॥२१॥**

(टी) अक्षयात्मस्वरूपं तु सुखमप्यक्षयं तद्ध्यानसमाधिभ्यां भगवदपरोक्ष्याद्व्यज्यमानं तेन लब्धमित्युच्यते, तस्य मुक्तेः सिद्धत्वात् । यद्यपि कामाद्युपद्रवक्षयेऽपीषत् तात्कालिकमात्मसुखं व्यज्यते । तथाऽपि ध्यानादिकं विना संसारानिवृत्तेस्तस्य पुनरावृत्तत्वात् नाक्षयं सुखं तदित्यर्थः[1] ॥२१॥

ध्यानं समाधिश्च[2] मानसं कर्म । अतः कर्मयोग एव वरः सन्न्यासादित्युक्तं भवति । तथाऽपि महाफलसाधनज्ञानाङ्गत्वेनावश्यकर्तव्यः सन्न्यास इति भावेन तत्प्रतिकूलं निन्दयतीत्याह – **सन्न्यासार्थमिति** ॥२२॥

**(भा) सन्न्यासार्थं कामभोगं निन्दयति** – ये हीति ॥२२॥

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥२२॥**

(टी) तदर्थमेव कामपरित्यागं प्रशंसतीत्याह – **तदिति** ॥

---

१. यद्यपि कामाद्युपद्रवक्षयेऽपीषत् तात्कालिकमात्मसुखं व्यज्यते, तथाऽपि तस्य संसारनिवृत्तौ स्वरूपभूतस्याक्षयसुखस्याभिव्यक्तेः संन्यासाद्वरः कर्मयोगः, इत्युक्तं भवति ।

**– श्रीविद्याधिराजतीर्थाः**

२. 'ध्यानादि' इति भाष्ये "आदिशब्देन समाधिर्गृह्यते" इति प्राचीनटीकायाम् ।

**– भावरत्नकोशे**

(भा) तत्परित्यागं प्रशंसति – शक्नोतीति ॥

**शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥२३॥**

(टी) 'प्राक् शरीरविमोक्षणात्' इत्यस्योपयोगं वक्तुं श्लोकान्वयं तावदाह – **कामेति** ॥

(भा) **कामक्रोधोद्भवं वेगं सोढुं शक्नोति, शरीरविमोक्षणात् प्राक् ।**

(टी) तस्योपयोगमाह – **यथेति** ॥

(भा) **यथा मनुष्यशरीरे सोढुं सुशकं[1] तथा नान्यत्रेति भावः ।**

(टी) एतेनेहैव लोक एतच्छरीरात् विमोक्षणात् प्रागित्युक्तं भवति[2] ।

नन्वितोऽपि ब्रह्मलोकादिगतदिव्यशरीरे [3]सोढुमतिसुशकत्वात् कथम् 'इहैव' इत्यादिविशेषः? इत्यत आह – **ब्रह्मेति** ॥२३॥

(भा) **ब्रह्मलोकादिस्तु जितकामानामेव भवति ॥२३॥**

(टी) यावत्पर्यन्तं मुमुक्षुणाऽवश्यकर्तव्यौ सन्न्यासयोगौ, अन्यथा न मुक्तिः, यत ऊर्ध्वं सिद्धेऽपि मोक्षे आनन्दवृद्ध्या एव क्रियते, तद्वतः किं लक्षणम्? इत्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे – **ज्ञानीति** ॥

(भा) **ज्ञानिलक्षणं प्रपञ्चयत्युत्तरश्लोकैः ।**

**योऽन्तःसुखोऽन्तरारामस्तथाऽन्तर्ज्योतिरेव यः ।**

---

१. 'सुकरं' इति ह्व पाठः नरहरितीर्थीयाननुगुणः । 'सोढुमतिसुशकत्वात्' इति वक्ष्यति ।

२. 'इहैव' इत्यनुवादे ग्राह्यमस्मिन्नेव लोक इति । अत एवोक्तम् 'मनुष्यशरीरे' इति । अतोऽत्रैव तत्सहनाय प्रयतितव्यमित्यभिप्रायशेषः । – **प्र.दी.**

३. **सोढुमतिशक्तत्वा०** – पा

**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥२४॥**

(टी) 'आराम'शब्दार्थं साधारणं प्रस्तुतं चाह – **आराम इति** ॥

(भा) **आरामः परदर्शनादिनिमित्तं सुखम् । अत्र तु परमात्मदर्शनादिनिमित्तं तत् ।**

(टी) 'सुख'शब्दार्थमपि तथैवाह – **सुखं त्विति** ॥

(भा) **सुखं तूपद्रवक्षयव्यक्तम् । अत्र तु कामादिक्षये व्यक्तमात्मसुखम् ।**

(टी) अनन्यापेक्षद्युतिस्वरूपत्वात् स्वयंज्योतिर्भगवान् । ततोऽसौ स्वयमेवान्तर्व्यक्तो यस्य सोऽन्तर्ज्योतिः । नत्वनन्यापेक्षद्युतिस्वरूपान्तरपदार्थज्ञानमात्रज्ञानीति भावेनान्तर्ज्योतिपदं व्याचष्टे – **स्वयमिति**[1] ॥

(भा) **स्वयञ्ज्योतिष्ट्वाद्भगवतस्तद्व्यक्तेरन्तर्ज्योतिः ।**

(टी) **तद्व्यक्तेः** इत्येतत् स्वयं[2] विवृणोति – **सर्वेषामिति** ॥

(भा) **सर्वेषामन्तर्ज्योतिष्ट्वेऽपि व्यक्तेर्विशेषः ।**

(टी) ज्योतिःशब्दार्थस्य भगवतः सर्वान्तर्गतत्वेऽपि यस्यासावन्तर्गतव्यक्तः स एवान्तर्ज्योतिरित्यर्थः[3] ।

---

१. ज्योतिःशब्दार्थं तावदाह – स्वयमिति ॥ ज्योतिष्ट्वमिति शेषः । यद्यपि ज्योतिःशब्दः प्रकाशमात्रे प्रवर्तते । तथाऽपि भगवत एव परानपेक्षप्रकाशत्वात्, मुख्ये च सम्प्रत्ययात् स एव ज्योतिरित्यर्थः । – प्र.दी.

२. स्वपदं – पा

३. प्राचीनटीकायां तु ''तद्व्यक्तेरिति स्वपदं वर्णयति – सर्वेषामिति ॥ ज्योतिःशब्दार्थस्य भगवतः सर्वान्तर्गतत्वेऽपि, यस्यासावन्तर्व्यक्तः स एवान्तर्ज्योतिरत्र विवक्षित इत्यर्थः'' इत्युक्तम् । – भावरत्नकोशे

ननु अन्तःज्योतिः यस्यासावन्तर्ज्योतिः । व्यक्तेरिति तु कथं लक्ष्यत इत्यत आह –

ननु मा भूद्भगवतः स्वयंज्योतिष्ट्वेन तज्ज्ञानायान्यज्ज्ञानं घटज्ञानायेव आलोकज्ञानमन्यथाप्यानुषङ्गिकत्वेनान्यस्यापि ज्ञानं स्यादेव । अतः कथम् 'अन्तर्ज्योतिः'[१] इत्यवधारणम्? इत्यत आह – **असम्प्रज्ञातेति** ॥

**(भा) असम्प्रज्ञातसमाधीनां बाह्यादर्शनात् । दर्शनेऽप्यकिञ्चित्करादेवशब्दः ।**

**(टी) अकिञ्चित्करात्** चित्तविक्षेपाद्यकरत्वादित्यर्थः[२] ।

सुखारामान्तर्ज्योतिःशब्दानां [३]स्वोक्तार्थे प्रमाणं चाह – **उक्तं चेति** ॥

**(भा) उक्तं चैतत् –**

**'दर्शनस्पर्शसम्भाषाद्यत् सुखं जायते नृणाम् ।**
**आरामः स तु विज्ञेयः सुखं कामक्षयोदितम् ॥' इति नारदीये ।**

**'स्वज्योतिष्ट्वान्महाविष्णोरन्तर्ज्योतिस्तु तत्स्थितः ॥' इति च ।**

**(टी)** नच 'ब्रह्मभूत'पदं ब्रह्मत्वमाचष्टे[४], तथा सति ब्रह्म गच्छतीति विरोधात् । अतस्तदन्तःसुखत्वादेः कारणध्यानादिकत्वेन[५] ब्रह्मण्यवस्थानमाचष्ट इति भावेन ब्रह्मभूतपदं सविग्रहमवतारयति – **अन्तःसुखत्वादेरिति** ॥२४॥

**(भा) अन्तःसुखत्वादेः कारणमाह – ब्रह्मणि भूत इति ॥२४॥**

**(टी)** यज्ज्ञानिलक्षणमुक्तम् अन्तःसुखत्वादिकम्, तस्य कारणविधानेन

---

सर्वेषामिति ॥ शब्दतः प्राप्तमन्तर्ज्योतिष्ट्वं सर्वसाधारणम् । अत्र तु ज्ञानिनो विशेषणत्वेनोच्यते । तत्सामर्थ्यादिदं लब्धमिति भावः । – प्र.दी.

१. अन्तर्ज्योतिरेवेत्यर्थः ।

२. अकिञ्चित्करत्वात् विक्षेपकरणाभावादित्यर्थः । – प्र.दी.

३. स्वोक्तार्थेषु प्रमाणमाह – पा

४. ब्रह्मभूतः सन्नधिगच्छति । – शाङ्करभाष्यम्

५. कारणाध्यानादिकृत्त्वेन – पा

ज्ञानस्यैव कारणमुक्तम् । अथ तत्र कारणान्तरोक्तिपरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे – **पापक्षयाच्चेति** ॥

(भा) पापक्षयाच्चैतद्भवतीत्याह – लभन्त इति ॥

**लभन्ते ब्रह्म निर्वाणमृषयः क्षीणकल्मषाः ।**
**छिन्नद्वैधा(ऽऽ)यतात्मानः सर्वभूतहिते रताः ॥२५॥**

(टी) 'क्षीणकल्मषाः' इत्यादिपदद्वयान्वयप्रदर्शनेन पापक्षयसाध्यत्वं ज्ञानस्य प्रकाशयति – **क्षीणेति** ॥

(भा) **क्षीणकल्मषा भूत्वा छिन्नद्वैधायतात्मानः ।**

(टी) [१]'छिन्नद्वैध'पदार्थं सप्रमाणकं प्रदर्शयन्[२], तस्य ज्ञानस्य फलं प्रकाशयति – **द्वेधेति** ॥

(भा) **द्वेधाभावो द्वैधम् । संशयो विपर्ययो वा । तच्चोक्तम् –**
**'विपर्ययः संशयो वा यद्वैधं त्वकृतात्मनाम् ।**
**ज्ञानासिना तु तच्छित्त्वा मुक्तसङ्गः परं व्रजेत्' इति ।**

(टी) **अकृतात्मनाम्** अयतचित्तानाम्[३] । **परं व्रजेत्** इत्यनेन 'लभन्ते ब्रह्म निर्वाणम्' इत्यस्यान्वयं सूचयति ।

'आयतात्मानः' इति यद्लुप्तं पदं तत्प्रकाशयति – **छिन्नेति** ॥

(भा) **छिन्नद्वैधास्त एवायतात्मानः ।**

(टी) तस्यार्थमाह – **दीर्घेति** ॥

---

१. छिन्नद्वैधशब्दार्थं – पा
२. दर्शयन् – पा
३. अकृतात्मनाम् अशुद्धबुद्धीनाम् । – प्र.दी.

**(भा) दीर्घमनसः सर्वज्ञा इत्यर्थः ।**

(टी) 'आयतात्म'पदमुत्तरमपि हेतुवाचीत्याह – **तत इति**[१] ॥

**(भा) तत एव छिन्नद्वैधाः ।**

(टी) क्षीणकल्मषायतात्मछिन्नद्वैधत्वानां क्रमेण हेतुहेतुमद्भावे प्रमाणमाह – **तच्चेति** ॥

**(भा) तच्चोक्तम् – 'क्षीणपापा महाज्ञाना जायन्ते गतसंशयाः' इति ।**

(टी) 'यतात्मनः' इति पदं व्यस्तं चेति सूचयति – **छिन्नेति** ॥२५॥

**(भा) छिन्नद्वैधा यतात्मान इति वा ॥२५॥**

(टी) क्षीणकल्मषत्वादिविशेषणचतुष्टयवन्तो[२](ऽ)प्राकृतविग्रहा ब्रह्म लभन्त इत्युक्तम् । अथ नैतावदेव । किन्तु ते तत्सुखेन लभन्त इति विशिनष्टीति भावेनोत्तरं श्लोकमवतारयति – **सुलभं चेति** ॥

**(भा)** [३]**सुलभं च तेषां ब्रह्मेत्याह** – कामक्रोधेति ॥

**कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।**
**अभितो ब्रह्म निर्वाणं वर्तते विदितात्मनाम् ॥२६॥**

(टी) सौलभ्यवाचिपदमुपपादयन् व्याचष्टे – **अभित इति** ॥

**(भा) अभितः**[४] **सर्वतः ॥२६॥**

---

१. समासेनोक्तयोरप्यर्थयोर्बुद्ध्या विविक्तयोर्हेतुहेतुमद्भावोऽस्तीति भावेनाह – तत एवेति ॥
– **प्र.दी.**

२. -विशेषचतुष्टय० –पा

३. 'सुलभं तेषाम्' इति हृ पाठः टीकात्रयाननुगुणः । 'सुलभं चेति' इत्येव सर्वत्र ।

४. अभितः सर्वदेशकालेषु । वर्तते । रक्षकत्वेन ज्ञानिविषयत्वेन वेत्यर्थः ।
– **श्रीराघवेन्द्रतीर्थाः गीताविवृतौ**

(टी) प्रायः सर्वत्र सर्वदा तत्प्रयत्नं विना स्वयमेव कृपया तन्मनोगोचरो भवतीत्यर्थः ॥२६॥

सोऽयं समाधिर्नाम । ध्यानं तु ध्यातृप्रयत्नात्[1] । तच्च कीदृशं कार्यम्? इत्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे – ध्यानप्रकारमिति ॥

(भा) ध्यानप्रकारमाह – स्पर्शानित्यादिना ॥

**स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥२७॥**

(भा) बाह्यान् स्पर्शान् बहिष्कृत्वा । श्रोत्रादीनि योगेन नियम्येत्यर्थः ।

(टी) योगेन उपायेन ।

(भा) चक्षुर्भ्रुवोरन्तरे कृत्वा । भ्रुवोर्मध्यमवलोकयन्नित्यर्थः । उक्तं च – 'नासाग्रे वा भ्रुवोर्मध्ये ध्यानी चक्षुर्निधापयेत्' इति । प्राणापानौ समौ कृत्वा कुम्भके स्थित्वेत्यर्थः ॥२७॥

(टी) कुम्भवदुच्छ्वासनिश्वासरहितं केवलं वायुपूरणं कं शिरो यस्य शरीरस्य कृतं तत् कुम्भकम् । तत्र स्थित्वेत्यर्थः ॥२७॥

---

तथा चोक्तं प्राचीनटीकायाम् – 'प्रायः सर्वत्र सर्वदा स्वप्रयत्नं विना स्वयमेव कृपया तन्मनोगोचरो भवति' इति । – भावरत्नकोशे

१. (६/१) तात्पर्यनिर्णये ध्यानमत्रोच्यते इति । ...... न्यायदीपिकायां ...... 'ध्यानयोगप्रकारश्च सङ्क्षेपेण निरूपितः । विस्तरेणास्मिन् अध्याय उच्यत' इति । अत्र तु 'समाधियोगो अध्यायार्थ उच्यते' । ध्यानसमाधी च भिन्नलक्षणौ । यथोक्तं तन्त्रसारे – खण्डस्मृतिर्धारणा स्यादखण्डं ध्यानमुच्यते । अप्रयत्नात् समाधिश्च ...(४/१५७) । पञ्चमान्तप्राचीनटीकायां च "सर्वदा सर्वत्र ध्यातृप्रयत्नं विना स्वयमेव कृपयाऽऽत्मन्यभिव्यक्तस्य भगवतो मनसाऽवलोकनं समाधिः । ध्यानं तु ध्यातृप्रयत्नसाध्यम्" इति । तथाऽप्यवान्तरसूक्ष्मवैलक्षण्यमनालक्ष्योभयो एकत्वमभिसन्धायैवमुक्तमित्यविरोधः । – भावरत्नकोशे

**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।**
**विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥२८॥**

(टी) ध्यानस्य ध्येयसापेक्षत्वात् तमुत्तरश्लोकेनाचष्टे, न ज्ञेयमात्रमिति भावेनाह – **ध्येयमिति** ॥

(भा) ध्येयमाह – भोक्तारमिति ॥२९॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये पञ्चमोऽध्यायः ॥

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥२९॥**

**॥ इति श्रीमद्भगवद्गीतायां पञ्चमोऽध्यायः ॥**

(टी) ध्यानं नाम निरन्तरमेकविषयज्ञानसन्तानम्[१] । ततश्च 'ज्ञात्वा माम्' इत्यस्य ध्यात्वा मामित्यर्थ उक्तो भवति[२] ॥२९॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां पञ्चमोऽध्यायः ॥

---

१. -विषयज्ञानम् – पा
२. ततश्च 'ज्ञात्वा' इत्यस्य 'ध्यात्वा' इत्यर्थः । शान्तिसाधनज्ञानत्वमपि भोक्तृत्वादिवत् ध्येयविशेषणमेवेति भावः । – प्र.दी.

# षष्ठोऽध्यायः

(टी) प्राधान्येन साधनप्रतिपादनपर आद्ये षट्के पूर्वाध्यायोक्तज्ञानादि-सर्वसाधनसापेक्षत्वात् स्वयमपरोक्षज्ञानान्तरङ्गत्वाच्च षष्ठ एव समाधियोगः प्रतिपादनीय इति भावेनाध्यायार्थमाह – **ज्ञानान्तरङ्गमिति**[१] ॥

**(भा) ज्ञानान्तरङ्गं समाधियोगमाहानेनाध्यायेन ।**

(टी) अत्र केचिदाहुः[२] । यावद्यावत्कर्मभ्य उपरमते[३] तावत्तावन्निरायासस्य जितेन्द्रियस्य चित्तं समाधीयत इति समाधियोगः सर्वकर्मसन्यासिनः चतुर्थाश्रमिण एव घटते । न तु यः पूर्वाध्यायविवक्षितः सन्यासः कर्मयोग-सहितः, तद्वतः । तस्य चित्तसमाधानविरोधित्वादिति ।

तन्निराकरोतीति भावेनाद्यं श्लोकमवतारयति – **विवक्षितमिति** ॥

**(भा) विवक्षितं सन्यासमाह योगेन सह** अनाश्रित इति ॥

श्रीभगवानुवाच –

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स सन्यासी च योगी च न निरग्निर्न चाक्रियः ॥१॥**

(टी) समाधियोगवतोऽपि पूर्वाध्यायविवक्षितं कर्मयोगसहितं कामसङ्कल्प-त्यागादिलक्षणमेव सन्यासमाह । नतु सर्वकर्मसन्यासमित्यर्थः ।

---

१. 'योगे त्विमां शृणु' इति प्रतिज्ञाय द्वितीयषट्के वक्ष्यमाणं भगवज्ज्ञानं प्रति कर्मयोगस्य बहिरङ्गत्वात् स प्राधान्येनातीते ग्रन्थे प्रतिपादितः । तत्साध्यत्वात् ज्ञानान्तरङ्गत्वाच्चाव-सरप्राप्तं समाधियोगमाहानेन षष्ठाध्यायेनेत्यर्थः । – प्र.दी.

२. कश्चिदाह – पा

३. कर्मण्युपरमते – पा

तथाहि श्लोकार्थः । 'अनाश्रितः[१] कर्मफलम्' इति । यः पूर्वाध्यायोक्तः कामसङ्कल्पादित्यागवान् सन्यासीत्युच्यते[२] । कार्यं कर्म करोतीति यस्तत्रोक्तः कर्मयोगी च, स एव चतुर्थाश्रमवान् समाधियोगवांश्च । यस्तु निरग्निरक्रियश्च स न चतुर्थाश्रमी । विहितपरित्यागेनेश्वरप्रकोपवान्, न समाधियोगवांश्चेति ।

ननु चतुर्थाश्रमिणो निरग्नित्वाक्रियत्वेनैव वेदादिसिद्धत्वात् कथं निरग्निरक्रियः सन्यासी योगी च न भवति? इत्यत आह – **चतुर्थेति** ॥

**(भा) चतुर्थाश्रमिणोऽप्यग्निः क्रिया चोक्ता 'दैवमेव'[३] इत्यादौ ।**

(टी) 'दैव'शब्दोक्तब्रह्मोपासनं यथा यज्ञो भवति तथोपासत इति व्याख्यातत्वाद्ब्रह्मैवाग्निः, तदुपासनं क्रियेत्यर्थः ।

प्रकटं [४]वाऽन्यत्रोक्तमित्याह – **अग्निरिति** ॥

**(भा) 'अग्निर्ब्रह्म च तत्पूजा क्रिया न्यासाश्रमे स्मृता' इति च ।**

(टी) अनग्नित्वाक्रियत्वप्रसिद्धिस्तु बाह्याग्न्यभावात्, बाह्यकर्मसङ्कोचाच्च[५] । एवमविरुद्धत्वादयमेव श्लोकार्थ इति भावेन तच्छेषं व्याचष्टे – **तस्मादिति** ॥

**(भा) तस्मान्निरग्निरक्रियः सन्यासी योगी च न भवत्येव ॥१॥**

---

१. सन्यासी योगी च स्तूयते अनाश्रित इति । .... यो हि कर्मफलतृष्णावान् स कर्मफलमाश्रितो भवति । अयं तु तद्विपरीतः । अत अनाश्रितः कर्मफलम् । ..... सन्यासः परित्यागः । स यस्यास्ति स सन्यासी च । योगी च । योगः चित्तसमाधानम् । स यस्यास्ति स योगी च । इत्येवंगुणसम्पन्न अयं मन्तव्यः । न केवलं निरग्निरक्रिय एव सन्यासी योगी चेति मन्तव्यः । **– शाङ्करभाष्यम्**

२. **सन्यास्युच्यते – पा**

३. **गी. ४/२५**

४. **चाऽन्यत्रो० – पा**

५. अनग्नित्वादिप्रवादश्च बाह्याग्न्याद्यभावनिबन्धन इति भावः । **– प्र.दी.**

(टी) एतेनैतदप्यपास्तम् । यदाह मायी – 'न केवलं निरग्निरक्रिय एव सन्न्यासी योगी च । किन्तु फलानपेक्षया कर्मकृदपीत्यकाम्यकर्म स्तूयते' इति । अनध्याहारेण प्रतीयमानमुख्यार्थोपपत्तौ, अप्रतीयमानाध्याहारेण स्तुतिमात्रकल्पनायोगादिति भावः[१] ॥१॥

अधुना योगस्य प्राधान्यं वक्तुमितरस्य [२]तदन्तर्गतत्वमाह – **सन्न्यासोऽपीति** ॥

(भा) **सन्न्यासोऽपि योगान्तर्भूत इत्याह – यं सन्न्यासमिति ॥**

**यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**न ह्यसन्न्यस्तसङ्कल्पो योगी भवति कश्चन ॥२॥**

(टी) ननु सङ्कल्पत्यागमात्रात् कथं सन्न्यासी? इत्याशङ्कां परिहरन् 'योगी' इति पदं व्याचष्टे – **कामेति** ॥

(भा) **कामसङ्कल्पाद्यपरित्यागे कथमुपायवान् स्यादित्याशयः ॥२॥**

(टी) कामाद्युपलक्षणार्थः सङ्कल्पशब्द इति भावः[३] ॥२॥

भवत्वन्तर्गतसन्न्यासः कर्मयोगः[४] समाधियोगिनामप्यवश्यानुष्ठेयः । स च कियत्कालम्? इत्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे – **कियदिति** ॥

---

१. न केवलं निरग्निरक्रियश्चतुर्थाश्रमिसन्न्यासी योगी च । किन्त्वनाश्रित इत्याद्युक्तो गृहस्थोऽपीति परकीयां योजनां निराकरोति – चतुर्थेति ॥ – प्र.दी.

२. तदन्तर्गति० – पा

३. सन्न्यासस्य योगान्तर्भूतत्वमुपपाद्यते 'न हि' इति । तदसत् । सङ्कल्पत्यागमात्रस्यासन्न्यासत्वात्, ईश्वराराधनाय स्वकर्मकरणमात्रं योगः, तस्य सन्न्यासाभावेऽप्युपपत्तेरित्यत आह – कामेति ॥ सङ्कल्पशब्दस्य कामाद्युपलक्षणत्वात् योगशब्दस्य ज्ञानोपायरूपमुख्ययोगार्थत्वान्नानुपपत्तिरिति भावः । – प्र.दी.

४. भवत्वन्तर्गतः सन्न्यासः कर्मयोगे – पा

(भा) कियत्कालं कर्म कर्तव्यम्? इत्यत आह – आरुरुक्षोरिति ॥

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥३॥**

(टी) युज्यतेऽनेनेति योग उपायः[१] । अपरोक्षज्ञानोपायत्वात् समाधिर्योग उच्यते । आरोहणमुपरिभावः । योगारोहणं नाम तदुपरिभावकार्यावाप्तिः । सा च योगे सम्पूर्ण एव भवतीति भावेन 'योगम्', 'आरुरुक्षोः', 'योगारूढस्य'[२] इति पदत्रयं व्याचष्टे – **योगमित्यादिना**[३] ॥

(भा) **योगमारुरुक्षोरुपायसम्पूर्तिमिच्छोः । योगारूढस्य सम्पूर्णोपायस्य । अपरोक्षज्ञानिन इत्यर्थः ।**

(टी) ननु योगमारुरुक्षोर्योगारोहणकारणं[४] भवतु कर्मयोगम् । आरूढस्य तु शमः किमर्थम्? इत्यत आह – **कारणमिति** ॥

(भा) कारणं **परमसुखकारणम्** ।

(टी) परमसुखस्य सर्वेषामपेक्षितत्वेन बुद्धिस्थत्वादनुक्तिरिति भावः ।

नन्वपरोक्षज्ञानिनस्तत एव परमसुखरूपस्य मोक्षस्य सिद्धत्वात्, न पुनस्तस्य शमफलं पश्याम इत्यत आह – **अपरोक्षेति** ।

---

१. युज्यतेऽनेन योगोऽसावुपायो शक्तिरेव च । – **गीतातात्पर्ये १०/७**

२. **योगमारूढस्य** – पा

३. ननु योगो नाम नाश्वादिरिवारोढव्यः । तत्कथमुच्यते 'योगमारुरुक्षोः' 'योगमारूढस्य' इति । तत्राह – योगमिति ॥ उपरिभवनसादृश्यत्वादुपचार इत्यर्थः । उपायः समाधिरेव । समाधेः फलपरिमाणाद्यवच्छेदाभावात् कीदृशी सम्पूर्णतेत्यत आह – अपरोक्षेति ॥ साधनस्य हि पूर्णता साध्यायपर्याप्तत्वम् । अतो यावताऽपरोक्षज्ञानं सम्पद्यते तावत्वं सम्पूर्णत्वमिति भावः । – **प्र.दी.**

४. **-योगारोहकारणं** - पा

**(भा) अपरोक्षज्ञानिनोऽपि समाध्यादिफलमुक्तम् ।**

(टी) द्वितीयाध्याये समर्थितमित्यर्थः[1] ।

**समाध्यादि** इति पदेन समाधिजपकथादयः सामान्यतः शमशब्दार्थत्वे-नोक्ताः । एतेषु बुद्धेर्विष्णुनिष्ठत्वात् । 'शमो मन्निष्ठता बुद्धेः' इति हि भागवते[2] । अधुनोपशमोऽपि शमशब्दार्थ इति दर्शयन्नेतेषु समाधेः प्राधान्यमाह – **तस्येति** ॥

**(भा) तस्य सर्वोपशमेन समाधिरेव कारणं प्राधान्येनेत्यर्थः ।**

(टी) **सर्वोपशमेन** तदितरकर्मत्यागेनेत्यर्थः ।

नन्वपरोक्षज्ञानिनः समाधेरेव प्राधान्ये किमिति शुकादयः प्रायो भगवत्कथादौ प्रवर्तन्ते? इत्यत आह – **तथाऽपीति** ॥

**(भा) तथाऽपि यदा भोक्तव्योपरमः, तदैव सम्यगसम्प्रज्ञातसमाधिर्जायते । अन्यदा तु भगवच्चरितादौ स्थितिः ।**

(टी) भोक्तव्यकर्मण्यक्षीणे सम्यगसम्प्रज्ञातसमाधेरपि स्वधर्मस्य कर्तव्यत्वादिति भावः ।

यदुक्तं योगारूढो नामापरोक्षज्ञानी । तस्यैव समाधिः परमसुखकारणम् । सोऽपि भोक्तव्यकर्मण्यक्षीणे कथादिनाऽऽत्मानं वर्तयतीति तत्र प्रमाणमाह – **तच्चेति** ॥३॥

**(भा) तच्चोक्तम् –**

**'ये त्वां पश्यन्ति भगवंस्त एव सुखिनः परम् ।**
**तेषामेव च सम्यक् तु समाधिर्जायते नृणाम् ।**

१. उक्तं समर्थितं द्वितीये । – प्र.दी.
२. ११/१९/३४

भोक्तव्यकर्मण्यक्षीणे जपेन कथयाऽपि वा ।
वर्तयन्ति महात्मानस्त्वद्भक्तास्त्वत्परायणाः ॥' इति ॥३॥

(टी) योगारूढो नाम योगोपरिभाविकार्यमपरोक्षज्ञानं प्राप्तः, यस्य शमः परमसुखकारणं स कथं ज्ञातव्यः? इत्यत आह – **योगारूढस्येति** ॥

(भा) [१]**योगारूढस्य लक्षणमाह** – यदेति ॥

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**
**सर्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते ॥४॥**

(टी) कर्मस्वननुषङ्गो नाम स्वानुष्ठीयमानाध्ययनादिकर्मसु[२] 'अहं करोमि', 'ममैतत् फलं स्यात्' इति कामसङ्कल्पत्यागः ।

ननु प्रत्याहारादेरपीन्द्रियार्थादिष्वननुषङ्गो भवति । अतोऽतिव्यापकमिदं लक्षणमित्यत आह – **सम्यगिति** ॥

(भा) **सम्यगननुषङ्गस्तस्यैव भवति ।**

(टी) अपरोक्षज्ञानिन एवेत्यर्थः[३] ।

तत्र प्रमाणमाह – **उक्तं चेति** ॥

(भा) **उक्तं च – 'स्वतो दोषलयो दृष्ट्वा त्वितरेषां प्रयत्नतः' इति ॥४॥**

(टी) **स्वत इति** ॥ प्रयत्नं विना । विषयकर्मानुषङ्गे दोषहानिलक्षणमिति भावः ॥४॥

---

१. योगारूढलक्षणमाह इति हृपाठः भावप्रकाशिका-भावदीपिका-भावरत्नकोशाननुगुणः ।
२. -मानध्यानादि – पा
३. नन्विदं साधकेऽपि विद्यते । 'वशे हि यस्येन्द्रियाणि' इत्यादेः । अतोऽतिव्यापकमित्यत आह – सम्यगिति ॥ प्रयत्नं विनेत्यर्थः । तस्यैव योगारूढस्यैव । – **प्र.दी.**

(टी) ननु योगनिरूपणावसरे कोऽयमात्मोद्धारः? इत्याशङ्क्य, उत्तरश्लोकमवतार्य तात्पर्यकथनेन परिहरति – स चेति ॥

(भा) स च योगारोहः प्रयत्नेन कर्तव्य इत्याह – उद्धरेदित्यादिना ॥

**उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥५॥**
**बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः ।**
**अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥६॥**

(भा) कस्य बन्धुरात्मेति ? आह – बन्धुरात्मेति । आत्मा मनः । आत्मनः जीवस्य । आत्मना मनसा । आत्मानं जीवम् । आत्मैव मनः । आत्मना बुद्ध्या, जीवेनैव वा । स हि बुद्ध्या विजयति ।

(टी) मोक्षसुखापेक्षया संसारसुखस्यावार्ग्गतिरूपत्वात् तत उद्धारहेतुर्योगोऽवश्यकर्तव्य इति भावः ।

आद्यात्मशब्दौ[१] पूर्वश्लोकस्थौ । अत्र स्वेनैव सात्मानमुद्धरेदिति मायिनोक्तम् । तद्व्युदासाय मनसा जीवमुद्धरेदित्येतमर्थं बहुवाक्यसंवादेन स्थापयति – उक्तं चेति ॥

(भा) उक्तं च –

'मनः परं कारणमामनन्ति', 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः'[२]
'उद्धरेन्मनसा जीवं न जीवमवसादयेत् ।
जीवस्य बन्धुः शत्रुश्च मन एव न संशयः'
'जीवेन बुद्ध्या हि यदा मनो जितं तदा बन्धुः शत्रुरन्यत्र चास्य ।

---

१. मध्यात्मशब्दौ – पा – प्रामादिकः
२. विष्णुपुराणम् ६/७/२८

**ततो जयेद्बुद्धिबलो नरस्तद्देवे च भक्त्या मधुकैटभारौ ॥'**

**इत्यादि ब्रह्मवैवर्ते ।**

(टी) तत्र न विद्यत आत्मा यस्यासावनात्मेति प्रतीतेः 'अनात्म'शब्दस्य भगवद्विवक्षितार्थं तावदाह – **अनात्मन इति** ॥

**(भा) अनात्मनः अजितात्मनः पुरुषस्य ।**

(टी) अजितात्मन्यनात्मशब्दप्रवृत्तिं सदृष्टान्तं घटयति – **अजितमनस्कस्येत्यादिना** ॥

**(भा) अजितमनस्कस्य । सदपि मनोऽनुपकारीत्यनात्मा । सन्नपि भृत्यो यस्य न भृत्यपदे वर्तते स ह्यभृत्यः ।**

(टी) एवम् 'अनात्म'शब्दार्थं घटयित्वा तदादेः श्लोकार्धस्यार्थमाह – **तस्येति**[१] ॥५,६॥

**(भा) तस्यात्मा मन एव शत्रुवत् शत्रुत्वे वर्तते ॥५,६॥**

(टी) मनो जित्वा तेन स्वात्मानमुद्धरेदित्युक्तम् । तत्रात्मोद्धारः कः? इत्याकाङ्क्षायां प्रकृतयोगारोह एवेति भावेनोत्तरार्धमवतार्य व्याचष्टे – **जितात्मनः फलमिति** ॥

**(भा) जितात्मनः फलमाह – जितात्मन इति ॥**

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।**

(टी) पदद्वयं हेतुहेतुमद्भावेन योजयति – **जितात्मा हीति** ॥

**(भा) जितात्मा हि प्रशान्तो भवति ।**

(टी) 'प्रशान्त'शब्दो विषयोपरतिमाचष्ट इत्याह – **न तस्येति** ॥

---

१. पदानां व्यवहितत्वात् 'अनात्म..' इत्यर्धं व्याचष्टे – तस्येति ॥ –**प्र.दी.**

(भा) न तस्य मनः प्रायो विषयेषु गच्छति ।

(टी) विषयोपरते च मनसि किम्? इत्याकाङ्क्षायामाह – **तदा चेति** ॥

(भा) तदा च परमात्मा सम्यक् हृद्याहितः सन्निहितो भवति ।

(टी) सदा सन्निहितत्वात् तदा को विशेषः? इत्यत आह – **अपरोक्षेति**[१] ॥

(भा) अपरोक्षज्ञानी स भवतीत्यर्थः ।

(टी) कथं तमितरे त्ववगच्छन्ति? इत्याकाङ्क्षायामाह – **अपरोक्षज्ञानिन इति** ॥

(भा) अपरोक्षज्ञानिनो लक्षणं स्पष्टयति – शीतोष्णेत्यादिना ॥

**शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥७॥**

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।**

**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥८॥**

(टी) 'यदा हि नेन्द्रियार्थेषु'[२] इत्यादिनोक्तत्वादत्र स्पष्टयति इत्युच्यते[३] ।

व्यवहितानामपि पदानां योग्यतयाऽन्वयं दर्शयति – **शीतोष्णादिष्वित्यादिना** ॥

(भा) **शीतोष्णादिषु कूटस्थः । 'ज्ञानविज्ञानतृप्तात्मा' 'विजितेन्द्रियः' इति कूटस्थत्वे हेतुः ।**

---

१. -क्ष्येति – पा ।

२. गी. ६/४

३. यदा हीति योगारूढस्य लक्षणमुक्तम् । तत् किमर्थं पुनरुच्यत इत्यत आह – अपरोक्षेति ॥ – प्र.दी.

(टी) [१]ज्ञानाद्विज्ञानस्य भेदं वक्तुं विज्ञानशब्दार्थं विभज्य सप्रमाणकमाह – विज्ञानमित्यादिना ॥

(भा) विज्ञानं विशेषज्ञानम् । अपरोक्षज्ञानं वा । तच्चोक्तम् –

'सामान्यैर्ये त्वविज्ञेया विशेषा मम गोचराः ।
देवादीनां तु तज्ज्ञानं[२] विज्ञानमिति कीर्तितम् ॥'
'श्रवणान्मननाच्चैव यज्ज्ञानमुपजायते ।
तज्ज्ञानं दर्शनं विष्णोर्विज्ञानं शम्भुरब्रवीत् ॥'
'विज्ञानं ज्ञानमज्ञादेर्विशिष्टं दर्शनं तथा' इत्यादि ॥

(टी) श्रवणात् इत्यादिना ज्ञानमप्युक्तमिति सूचयितुं तच्च इति चशब्दः[३] । सामान्यैः साधारणजनैरित्यर्थः ।

नित्यत्वादिवाचिनः कूटस्थशब्दस्यात्रानन्वयमाशङ्क्य, तस्यात्र विवक्षितार्थमुक्त्वा तं च[४] घटयति – कूटस्थ इत्यादिना ॥

(भा) कूटस्थः निर्विकारः । कूटवत् स्थित इति व्युत्पत्तेः । कूटम् आकाशः ।

(टी) युक्तयोगिशब्दयोरेकार्थत्वमाशङ्क्य परिहरति – योगीति ॥

(भा) योगी योगं कुर्वन् । युक्तः योगसम्पूर्णः ।

---

१. विज्ञानस्य – पा
२. 'यज्ज्ञानं' इति जिज्ञासाधिकरणतत्त्वप्रकाशिकापाठः ।
३. प्राचीनटीकायां तु न केवलं विज्ञानं ज्ञानं चोक्तमिति समुच्चयाय चशब्द इत्युक्तम् । – भावरत्नकोशे

प्रसिद्धाभिधानार्थोऽप्यङ्गीक्रियत इति चशब्दः । – प्र.दी.
४. क्वचित् 'च' इति नास्ति ।

(टी) ननु योगं कुर्वन्नेव कथं योगसम्पूर्ण उच्यते? इत्यत आह – **एवम्भूत इति ॥**

**(भा) एवम्भूतो योगानुष्ठाता योगसम्पूर्ण उच्यत इत्यर्थः ॥७,८॥**

(टी) योगफलस्य भगवद्दर्शनस्य प्राप्तत्वात् पुनर्योगमाचरन्नपि योगसम्पूर्ण उच्यत इत्यर्थः ॥७,८॥

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥९॥**

(टी) 'सुहृत्' इत्यादेः श्लोकस्य सङ्गतिं प्रतिपाद्यं च सङ्ग्रहेणाह – **स एवेति ॥**

**(भा) स एव च सर्वस्माद्विशिष्यते साधुपापादिषु समबुद्धिः ।**

(टी) एवम्भूत योगी यदि साधुपापादिषु वक्ष्यमाणप्रकारेण समबुद्धिस्तर्हि स न केवलं योगसम्पूर्ण उच्यते, किन्तु सर्वजनसमूहाद्विशिष्टश्च भवतीत्यर्थः ।

अत्र विष्णुमुपासतस्तद्योग्यस्य योगिन एकान्ततः साहाय्यकारणात् साधवः सुराः । नियमेन तत्प्रतिकूलाः पापा एवासुराः । अनियमेन कादाचित्क-सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुत्वात् मिश्रा एव नराः[१] । नरोत्तमान्ताः सुरेषु, नराधमान्ता असुरेषु ।

---

१. ''विष्णुमुपासीनस्य योगिन एकान्ततः साधुकरणात् साधवः सुराः, नियमेन तत्प्रातिकूल्यापादनात् पापा एवासुराः, अनियमेन कादाचित्कसुहृन्मित्रार्युदासीन-मध्यस्थद्वेष्यबन्धुत्वकत्वात् मिश्रा एव नराः'' इति प्राचीनटीकायां साधुत्वादेः व्यवस्थापितत्वात् अव्यवस्थितसुहृत्वादिमनुष्योत्तमविषयं भाष्यमित्याशयेन तदर्थमाह – मनुष्येष्विति ॥ मनुष्योत्तमेष्वित्यर्थः । – **भावरत्नकोशे**

मनुष्येषु यत् 'एकं एकं प्रति सुहृत्' इत्यादि तन्न जीवस्वभावान्तर्गतं किन्तु चिद्रूपत्वादिकमेवेत्यर्थः । – **प्र.दी.**

ननु यद्येतेषु साधुपापादिषु समत्वं स्यात् तर्ह्येव तज्ज्ञान्यधिकः स्यात्। तदेव कुतः? इत्यत आह – जीवचित इति ॥

**(भा) जीवचितः परमात्मनः सर्वस्य तन्निमित्तत्वस्य च सर्वत्रैकरूप्येण ।**

(टी) ननु भवतु परमात्मनः साधुपापादिषु सर्वेष्वेकरूपत्वं सर्वगुण-सम्पूर्णत्वात् सर्वदोषविवर्जितत्वाच्च । 'निर्दोषं हि समं ब्रह्म' इत्युक्तत्वात् । जीवचैतन्यस्य साधुत्वादिविशेषदर्शनात् कथं [१]सर्वत्रैकरूपवत्त्वम्? इत्यत आह – **चिद्रूपा इति ॥**

**(भा) चिद्रूपा एव हि जीवाः । विशेषस्त्वन्तःकरणकृतः ।**

(टी) असुरादेः पापत्वादिविशेषः कश्चिन्नित्यान्तःकरणकृत इति भावः[२] ।

---

१. सर्वत्रैकरूपत्वम् –पा

२. प्राचीनटीकाभावप्रदीपिकयोस्तु — केवलचिद्रूपाणां देवादीनां सुखदुःखादिविशेषणः किन्निबन्धन इत्याशङ्क्योक्तम् – विशेषस्त्वन्तःकरणकृत इति ॥ देवादीनां सुखादिविशेषः स्वरूपान्तःकरणकृतः । दैत्यादीनां दुःखादिविशेषः तत्स्वरूपान्तःकरणनिमित्तः । देवादीनां दुःखादिविशेषो बाह्यान्तःकरणहेतुकः । दैत्यादीनां सुखादिविशेषोऽपि बाह्यान्तःकरणकः । *मिश्राणां मिश्रता स्वरूपान्तःकरणकृता । अन्यतराधिक्यं बाह्यान्तःकरणकृतम् । स्वरूपान्तःकरणं नाम जीवोपाधिः । तस्य च शुद्ध्यशुद्धि-मिश्रताभेदात् नानारूपतापादकत्वं इत्यादिरूपेण विशेषस्त्वन्तःकरणकृत इति भाष्यं व्याख्यातम् । **– भावरत्नकोशे**

*(मिश्राणां मिश्रतः स्वरूपान्तःकरणकृतान्यतराधिक्यं ... इति मुद्रितपाठः प्रामादिकः)

भावरत्नकोशे प्रायः ''प्राचीनटीका'' इति व्यवहारः नरहरितीर्थीयाया एव। किन्त्विमानि वाक्यानि भावप्रदीपिकायामेव पठ्यन्ते, न तु उपलब्धनरहरितीर्थीयकोशेषु। टीकान्तरेण वा भाव्यम्। पूर्वत्रापि (२/५०) 'समष्टिशब्दश्चायमर्थश्च प्राचीनटीकाद्वयपर्यालोचनया-ऽवगम्यते' इति या विवक्षिता भावरत्नकोशे साऽप्यन्या स्यात्। उत्तरत्र च(७/७) ।

तर्हि सुहृत्वादिधर्मः किमात्मक इत्यत आह – विशेषस्त्विति ॥ अन्तःकरणोपादानको बाह्यधर्मः । **– प्र.दी.**

[१]नन्वसुरादेः पापत्वादिविशेषस्यान्तःकरणकृतत्वे कथं तस्य [२]जीवविशेषस्य सर्वस्य परमात्मनिमित्तत्वमुक्तम्? इत्यत आह – **सर्वेषामिति** ॥

**(भा) सर्वेषां च साधुत्वादिकं सर्वमीश्वरकृतमेव स्वतो न किञ्चिदपि ।**

(टी) साधुत्वादिकं सर्वं सर्वेषां न स्वाधीनम्, नाप्यसुरादिपापत्वाद्यन्तःकरणाधीनम् । कस्यापीश्वरप्रेरणां[३] विना स्वतोऽकिञ्चित्करत्वात् । ईश्वरस्तु स्वत एव तत्सर्वं करोतीत्यर्थः ।

तत्र प्रमाणमाह – **उक्तं चेति** ॥

**(भा) उक्तं चैतत् सर्वम् –**

**'स्वतः सर्वेऽपि चिद्रूपाः सर्वदोषविवर्जिताः ।**
**जीवास्तेषां तु ये दोषास्त उपाधिकृता मताः ।**

(टी) बिम्बभूतस्य भगवतः चिद्रूपत्वनिर्दोषत्वाभ्यां तत्प्रतिबिम्बभूतसर्वजीवानां स्वतस्तदुभयं प्राप्तम् । तत्रासुरादीनां दोषास्तेषां सर्वदोषात्मकनित्यान्तःकरणोपाधिकृताः ॥

अनौपाधिकत्वविवक्षयैव सर्वजीवचिद्रूपत्वनिर्दोषत्वयोः स्वतस्त्वम् । स्वातन्त्र्यविवक्षयाऽत्र तदपि भगवदायत्तमित्याह – **सर्वं चेति** ॥

**(भा) सर्वं चेश्वरतस्तेषां न किञ्चित् स्वत एव तु ।**
**समा एव ह्यतः सर्वे वैषम्यं भ्रान्तिसम्भवम् ।**

(टी) अतः इत्युक्तप्रकारद्वयेन समा एव सर्वजीवाः । उक्तनिमित्तद्वयं [४]विना यद्वैषम्यं तद्भ्रान्त्यैव प्रतीयत इत्यर्थः ।

---

१. नन्वसुरादिपाप० – पा  २. सर्वजीव० – पा;  ३. -श्वरेण – पा
४. विनाऽन्यद्वै० – पा

एवं तावदसुरादिपापत्वादिविशेषाणामन्तरान्तःकरणनिबन्धनत्वेनौपाधिकत्वात्, स्वतो निर्दोषचिद्रूपत्वेन सर्वजीवसाम्यात्, तद्बुद्धिः समबुद्धिरित्युक्तम् । अधुनाऽन्तरोपाधीनां जीवाभेदाभिप्रायेण तन्निबन्धनानामपि विशेषाणां स्वाभाविकत्वमेवास्तु । तथाऽप्यर्युदसीनत्वादीनां कादाचित्कत्वादीनां बाह्यान्तःकरणकृतत्वेनौपाधिकत्वात् स्वतः सर्वनरोत्तमजीवसाम्यात् तद्बुद्धिः समबुद्धिरस्त्विति भावेनाह – **एवं समा** इति ॥

(भा) **एवं समा नृजीवास्तु विशेषो देवतादिषु ।**
**स्वाभाविकस्तु नियमादत[1] एव सनातनः ।**
**असुरादेस्तथा दोषा नित्याः स्वाभाविका अपि ।**
**गुणदोषौ मानवानां नित्यौ स्वाभाविकौ मतौ ।**
**गुणैकमात्ररूपास्तु देवा एव सदा मताः' इति ब्राह्मे ।**

(टी) अस्मिन् पक्षे चिद्रूपा एव हि इति नरोत्तमा एव । तेषां भगवद्भागवतारित्वादिविशेषो बाह्यान्तःकरणकृत इत्यपि ज्ञातव्यम्[2] । **देवतादिषु** देवतासृष्ट्यादिषु यो महानवान्तरश्च **विशेषः**, स तु **स्वाभाविकः** न बाह्यान्तःकरणकृतः । तथाऽप्यसौ अत एव परब्रह्मत एवेत्यर्थः ।

ननु समत्वात् साधुपापादिचेतनानाम्, तान् समत्वेन जानतः सर्वनराधिक्यं फलं चेत्, समत्वेनैव हेतुना तान् साम्येन नमतः पूजयतोऽपि तत्फलं किं न स्यादित्याशङ्क्याह – **न त्विति** ॥

---

१. 'नियमाद्धरेरेव सदातनः' इति हृपाठः नरहरितीर्थीयाननुगुणः । 'अत एव परब्रह्मत एव' इति तत्र ।

२. नृजीवा इति भाष्यस्य मनुष्योत्तमजीवा इत्यर्थः । तथा च प्राचीनटीका – ''चिद्रूपा एव नरोत्तमा एव । तेषां भगवद्भागवतारित्वादिविशेषो बाह्यान्तःकरणकृत इत्यादि ज्ञातव्यम्'' इति । – **भावरत्नकोशे**

योगे प्रवर्तमानं प्रति यत्सुहृत्वादिकं तन्मनुष्येष्वेव स्वरूपवैषम्यकारणं न भवति ।

(भा) ननु साधुपापादीनां पूजादिसाम्यम् । तत्र दोषस्मृतेः –

'समानां विषमा पूजा विषमाणां समा तथा ।
क्रियते येन देवोऽपि स्वपदाद्भ्रश्यते पुमान् ॥' इति ब्राह्मे ।

(टी) साधुपापादिरूपवैषम्यस्याप्युपपादितत्वात्, विषमान् समत्वेन पूजयतो दोषस्मृतेरित्यर्थः ।

गुणानुसारेण पूजाविधानाच्च, न सत्यपि साम्ये पूजादिसाम्यमित्याह – वित्तमिति ॥

(भा) 'वित्तं बन्धुर्वयः कर्म विद्या चैव तु पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम्' इति मानवे[1] ।

(टी) फलपर्यालोचनयाऽपि पूजादृष्टी विषमे स्यातामिति भावेनाह – गुणानुसारिणीमिति ॥

(भा) 'गुणानुसारिणीं पूजां समां दृष्टिं च यो नरः ।
सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति ॥
वैषम्यमुत्तमत्वं तु ददाति नरसञ्चयात् ।
पूजा या विषमा दृष्टिः समा साम्यं विदुःखजम् ॥' इति ब्रह्मवैवर्ते ।

(टी) या पूजा विषमा, सा वैषम्यमुत्तमत्वं ददाति । या दृष्टिः समा सा तत्साम्यं दुःखाभावसाम्यं जनयतीत्यर्थः[2] ।

साम्यं प्रकारान्तरेण सप्रमाणकं व्याचष्टे – सुहृदिति ॥

---

१. मनुस्मृतिः २/१३६

२. या विषमा पूजा सा वैषम्यम् । तस्यैव व्याख्यानमुत्तमत्वम् । साम्यं ददाति । विदुःखत्वनिमित्तम् । – प्र.दी.

(भा) सुहृदादिषु शास्त्रोक्तपूजादिकृतिरन्यूनाधिका या साऽपि समा। तदप्याह

'यथा सुहृत्सु कर्तव्यं पितृशत्रुसुतेषु च।
तथा करोति पूजादि समबुद्धिः स उच्यते' इति गारुडे।

(टी) अतोऽपि न सर्वभूतेषु पूजादिसाम्यमिति भावः।

सुहृदादिपदार्थं सप्रमाणकमाह – प्रत्युपकारेत्यादिना ॥

(भा) प्रत्युपकारनिरपेक्षयोपकारकृत् सुहृत्। क्लेशस्थानं निरूप्य यो रक्षां करोति स मित्रम्। अरिः वधादिकर्ता। कर्तव्य उपकारेऽपकारे च य उदास्ते स उदासीनः। कर्तव्यमुभयमपि यः करोति स मध्यस्थः। अवासितकृत् द्वेष्यः। आह चैतत् –

'द्वेष्योऽवासितकृत् कार्यमात्रकारी तु मध्यमः।
प्रियकृत् प्रियो निरूप्यापि क्लेशं यः परिरक्षति॥
स मित्रमुपकारं तु अनपेक्ष्योपकारकृत्।
यस्ततः स सुहृत् प्रोक्तः शत्रुश्चापि वधादिकृत्' इति ॥९॥

(टी) अवासितम् अनभिप्रेतम्[1] ॥९॥

'अत्यन्तं सुखमश्नुते'[2] इत्येतदन्तं प्रघट्टकमवतारयति – समाधीति ॥

(भा) समाधियोगप्रकारमाह – योगी युञ्जीतेत्यादिना ॥

**योगी युञ्जीत सततमात्मानं रहसि स्थितः।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥१०॥**

---

१. अवाञ्छितमप्रियमिति। तथा च तात्पर्यम् – द्वेष्यस्त्वप्रियमात्रकृत् इति। अवासितमनभिमतम् (अवासितमनभिप्रेतम्- पा) इति तु प्राचीनटीका। – **भावरत्नकोशे**
अवाञ्छितमप्रियम् (अवासितमप्रियम् – पा) – **प्र.दी.**
२. गी. ६/२८

(टी) प्राधान्यत एतेषु श्लोकेषु योगप्रकार एवोच्यते । तत्फलादि चान्यत् तदर्थमेव ॥१०॥

(भा) युञ्जीत समाधियोगयुक्तं कुर्यात् । आत्मानं मनः ॥१०॥

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।**
**नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् ॥११॥**

**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।**
**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥१२॥**

(भा) योगं समाधियोगं युञ्ज्यात् ॥१२॥

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥१३॥**

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥**

**युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ।**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥**

(भा) निर्वाणपरमां शरीरत्यागोत्तरकालीनाम् ॥१५॥

(टी) निर्वाणं बाणाभावः[१] शरीरत्यागः, तत्परमात् तदुत्तरकालीनादुत्तरकालतया वा । शान्तिर्मुक्तिः, साऽपि भगवत्संस्था । [२]भगवदाश्रयतामाप्नोतीत्यर्थः ॥१५॥

---

१. भाष्ये प्राचीनटीकारीत्या निर्बाणशब्दस्य देहाभावः शरीरत्यागोऽर्थः । 'कायो बाणं शरीरं च' इति द्वितीयेऽभिधानात्, निरो निषेधार्थत्वात्, बवयोरभेदाश्रयणात् ।
— भावरत्नकोशे

२. भगवदाज्ञया तामा० – पा

**नात्यश्नतस्तु[१] योगोऽस्ति न चैकान्तमनश्नतः ।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥१६॥**

(टी) 'नात्यश्नतस्तु[२] योगोऽस्ति न चैकान्तमनश्नतः । जाग्रतो नैव च' इत्येतदशक्तविषयमित्येतत् सप्रमाणकमाह – **अनशनेति** ॥१६॥

(भा) **अनशनादिनिषेधोऽशक्तस्य । उक्तं हि –**

**'निद्राशनभयश्वासचेष्टातन्द्र्यादिवर्जनम् ।**
**कृत्वा निमीलिताक्षस्तु शक्तो ध्यायन् प्रसिद्ध्यति' इति नारदीये ॥१६॥**

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥१७॥**

(टी) 'युक्त..' इत्यादिपदमनूद्य तस्य प्रातीतिकार्थं तावदाह – **सोपायेति** ॥

(भा) **युक्ताहारविहारस्य सोपायाहारादेः ।**

(टी) आहरणमाहारो भोजनम् । तस्योपायसाहित्यं नाम किम्? इत्याकाङ्क्षायां तस्यैव पदस्य तात्पर्यार्थमाह – **यावतेति** ।

(भा) **यावता श्रमाद्यभावो भवति तावदाहारादेरित्यर्थः ॥१७॥**

(टी) 'योगो भवति दुःखहा' इत्युच्यमानत्वाच्छ्रमाद्यभावस्तत्रैवोपाय इति भावः[३] ॥१७॥

---

१. 'नात्यश्नतश्च' इत्यपि पाठः नरहरितीर्थीयपाठान्तरानुसारेण ।

२. -तश्च - पा

३. योगो भवति दुःखहा इति विशेषणात् श्रमाद्यभाव इत्युक्तमिति प्राचीनटीका ।
– **भावरत्नकोशे**

आहारादेः सोपायत्वं नाम कीदृशमित्यत आह – यावतेति ॥ – **प्र.दी.**

**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१८॥**

(टी) 'यदा विनियतं चित्तमात्मन्येवावतिष्ठते' इत्यत्र स्वात्मन्येवेति यो वक्ति स वक्तव्यः[१] । किं तस्य जीवत्वध्यानं मुक्तिसाधनम्? ब्रह्मत्वध्यानं वा? नाद्यः, [२]स्वानधीनत्वान्मुक्तेः । नेतरः, विपरीतध्यानस्यानर्थहेतुत्वात् । तदेतन्मनसि निधायाह – **आत्मनीत्यादि**[३] ॥१८॥

(भा) आत्मनि **भगवति** ॥१८॥

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥१९॥**

(टी) 'युञ्जतो योगमात्मनः' इत्यत्रात्मा भगवान् । तस्य योगसम्बन्धश्च विषयविषयिभाव इत्याह – **आत्मन इति** ॥

(भा) आत्मनः **भगवद्विषयं** योगम् ॥१९॥

(टी) आत्मा जीवश्चेत्, स किं योगस्य विषयः? आश्रयो वा? आद्ये पूर्वोक्तदोषः । द्वितीये, आत्मशब्दो व्यर्थ इति भावः[४] ॥१९॥

---

१. यदा विनियतं चित्तं विशेषेण नियतं संयतमेकाग्रतामापन्नं चित्तं हित्वा बाह्यचिन्तामात्मन्येव केवलेऽवतिष्ठते स्वात्मनि स्थितिं लभत इत्यर्थः । – **शाङ्करभाष्यम्**

२. **स्वाधीनत्वान्मुक्तेः** – पा

३. प्राचीनटीकायां तु "आत्मनि स्वात्मनि इति यो वक्ति स वक्तव्यः । किं तस्य जीवत्वध्यानं मुक्तिसाधनं ब्रह्मत्वध्यानं वा । नाद्यः । स्वानधीनत्वान्मुक्तेः(स्वाधीनत्वान्मुक्तेः – पा) । नेतरः । विपरीतध्यानस्यानर्थहेतुत्वादिति भावेन स्वयमात्मशब्दार्थमाह – आत्मनि भगवति" इति व्याख्यातम् । – **भावरत्नकोशे**

आत्मन्येवावतिष्ठते इत्यत्र स्वस्मिन्नेवेति प्रतीतिनिरासायाह – आत्मनीति ॥ अन्यथा ज्ञात्वा मामित्यादिविरोधः । – **प्र.दी.**

४. "आत्मशब्दार्थो जीवश्चेत् स किं योगस्य विषय आश्रयो वा । आद्ये तस्य मुक्त्यर्थत्वेन

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ।**
**यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥२०॥**

(टी) 'यत्र चैवात्मना' इत्यर्धगतात्मशब्दत्रितयार्थानाह – **आत्मनेत्यादिना** ॥

(भा) आत्मना **मनसा** । आत्मनि **देहे** । आत्मानं **भगवन्तं पश्यन्** ॥२०॥

(टी) न चात्र[1] 'आत्मानम्' इत्यत्र जीवपरमात्मैक्यं प्रतीयते, नापि युज्यते पूर्वोक्तदोषात् । अत्र केनचिद्भगवतश्चतुर्भुजाद्याकारध्याने 'समं काय..' इत्यादिप्रकरणविरोध[2] इत्युक्तम् । तदसत् । समं कायशिरोग्रीवं धारयताऽपि साकारध्यानाविरोधात् । सकलैश्वर्ययुक्तब्रह्मस्वरूपाकारस्य द्वितीयाध्याये[3] समर्थितत्वान्न कश्चिद्दोषः ॥२०॥

**सुखमात्यन्तिकं यत् तद्बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥२१॥**

(टी) 'स्वस्य तद्रूपत्वात् न चलति' इत्युक्तेऽध्याहारस्य दोषः[4] । सर्वप्रमाणविरोधश्च । अतो यत्र समाधौ स्थितो विषयभूतभगवद्रूपान्न चलतीत्येवार्थ इत्याह – **तत्त्वत इति** ॥

---

स्वानधीनत्वान्मुक्तेरित्युक्तदोषः । द्वितीये, आत्मशब्दो व्यर्थ इति भावः'' इतीदं भाष्यं व्याख्यातम् । – **भावरत्नकोशे**

'युञ्जतो योगमात्मनः' इत्यत्रात्मशब्दस्य षष्ठ्याश्च विवक्षितमर्थमाह – आत्मन इति ॥ योगिन आत्मन इत्यन्वयनिरासाय योगमित्युक्तम् । अन्यथा वैय्यर्थ्यात् । –**प्र.दी.**

१. च – पा; २. विरोधात् – पा

३. २/२४

४. तदीदृशं सुखमनुभवति । यत्र यस्मिन् काले । न चैवायं विद्वान् आत्मस्वरूपे स्थितः तस्मान्नैव चलति । तत्त्वतः तत्त्वस्वरूपात् न प्रच्यवत इत्यर्थः । – **शाङ्करभाष्यम्**

(भा) तत्त्वतः भगवद्रूपात् ॥२१॥

(टी) 'अतीतानागते काले यत्तादृशमुदीर्यते ।
कथञ्चिदन्यथा नेयात् तत् तत्त्वं तत्त्वतो विदुः ॥'[१]
इति वचनात् तत्त्वं हि भगवद्रूपम्[२] ॥२१॥

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।**
**यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥२२॥**
**तं विद्याद्दुःखसंयोगवियोगं योगसञ्ज्ञितम् ।**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥२३॥**

(टी) ननु दुःखसंयोगः तद्वियोगश्चात्मनः परमार्थतो न सम्भवतः । अतोऽत्र विपरीतलक्षणाश्रयणेन दुःखसंयोगवियोगमात्मानं योगसञ्ज्ञितं विद्यादिति कश्चित्[३] । तन्न । जीवस्य दुःखसंयोगो येन भगवता [४]तद्विषयेण वा योगेन वियुज्यते सः दुःखसंयोगवियोग इति जीवपरमात्मनोर्भेदेनैव मुख्यार्थे सम्भवति विपरीतलक्षणाश्रयणायोगादिति भावेनैतत्पदं व्याचष्टे – दुःखेति ॥

(भा) दुःखसंयोगो येन वियुज्यते सः दुःखसंयोगवियोगः ।

---

१. भागवततात्पर्ये महासंहितावचनत्वेनोदाहृतम् १/२/११

२. तथा च प्राचीनटीका – ''अतीतेऽनागते काले यत् तादृशमुदीर्यते । कथञ्चिदन्यथा नेयात् तत् तत्त्वं तत्त्वतो विदुः'' इति वचनात् तत्त्वं हि भगवद्रूपम्'' इति ।
– भावरत्नकोशे

३. तं विद्यात् विजानीयात् । दुःखसंयोगवियोगम् । दुःखैः संयोगो दुःखसंयोगः, तेन वियोगो दुःखसंयोगवियोगः, तं दुःखसंयोगवियोगं योग इत्येव सञ्ज्ञितं विपरीतलक्षणेन विद्यात् विजानीयादित्यर्थः । – शाङ्करभाष्यम् ।

४. तद्विषये वा – पा

(टी) ननु दुःखसंयोगः तद्वियोगश्चात्मनो न स्त इति विपरीतलक्षणाश्रयणमेव सूचयति संयोगशब्दः । अन्यथा दुःखवियोगमित्येतावताऽलम्, किं संयोगेन? इत्यत आह – **न केवलमिति** ॥

(भा) **न केवलमुत्पन्नं दुःखं नाशयति, उत्पत्तिमेव निवारयतीति दर्शयति संयोगशब्देन ।**

(टी) युक्तदुःखसंयोगेन [१]वियुज्यते इत्येतावदेव न, किन्तु तदुपरिष्टात् दुःखं न संयुज्यत इत्यर्थः ।

यतोऽयमात्यन्तिकं सुखमापादयति[२] दुःखं चोत्पत्स्यमानमपि निवारयति[३], अतो दुःखासंस्पृष्टात्यन्तिकसुखरूपात्माऽत्र । स चेच्छुनाऽनुष्ठेय[४] एव योग इति प्रकृतात्युपयोगित्वेन 'निश्चय'पदार्थमाह – **निश्चयेनेति** ॥२३॥

(भा) निश्चयेन योक्तव्यः **योक्तव्य एव बुभूषुणेत्यर्थः** ॥२३॥

**सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥२४॥**

(टी) 'सर्व-अशेष'शब्दयोरर्थभेदमाह – **सर्वानित्यादिना** ॥

(भा) **सर्वान् सर्वविषयान्** । अशेषतः **एकविषयोऽपि कामः** [५]**स्वल्पः कादाचित्कोऽपि न कर्तव्य इत्यर्थः** ।

---

१. न युज्यत – पा
२. -दयते – पा
३. -रयते – पा
४. सुखरूपात्मकसत्वेच्छुनानुष्ठेय – पा
५. "'कामः स्वल्पः कादाचित्कोऽपि' इति मूलपाठः ।" इति **प्रमेयदीपिकायाम्** ।
'कामः सङ्कल्पः' इति पाठः प्रामादिकः – इति **श्रीनिवासतीर्थाः** ।

(टी) नन्वन्येनापीन्द्रियग्रामनियमने को दोषः, येन 'मनसैव' इत्यवधार्यते ? इत्याशङ्क्यान्येन नियन्तुमशक्यत्वादेवावधार्यते नान्यदोषेणेत्याह – मनसेति ॥२४॥

(भा) मनसैव नियन्तुं शक्यते नान्येनेत्येवशब्दः ॥२४॥

(टी) ननु [1]बुद्धेरपीन्द्रियग्रामनियमनसम्भवात् कथं 'मनसैव' इत्यवधार्यते? इत्यत आह – बुद्धेरिति ॥

**शनैःशनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥२५॥**

(भा) बुद्धेः कारणत्वं मनोनिग्रह आत्मरमणे ॥२५॥

(टी) 'आत्मसंस्थम्' इत्यादिना मनोनिग्रह उच्यते । 'शनैः' इत्यादिनाऽऽत्मरमणं च । 'उप' समीप आत्मनो रमेतेति[2] ॥२५॥

**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥**

(टी) सर्वेन्द्रियनिरोधेऽपि मनोऽनिर्गमनाद्यतो यत इन्द्रियाणि निश्चरतीति न व्याख्येयम् । किं तर्हि? इत्यत आह – यतो यत इति[3] ॥

---

१. बुद्धेरप्यन्तःकरणतयाऽपीन्द्रिय० – पा

२. प्राचीनटीकायां तु – ''आत्मसंस्थं मनः इति मनोनिग्रह उच्यते । शनैः शनैरित्यादिना उप समीपे आत्मनो रमेत इत्यात्मरमणं च'' इत्युक्तम् । – **भावरत्नकोशे**
प्रमेयदीपिकायां तु विग्रहो न सूचितः । 'अनेन उपरमेदित्यस्यार्थद्वयमुक्तं भवति' इतीयदेव भावप्रदीपिकां च मनसि निधाय । तथा हि भावप्रदीपिका – ''अनेन 'शनैः शनैरुपरमेत्' इति व्याख्यातं भवति । 'उपरमेत्' विषयेभ्यः, परमात्मन उप समीपे रमेदिति च ।''

३. यतो यतः श्रोत्रादेरिति प्रतीतिनिरासायाह – यत इति ॥ – **प्र.दी.**

(भा) यतो यतः यत्र यत्र । 'यतो यतो धावति'[१] इत्यादिप्रयोगात् ।

(टी) [२]मनस आत्मविषयत्वस्यैव प्रस्तुतत्वात् तथैव व्याख्येयम् । न वृथा सप्तमीभङ्गेनात्मवशत्वमात्रमर्थ इति भावेनाह – आत्मनीति[३] ॥२६॥

(भा) आत्मन्येव वशं नयेत् आत्मविषय एव वशीकुर्यादित्यर्थः ॥२६॥

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥२७॥**

**एवं युञ्जन्[४] सदाऽऽत्मानं योगी विगतकल्मषः ।**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥२८॥**

(टी) ननु योगिनः सुखावाप्तिरुच्यते 'प्रशान्तमनसम्' इति श्लोके तदुत्तरश्लोके च । अतः को [५]विशेषोऽनयोः? इत्यत आह – पूर्वेति ॥२७,२८॥

(भा) पूर्वश्लोकोक्तं प्रपञ्चयति – एवं युञ्जन्निति ॥२७,२८॥

(टी) भवत्वयं समाधियोगप्रकारः सफलः । अत्र किं ध्येयम्? इत्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकमवतार्य व्याचष्टे – ध्येयमिति ॥

(भा) ध्येयमाह – सर्वभूतस्थमिति ॥

**सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥२९॥**

---

१. भागवते १०/१/४२
२. मनसाऽऽत्मविषय० – पा
३. षष्ठ्या ह्यत्र भाव्यम् । सप्तमी तु कथमित्यत आह – आत्मनीति ॥ – प्र.दी.
४. युञ्जन्नेवं – पा
५. विशेष इत्यत आह – पा

(भा) सर्वभूतस्थमात्मानं परमेश्वरम् । सर्वभूतानि चात्मनि परमेश्वरे । तं च परमेश्वरं ब्रह्मतृणादावैश्वर्यादिना साम्येन पश्यति ।

(टी) यं सर्वभूतानामन्तर्यामिणं यस्मिन्नितराणि ब्रह्मादिस्थावरान्तानि भूतान्याश्रितानि योगयुक्तात्मानः पश्यन्ति, स परमात्मैवेत्यत्र प्रमाणमाह – तच्चेति ॥

(भा) तच्चोक्तम् –

'आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।
अपश्यत् सर्वभूतानि भगवत्यपि चात्मनि'[१] इति ।

(टी) सर्वान्तर्यामित्वेन सर्वगुणपूर्णत्वेन सर्वत्र साम्यं च परमेश्वरस्यैवेति गीतास्वेव सिद्धमित्याह – सममिति ॥

(भा) 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्'[२] इति च ॥२९॥

(टी) एवमात्मशब्दस्य परममुख्यार्थपरमात्मपरत्वे सम्भवति, न वृथा सर्वभूतस्थं स्वमात्मानमिति[३] मुख्यमात्रजीवपरत्वं कल्पनीयम्[४] । न हि जीवस्य युगपत् सर्वभूतस्थता । तस्योत्क्रान्त्यादिभिरणुत्वस्य साधितत्वात्[५] । न च तदणुत्वस्यौपाधिकत्वे प्रमाणमस्ति । अत एवासौ न सर्वभूताश्रयः । सर्वभूतानि चात्मन्येकत्वं गतानीत्यश्रुतकल्पनं च तत्पक्ष इत्यलं विस्तरेण ॥

---

१. भागवते ३/२५/४७
२. गी. १३/२८
३. स्वात्मानमिति – पा
४. सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वमात्मानम् । – शाङ्करभाष्यम्
सर्वभूतसमानाकारं स्वात्मानम् । स्वात्मसमानाकाराणि च सर्वभूतानि पश्यतीत्यर्थः । – रामानुजभाष्यम्
५. ॐ उत्क्रान्तिगत्यागतीनाम् ॐ (ब्र.सू. २/३/२०)

'आत्म'शब्दोक्तं भगवन्तमेवास्मच्छब्देन परामृश्य तज्ज्ञानिनः फलाभिधानाच्च पूर्वोक्त[1] आत्मा भगवानेवेत्यभिप्रायेणोत्तरं श्लोकमवतार्य व्याचष्टे – **फलमिति**[2] ॥

(भा) फलमाह – यो मामिति ॥

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥३०॥**

**(भा) तस्याहं न प्रणश्यामीति सर्वदा योगक्षेमवहः स्यामित्यर्थः । स च मे न प्रणश्यति सर्वदा मद्भक्तो भवति ।**

(टी) ननु सतामेव कार्यविशेषाकारित्वेनासत्वव्यवहारः क्व दृष्टः? येन विद्वद्भगवतोरेव परस्परं प्रत्यनाशित्वं स्यादित्यत आह – **सत्यपीति** ॥

**(भा) सत्यपि स्वामिन्यरक्षत्यनाथः, एवं भृत्येऽप्यभृत्य इति हि प्रसिद्धिः ।**

(टी) भृत्येऽपि 'अभजति' इति शेषः[3] ।

न केवलं दृष्टान्तमात्रेणैतदुपपादितमित्याह – **उक्तं चेति**[4] ॥

**(भा) उक्तं च –**

---

१. पूर्व – पा

२. किञ्चैतदर्थानुवादेन फलप्रतिपादकमुत्तरवाक्यमप्यस्य भगवद्विषयत्वं ज्ञापयतीति भावेनाह – फलमिति ॥ **– प्र.दी.**

३. तथा च 'अभजति' इति मुद्रितपुस्तके प्रक्षिप्तं भाष्ये । भावप्रदीपिकायामपि अभजति इति शेष इति श्रीपद्मनाभतीर्थभट्टारकाः । प्रमेयदीपिकायामपि 'एवं सत्यपि भृत्ये अभजति अविद्यमानभृत्योऽयमिति स्वामिनि प्रसिद्धिः । अत्र भावरत्नकोशश्च – '' 'अरक्षति' इत्यस्य प्रतियोगिभूतं शेषमाह – अभजतीति ॥'' इति ।

४. अत्र 'न प्रणश्यामि' इत्यस्य ''योगक्षेमवहो भवामि इत्यर्थकत्वे न केवलमेवं तल्लोकन्यायगम्यम्, पुराणे कथितं चेति भाष्ये चशब्दः'' इति प्राचीनटीका ।
**– भावरत्नकोशे** (मुद्रितपुस्तके पदच्छेदः प्रामादिकः)

'सर्वदा सर्वभूतेषु समं मां यः प्रपश्यति ।
अचला तस्य भक्तिः स्याद्योगक्षेमं वहाम्यहम् ॥' इति गारुडे ॥३०॥

(टी) न च तस्याहं न परोक्षीभवामि, स च मे न परोक्षीभवतीति व्याख्येयम्[१] । देशकालादिभिरविलुप्तावबोधात्मकत्वात् भगवतः[२] को परोक्षीभवति, तमृते सर्वेषामिति, तद्रूपत्वात् सोऽपि न कस्यापि परोक्षीभवेदिति विशेषप्रतिषेधानुपपत्तेः ॥३०॥

उत्तरेण स्पष्टयमानत्वादप्ययमेव श्लोकद्वयार्थ इति भावेनाह – एतदेवेति ॥

(भा) एतदेव[३] स्पष्टयति – सर्वभूतस्थितमिति ॥

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥३१॥**

(भा) एकत्वमास्थितः सर्वत्रैक एवेश्वर इति स्थितः । सर्वप्रकारेण वर्तमानोऽपि मय्येव वर्तते ।

(टी) तथाहि । 'सर्वत्र समदर्शनः' इत्यत्र यत्समशब्दोक्तमेकत्वं सर्वभूतस्थितानां तदत्र स्पष्टयते 'एकत्वमास्थितः' इति । तच्चैकत्वं 'माम्' इत्युक्त्या भगवद्रूपाणामेवेत्यवगम्यते । न तु जीवपरमात्मनोः, तत्प्रापकाभावात् । 'तस्याहं न प्रणश्यामि' इति यत् सदा योगक्षेमवहत्वं भगवता प्रतिज्ञातम्, तत् स्पष्टयते 'स योगी मयि वर्तते' इत्यनेन[४] ।

---

१. तस्यैवं आत्मैकत्वदर्शिन अहमीश्वरो न प्रणश्यामि, न परोक्षतां गमिष्यामि । स च मे न प्रणश्यति । स च विद्वान् मम वासुदेवस्य न प्रणश्यति न परोक्षीभवति । तस्य च मम चैकात्मकत्वात् । – शाङ्करभाष्यम्

२. देशतः कालतो योसाववस्थातः स्वतोऽन्यतः ।
अविलुप्तावबोधात्मा स युज्येताजया कथम् ॥ – भागवते ३/७/५

३. 'तदेव' इति प्रचलितपाठः ।

४. प्राचीनटीकायां तु ''सर्वभूतस्थम् इत्यादिश्लोकद्वयमेव स्पष्टयते – तथा हीति ॥ सर्वत्र

ननु यथेष्टचरणस्य ज्ञानपादे निरस्तत्वात्[१] कथं यथेष्टचारिणो योगक्षेमं वहति भगवान्? इत्यत आह – **एवमिति** ॥

**(भा) एवमपरोक्षं पश्यतो ज्ञानफलं नियतमित्यर्थः ।**

(टी) यथेष्टचरणस्य विधिरेव निषिद्धस्तत्र । ज्ञानफलस्य मुक्तेर्नियतत्वेनानुमितिमात्रं तु तत्राप्युक्तमिति भावः ।

ननु यथेष्टचारिणोऽपि ज्ञानफलं नियतं चेत्[२] सर्वेऽप्यधर्मं कुर्युरित्याशङ्का । नायं दोषः । न ह्यसावधर्मं प्रायः करिष्यति । प्रमादकृतं[३] तु स्वल्पं [४]भस्मीभविष्यति । महदपि प्रारब्धदुःखसूचनेन कृतार्थं भवतीत्येतत् सप्रमाणकमाह – **तथाऽपीति** ॥

**(भा) तथाऽपि प्रायो नाधर्मं करोति । कुर्वतस्तु महच्चेत्, दुःखसूचकं भवतीत्युक्तं पुरस्तात् । आह च –**

**'कदाचिदपि नाधर्मे बुद्धिर्विष्णुदृशां भवेत् ।**
**प्रमादात् तु कृतं पापमल्पं भस्मीभविष्यति ।**

---

समदर्शन इत्युक्तं समदर्शनमेव एकत्वमास्थित इति स्पष्टीक्रियते । अत्रोक्तमेकत्वमेकरूपत्वं भगवद्रूपाणां युक्तम् । जीवपरमात्मनोः तत्प्रापकाभावात् । न प्रणश्यामीति यत् सदा योगक्षेमवहत्वं भगवता पूर्वमुक्तं तदेव स्पष्ट्यते 'स योगी मयि वर्तते' इत्यनेन'' ।
**– भावरत्नकोशे**

एकत्वमास्थित इत्यस्यान्यथाप्रतीतिनिरासार्थमर्थमाह – एकत्वमिति ॥ **– प्र.दी.**

१. 'अथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात् तेनेदृश एव' इति ज्ञानिनो यथेष्टाचरणं विधीयत इत्यत आह – ॐ स्तुतयेऽनुमतिर्वा ॐ । न विधिः । ज्ञानिनः स्तुतयेऽनुमतिमात्रं वा । युज्यते च । **– ब्र.सू.भा. ३/४/१४**

२. ननु यथेष्टचरणेऽपि ज्ञानिफलानि प्राप्तं चेत् – पा

३. विमोहककृतं – पा

४. भविष्यति – पा

**आदिराजैस्तथा देवैर्ऋषिभिः क्रियते कियत् ।**
**बाहुल्यात् कर्मणस्तेषां दुःखसूचकमेव तत् ॥' इति ॥३१॥**

(टी) अपि महदप्यानन्दमीषत् ह्रासयति, न मुक्तिं प्रतिबध्नातीति भावः ॥३१॥

'सर्वत्र समदर्शनः' इत्युक्तं समत्वम् 'एकत्वमास्थितम्' इत्यनेन सर्वगतभगवद्रूपाणां परस्परैक्यपरत्वेन व्याख्याय, भगवदनुवर्तिषु स्वसाम्यपरत्वेनापि व्याचष्ट इति भावेनोत्तरं श्लोकमवतारयति – **साम्यमिति**[1] ॥

(भा) साम्यं प्रकारान्तरेण व्याचष्टे – आत्मौपम्येनेति ॥३२॥

**आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।**
**सुखं वा यदि वा दुःखं स योगी परमो मतः ॥३२॥**

(टी) ननु 'आत्मौपम्येन सर्वत्र' इति सर्वशब्दात्, हर्यधिष्ठानत्वसाम्याच्च, सर्वेष्वात्मौपम्यं किं न स्यात् ? मातृद्विण्मातुलादिमान्यत्वहानवद्धरिद्विट्तदधिष्ठानादियाथात्म्यताहानादिति ब्रूमः ॥३२॥

**अर्जुन उवाच –**

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।**
**एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥३३॥**

---

१. अतो विष्ण्वनुवर्तिषु स्ववत् स्नेहः कर्तव्यः । – **गीतातात्पर्ये**

भगवदनुवर्तिविषयतयाऽपीति ॥ भगवद्भक्तेषु स्वसाम्यपरतयाऽपीत्यर्थः । तथा च 'विष्ण्वनुवर्तिषु स्ववत् स्नेहः कर्तव्यः' इति तात्पर्यानुसारिणी ''भगवदनुवर्तिषु स्वसाम्यपरत्वेनापि व्याचष्टे'' इति प्राचीनटीका । – **भावरत्नकोशे**

समदर्शन इत्युक्ते किं गोगवयादिवत् भगवति साम्यदर्शीमित्याकाङ्क्षायाम् एकत्वमास्थित इति स्वयमेव व्याख्यातम् । इदानीं तु भगवदनुवर्तिविषयतयाऽपि व्याचष्ट इत्यर्थः । – **प्र.दी.**

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥३४॥**

**श्रीभगवानुवाच –**

**असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥३५॥**

(टी) 'योऽयम्' इत्यादिश्लोकत्रयार्थं समासतः सप्रमाणकमाह – एतस्येत्यादिना ॥

(भा) एतस्य योगस्य स्थिरां स्थितिं न पश्यामि मनसश्चञ्चलत्वात् । उक्तं च –

'मनसश्चञ्चलत्वाद्धि स्थितिर्योगस्य वै स्थिरा ।
विनाऽभ्यासं न शक्या स्याद्वैराग्याद्वा न संशयः'

– इति व्यासयोगे ॥३३-३५ ॥

**असंयतात्मना योगो दुष्प्राप इति मे मतिः ।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥३६॥**

(टी) ननु कालतः स्वयमेव मनो नियम्यते । किं तत्राभ्यासेन? वैराग्येण वा? इत्यत आह – न चेति ॥

(भा) न च कदाचित् स्वयमेव मनो नियम्यते –

'शुभेच्छारहितानां च द्वेषिणां च रमापतौ ।
नास्तिकानां च वै पुंसां सदा मुक्तिर्न जायते ॥'

– इति निषेधाद्ब्राह्मे ॥३६ ॥

(टी) सदा इत्यस्यादितस्त्रिष्वपि सम्बन्धः[१] । अनेन 'असंयत..' इति श्लोकस्य तात्पर्यमुक्तं भवति ॥३३-३६॥

अर्जुन उवाच –

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥३७॥**

(भा) अयतिः अप्रयत्नः ॥३७॥

(टी) अयतिरप्रयत्नो न त्वसन्यासीति भावः ॥३७॥

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥३८॥**

**एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।**
**त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥३९॥**

**श्रीभगवानुवाच –**

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।**
**न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति ॥४०॥**

**प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥४१॥**

**अथवा योगिनामेव कुले भवति धीमताम् ।**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥४२॥**

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।**
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥४३॥**

---

१. सदेति पूर्वेण सम्बन्धः । – प्र.दी.

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥४४॥**

(टी) न च योगमभ्यसंस्ततो विभ्रष्टस्तेनैवाभ्यासलेशेन योगमासाद्याप्नोति भगवन्तमित्येतदाश्चर्यम् । ततोऽत्यन्तं योगज्ञानेच्छुरपि क्रमेणाप्नोति भगवन्तमित्यभिप्रायेण जिज्ञासुरपीति श्लोकं व्याचष्टे – **योगस्येति**[1] ॥

(भा) **योगस्य जिज्ञासुरपि, ज्ञातव्यो मया योग इति यस्यातीवेच्छा सोऽपि । शब्दब्रह्मातिवर्तते परं ब्रह्म प्राप्नोतीत्यर्थः** ॥४४॥

(टी) ज्ञातव्यः इत्यादिनाऽत्र ज्ञानेच्छुरेव जिज्ञासुः, न तु विचारकृदिति द्योतयति[2] । ब्रह्मेशानादिसर्वशब्दार्थत्वात्, शब्दब्रह्म हिरण्यगर्भः । तं यदाऽतिवर्तते तदा परब्रह्मैव प्राप्नोतीत्यभिहितं भवति[3] ॥४४॥

न च योगजिज्ञासोरुक्तक्रमेण परब्रह्मावाप्तिः, तस्मिन्नेव जन्मनि ब्रह्मानवाप्त्या तदभावः शङ्कनीय इति भावेनोत्तरं श्लोकमवतार्य व्याचष्टे – **नैकेति** ॥

(भा) **नैकजन्मनीत्याह – प्रयत्नादिति** ॥

---

१. तदुक्तं प्राचीनटीकायाम् – ''योगमभ्यस्यन् ततो विभ्रष्टः तेनैवाभ्यासलेशेन योगमासाद्याप्नोति भगवन्तमित्येन्नाश्चर्यम् । यतोऽत्यन्तं योगज्ञानेच्छुरपि क्रमेणाप्नोति भगवन्तमित्यभिप्रायेण प्रवृत्तं जिज्ञासुरपीति श्लोकं व्याचष्टे'' इति । – **भावरत्नकोशे**

२. 'ब्रह्मजिज्ञासा' इत्यादाविव विचारार्थताशङ्कानिरासाय व्याचष्टे – ज्ञातव्य इति ॥ – **प्र.दी.**

३. प्राचीनटीकायां तु ''शब्दब्रह्म हिरण्यगर्भः । यदा च तमतिवर्तते तदा परब्रह्मैव प्राप्नोतीत्यभिप्रायेणैवमभिहितम्'' इत्युक्तम् । – **भावरत्नकोशे**

'शब्दब्रह्मशब्देन वैदिकविधिनिषेधावत्रोच्येते' इति प्रमेयदीपिका तु भावप्रदीपिकानुसारेण । तथा हि **भावप्रदीपिका** – ''शब्दब्रह्म विधिनिषेधादिरूपो वेदः'' इति ।

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥४५॥**

(भा) जिज्ञासुर्ज्ञात्वा प्रयत्नं करोति । एवमनेकजन्मभिः संसिद्धोऽपरोक्षज्ञानी भूत्वा परां गतिं याति ।

(टी) 'संसिद्ध'पदव्याख्या अपरोक्षज्ञानी भूत्वा इति । योगजिज्ञासोरुक्त-क्रमेण परब्रह्मावाप्तिं पुराणवाक्येन स्थापयति – आह चेति ॥४५॥

(भा) आह च –
'अतीव श्रद्धया युक्तो जिज्ञासुर्विष्णुतत्परः ।
ज्ञात्वा ध्यात्वा तथा दृष्ट्वा जन्मभिर्बहुभिः पुमान् ।
विशेन्नारायणं देवं नान्यथा तु कथञ्चन ॥' इति नारदीये ॥४५॥

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥४६॥**
**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥४७॥**

**॥ इति श्रीमद्भगवद्गीतायां षष्ठोऽध्यायः ॥**

(टी) यत एवं योगज्ञानेच्छुरप्यन्ततः परमाप्नोति, अतः सर्वसाधनोत्तमत्वा-दवश्यानुष्ठेयो योग इति भावेनोत्तरं श्लोकं व्याचक्षाणः तद्विषयज्ञानादेव ध्यानयोगोऽधिकः, न परमात्मज्ञानादपीत्याह – ज्ञानिभ्य इति ॥

(भा) ज्ञानिभ्यः योगज्ञानिभ्यः ।

(टी) ज्ञानानुसन्धानस्यैव मुख्यतपस्त्वाद्योगस्य च तदुत्तमत्वनियमासम्भवात् अत्र कृच्छ्रादिचरणं तप इति भावेनाह – तपस्विभ्य इति ॥

(भा) तपस्विभ्यः कृच्छ्रादिचारिभ्यः ।

(टी) ध्यानस्य कृच्छ्राद्युत्तमत्वमुत्तरश्लोकव्याख्यानगारुडपुराण इत्याह –उक्तं चेति ॥

(भा) उक्तं च –

'कृच्छ्रादेरपि यज्ञादेर्ध्यानयोगो विशिष्यते ।
तत्रापि शेषश्रीब्रह्मशिवादिध्यानतो हरेः ।
ध्यानं कोटिगुणं प्रोक्तमधिकं वा मुमुक्षुणाम् ॥'

– इति गारुडे ।

(टी) एतदुक्तं भवति । सर्वेषां योगिनां मध्ये यः श्रद्धावान् योगेन हरिं भजते अणिमादिफलगतेनाप्यन्तरात्मना[१] स युक्ततरः । रमाविरिञ्चादिसर्वयोगिभ्यो हरिगतेनैवान्तरात्मना चेद्युक्ततम इति[२] ॥

ननु ध्यानयोगः परमात्मज्ञानादप्युत्तमः किं न स्यात्? इत्यत आह – अज्ञात्वेति ॥

---

१. मामित्यनन्तरं भावप्रदीपिकारीत्या 'विषयार्थी' इति, प्राचीनटीकारीत्या ''अणिमादिफलकत्वेनाप्यन्तरात्मना'' इति वा संयोज्यम् । – भावरत्नकोशे

२. तपसश्चैव यज्ञादेर्ध्यानमेव विशिष्यते ।
अज्ञानिध्यानतो ज्ञानं ध्यानं सज्ञानमप्यतः ।
तत्रापि मय्यभक्तस्य नान्यद्ध्यानं प्रयोजकम् ।
अन्यसामान्यविद्यो मे यश्चान्यं नेति पश्यति ।
अवरत्वदृगुदासीनो विद्वेषी चेत्यभक्तयः ।
मद्भक्तोऽपि हि कार्यार्थे यो ध्यायेदन्यदेवताम् ।
परिवारमृते तस्मात् केवलं मदुपासकः ।
वरोऽन्यान् मदधीनांश्च सर्वान् जानन् विशुद्धधीः ॥

–गीतातात्पर्योदाहृतदत्तात्रेयवचनम्

(भा) 'अज्ञात्वा ध्यायिनो ध्यानात् ज्ञानमेव विशिष्यते ।
ज्ञात्वा ध्यानं ज्ञानमात्राद्ध्यानादपि तु दर्शनम् ।
दर्शनाच्चैव भक्तेश्च न किञ्चित् साधनाधिकम् ॥'

इति नारदीये ॥४६,४७ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये षष्ठोऽध्यायः ॥

(टी) तदेवं ज्ञानध्यानयोः परस्परोत्तमत्वात्, ध्यानयोगः स्वविषय-ज्ञानादेवाधिको न भगवज्ज्ञानात् परोक्षादपि । किं पुनरपरोक्षज्ञानात् भक्तितश्चेत्यर्थः । 'यो मां भजते स युक्ततमः' इति भक्तिर्हि सर्वसाधनाधिकत्वेनोच्यते[१] ॥४६,४७॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीगीताभाष्यटीकायां
श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां षष्ठोऽध्यायः ॥

---

१. आधिक्यज्ञापनार्थं भक्त्यभ्यासः । – गी.भा. १२/१७

# सप्तमोऽध्यायः

(टी) यदुक्तं विस्तरेणाद्यषट्के त्रिविधं कर्म यज्ञादिलक्षणं भगवदर्पितं सङ्गरहितम्, भगवज्ज्ञानम्, तत्सहितं ध्यानम्[१], तदपरोक्षज्ञानम्, तद्भक्तिश्चेति क्रमोन्नतं साधनजातं सङ्ग्रहेणापि तदन्तश्लोकद्वयेन, तद्भगवन्महिम्नि विशेषतः कथिते सिद्ध्यतीत्यधुना सोऽभिधीयत इति भावेनोत्तरषट्कार्थमाह – साधनमिति ॥

(भा) साधनं प्राधान्येनोक्तमतीतैरध्यायैः । उत्तरैस्तु षड्भिर्भगवन्माहात्म्यं प्राधान्येनाह ।

**श्रीभगवानुवाच**

**मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः ।**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥१॥**

(टी) आद्यश्लोकारूढैवेयं सङ्गतिरिति [२]सूचयन् तं व्याख्यातुमुपक्रमते – आसक्तेति ॥

(भा) आसक्तमनाः अतीव स्नेहयुक्तमनाः ।

(टी) तथाहि । यथा मन्माहात्म्येऽभिधीयमाने मय्यतीव स्नेहयुक्तमना भूत्वा कर्मयोगं समाधियोगं च युञ्जन् मां परोक्षमपरोक्षं च ज्ञास्यति तत्तद्योग्यः, तथा श्रुणूत्तरषट्कमिति ।

ननु किं भगवदाश्रयत्वं नाम? तच्च योगिन एवेत्यत्र को विशेषः? इत्यत आह – मदाश्रय इति ॥

---

१. तद्ध्यानं – पा

२. सूचयंस्तद्व्याख्यातुं – पा

**(भा) मदाश्रयः भगवानेव मया सर्वं कारयति; स एव च मे शरणम्; तस्मिन्नेव चाहं स्थित इति स्थितः ।**

(टी) एतादृशभगवदाश्रयत्वे[1] सर्वेषां विद्यमानेऽप्येतज्ज्ञानन्नेवास्थितो योगी नान्य इत्यर्थः ।

ननु यं ब्रह्माऽपि सर्वविशेषसहितं न पश्यति । तं कथमर्जुनः समग्रं पश्यति? इत्यत आह – **असंशयमिति** ॥

**(भा) असंशयं समग्रमिति क्रियाविशेषणम् ॥१॥**

(टी) 'असंशयम्' इतिवत् 'समग्रम्' इत्यपि क्रियाविशेषणमेव । ततश्च तत्र योग्यज्ञानं[2] यथा समग्रं भवति तथा मां ज्ञास्यसीत्यर्थः । उत्तरश्लोकेऽपि 'ते' तव योग्यं 'ज्ञानमशेषतः' इत्यर्थः ॥१॥

**ज्ञानं तेऽहं सविज्ञानमिदं[3] वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥२॥**

(टी) 'मां यथा ज्ञास्यसि' इति प्रस्तुतत्वात् भगवद्विषयज्ञानस्येदन्तया निर्देश इति भावेनाह – **इदमिति**[4] ॥

**(भा) इदं मद्विषयं ज्ञानम् ।**

---

१. एतादृग्भगवदाश्रयत्वे – पा
२. ततश्च योगतो ज्ञानं – पा
३. ज्ञानं ते तुभ्यम् अहं सविज्ञानम् विज्ञानसहितं स्वानुभवसंयुक्तम् । इदं वक्ष्यामि कथयिष्यामि । अशेषतः कात्स्न्र्येन । – शाङ्करभाष्यम्
४. ननु ज्ञानं वक्ष्यते । न तूक्तम् । तत्कथमिदमिति परामर्श इत्यत आह – इदमिति ॥ मामिति स्वस्य प्रकृतत्वात् तत्सम्बन्धित्वेन ज्ञानमपि प्रकृतमिति भावः । – प्र.दी.

(टी) 'रसोऽहम्'[१] इत्यादिवक्ष्यमाणानन्तविशेषान् विज्ञानपदोद्दिष्टान् भगवत्यसहमानेन मायिनाऽऽच्छादितं 'सविज्ञान'पदं 'सविज्ञानं स्वानुभवसंयुक्तम्' इति । तत् पुनः प्रकाशयति – **विज्ञानमिति** ॥२॥

(भा) **विज्ञानं विशेषज्ञानम्** ॥२॥

(टी) अनन्तमहिमत्वादेव भगवतस्तद्विषयज्ञानं तत्प्रसादं विनाऽतिदुर्लभमिति भावेनोत्तरं श्लोकमवतारयति – **दौर्लभ्यमिति** ॥

(भा) **दौर्लभ्यं ज्ञानस्याह – मनुष्याणामिति** ॥३॥

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥३॥**

(टी) 'रसोऽहम्' इत्यतः [२]प्राक्तनग्रन्थसन्दर्भमवतारयति – **प्रतिज्ञातमिति** ॥

(भा) **प्रतिज्ञातं ज्ञानमाह** – भूमिरित्यादिना ॥

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥४॥**

(टी) महतः किं कारणे प्रकृतावन्तर्भावः ? कार्ये वाऽहङ्कारे? इति संशये सत्याह – **महत इति**[३] ॥४॥

---

१. गी. ७/८

२. प्राक्तनग्रन्थमवतारयति – पा

३. प्राचीनटीकायां तु 'महतोऽहङ्कार एव' इति भाष्यं "महत्तत्वस्य किं कारणे प्रकृतावन्तर्भावः, कार्येऽहङ्कारे वेति संशये सत्याह" इत्यवतारितम् ।

**– भावरत्नकोशे**

महत्तत्त्वमत्र नोपात्तम् । तत् किं नास्त्येव इत्यत आह – महत इति ॥ **– प्र.दी.**

(भा) महतोऽहङ्कार एवान्तर्भावः ॥४॥

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ।**
**एतद्योनीनि भूतानि सर्वाणीत्युपधारय ॥५॥**

(टी) अपरशब्दस्याभेदेऽपि प्रयोगात्, प्रकृत्यात्मनैषामभेदसम्भवाच्चाभेदवाच्ययमित्याशङ्क्याह – **अपरेति** ॥

(भा) अपरा **अनुत्तमा वक्ष्यमाणामपेक्ष्य** ।

(टी) अहङ्कारादिरूपिण्या अस्याः प्रकृतेर्महान्तं मूलप्रकृतिं वाऽपेक्ष्यानुत्तमत्वशङ्कायामाह – **वक्ष्यमाणामिति** ॥

यतोऽत्र 'इयम्' इति मूलप्रकृतिरेवोच्यते सैवाष्टकार्यरूपेणाष्टधा भिन्ना । अहङ्कारात् सात्विकात्मनः, राजसात् बुद्धिः, तामसात् खादयः पञ्चेति सेयं सकार्यमूलप्रकृतिरपरेत्युच्यते[1] । पृथक्कार्यरूपेणाष्टधा भिन्ना । अतः सूक्तं **वक्ष्यमाणामपेक्ष्य** इति ।

एतेनैतदपि प्रत्युक्तम् । यदुक्तं मायिना भूम्यादिशब्दैस्तन्मात्राण्येवोच्यन्ते, न स्थूलानि । मनोबुद्ध्यहङ्कारशब्दैस्तु मनोबुद्ध्यङ्कारकारणान्यहङ्कारमहदव्यक्तानि, 'भिन्ना प्रकृतिरष्टधा' इति वचनादिति[2] । तदसत् । भूम्यादिशब्दैः स्थूलसूक्ष्माभिधानेऽप्यौषध्यादिकारणत्वेन प्रकृतित्वसम्भवात् न स्वार्थसङ्कोचः कार्यः ।

---

१. -त्युच्यते च – पा

२. भूमिरिति पृथिवी तन्मात्रमुच्यते, न स्थूला । भिन्ना प्रकृतिरष्टधा' इति वचनात् । तथाबादय अपि तन्मात्राण्येवोच्यन्ते । आप अनलो वायुः खं मन इति मनसः कारणमहङ्कारो गृह्यते । बुद्धिरिति अहङ्कारकारणं महत्तत्वम् । अहङ्कार इति अविद्यासंयुक्तमव्यक्तम् । – **शाङ्करभाष्यम्**

मनोबुद्ध्यहङ्कारशब्दैस्तत्तदर्थाभिधानेऽपि स्थूलप्रकृतिव्यतिरिक्तानां[१] प्रकृतिविकृतानामेवाष्टविधत्वसम्भवात् न स्वार्थपरित्यागः कल्पनीयः। मनोबुद्ध्योश्च संशयनिश्चयकारणत्वेन[२] प्रकृतित्वमिति[३]।

ननु कोपरिवक्ष्यमाणेतःपरत्वेन? इत्याकाङ्क्षायाम्, जीवशब्दात्, तथैवान्यैर्व्याख्यातत्वाच्च[४] जीवा एवेति प्राप्ते, आह – जीवभूतेति ॥

**(भा) जीवभूता श्रीः।**

**(टी)** ननु 'जीव प्राणधारणे' इति धातोः श्रीरपि जीवभूता चेत्, संसारिवत् देहेन्द्रियप्राणधारिणी स्यादित्यत आह – **जीवानामिति** ॥

**(भा) जीवानां प्राणधारिणी।**

**(टी)** स्वयं भगवानिव ज्ञानानन्दादिगुणसान्द्रसुन्दरमूर्तिरूपा यतो ब्रह्मादिसर्वजीवानां प्राणधारिणी अत एव जीवशब्दोक्ता। यतः श्रीरेवाह स्वसूक्ते – 'मया सोऽन्नमत्ति यो विपश्यति यः प्राणिति'[५] इत्यादि।

चिद्रूपत्वाच्च [६]जीवशब्दोक्ता सेत्याह – **चिद्रूपेति**[७] ॥

---

१. ०त्यतिरिक्तानां – पा

२. विवृतमेतत्सर्वं कपिलगीतादौ – श्रीमद्भागवते।

३. प्राचीनटीकायां तु भूम्यादिशब्दैः स्थूलभूम्याद्यभिधानेऽपि तेषामोषध्यादिकारणत्वेन प्रकृतित्वम्, मनोबुद्ध्योश्च संशयनिश्चयकारणत्वेन प्रकृतित्वमवधेयमिति न प्रकृतिशब्दास्वारस्यमस्मत्पक्षे। – **भावरत्नकोशे**

४. जीवभूतां जीवत्वं प्राप्तां भोक्तृरूपेणावस्थिताम्। – भास्करभाष्यम्

५. ऋग्वेदे १०/१२४/४; ६. जीवशब्दोक्तेत्याह – पा

७. तथा च प्राचीनटीका – ''ज्ञानानन्दादिगुणसान्द्रमूर्तिर्यतो ब्रह्मादिजीवानां प्राणधारिणी। अत एव जीवशब्दोक्ता। यतः श्रीरेवाह स्वसूक्ते 'मया सो अन्नमत्ति यो विपश्यति यः प्राणिति यः' इत्यादीति। चिद्रूपत्वाच्च जीवशब्दोक्तेत्याह – चिद्रूपेति ॥'' प्राचीनटीकामनुरुन्धानो भाष्यमन्यथाऽपि योजयति – यद्वेति ॥ – **भावरत्नकोशे**

(भा) चिद्रूपा ।

(टी) 'एतन्महद्भूतम्' इत्यादिश्रुताविव सर्वदा सत्त्वमेव भूतशब्दार्थो न तु जातत्वमिति भावेनाह – भूतेति[१] ॥

(भा) भूता सर्वदा सती । 'एतन्महद्भूतम्' इति श्रुतेः ।

(टी) न हि महत्त्वेन जातमिति श्रुत्यर्थः ।

जीवभूतां जीवत्वं प्राप्तामिति यदन्येनोक्तं तदनेन निरस्तं भवति । 'ययेदं धार्यते जगत्' 'एतद्योनीति भूतानि सर्वाणि' इत्येकस्या एव सर्वजगदाधारत्वं सर्वभूतोत्पत्त्यादिकत्वं चोच्यमानम् । 'अहं मित्रावरुणोभा बिभर्मि','यं कामये तं तम्' इत्याद्युक्ता श्रीरेव जीवभूता प्रकृतिः, न बहवः संसारिण इत्यलं विस्तरेण ।

इममेवार्थं 'भूमिः' इत्यादिसार्धश्लोकद्वयस्यान्यत्र[२] भगवान् व्यक्तमुवाचेत्याह – जगादेति ॥

(भा) जगाद च –

**प्रकृती द्वे तु देवस्य जडा चैवाजडा तथा ।**
**अव्यक्ताख्या जडा सा च सृष्ट्या भिन्नाऽष्टधा पुनः ।**

---

चिद्रूपेति ॥ ज्ञानात्मकविग्रहवती । यद्वा, 'जीव प्राणधारणे' इत्यतो जीवशब्दस्य यौगिकार्थमुक्त्वा गौणीं वृत्तिमाश्रित्यार्थान्तरमनेनोक्तम् । – प्र.दी.

१. 'जीवानां प्राणधारिणी चिद्रूपभूता सर्वदा सती' इत्येव सर्वत्र मुद्रितपाठः । टीकात्रय-पर्यालोचनया 'जीवानां प्राणधारिणी चिद्रूपा । भूता सर्वदा सती' इति पाठ एव आचार्यसम्मत इति भाति । अत्र 'भूतेति' इति प्रतीकग्रहणाच्च वाक्यभेद एव साधीयान् । अत एव चिद्रूपत्वाच्चेत्युक्तम् । न तु चिद्रूपभूतत्वाच्चेति । प्रमेयदीपिकायां 'ज्ञानात्मकविग्रहवती' इति व्याख्याऽपि वाक्यभेद एव घटते ।

२. इत्यादिश्लोकद्वयस्यान्यत्र – पा

महान् बुद्धिर्मनश्चैव पञ्चभूतानि चेति हि ।
अवरा सा जडा श्रीश्च परेयं धार्यते तया ।
चिद्रूपा सा त्वनन्ता च अनादिनिधना परा ।
यत्समं तु प्रियं किञ्चिन्नास्ति विष्णोर्महात्मनः ।
नारायणस्य महिषी माता सा ब्रह्मणोऽपि हि ।
[१]आभ्यामिदं जगत् सर्वं हरिः सृजति भूतराट् ॥'

इति नारदीये ॥५

(टी) देवस्य इति देवाद्भेदः प्रकृत्योरुच्यतेऽत्र । 'इयं मे पराम्' इति गीतायामपि । अतोऽपि न भगवत्स्वरूपा जीवभूता प्रकृतिः । **पुनरिति** ॥ मूलप्रकृतिरूपतः पृथक् प्रकृतिविकृतिरूपेणैवाष्टधेत्यर्थः ॥५॥

न च जगत्कर्त्र्योर्भगवदधीनत्वमात्रं[२] भगवदैश्वर्यम् । किन्तु तयोर्महदादिषु च सर्वेषु स्थित्वा भगवानेव जगदुत्पत्त्यादि करोति[३] । स एव सर्वस्मात् परतमः । तस्मिन्नेव सर्वमिदं प्रोतमितीत्यभिप्रायेणोत्तरं [४]श्लोकत्रयमवतारयति – **न केवलमिति** ॥

(भा) न केवलं ते जगत्प्रकृती मद्वशे इत्येतावन्मदैश्वर्यमित्याह – अहमिति ॥

**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥६॥**

---

१. 'आभ्यामिदं' इति ह्पाठः भावप्रदीपिकानुगुणः । 'ताभ्यामिदं' इति प्रचलितपाठः ।

२. प्राचीनटीकायां भावप्रदीपिकायां च ''जगतः प्रकृती जगत्प्रकृती इति विग्रह इति लभ्यते'' इति । – **भावरत्नकोशे**

३. विश्वस्थितिप्रलयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबन्धमोक्षाः ।
यस्या अपाङ्गलवमात्रत ऊर्जिता सा श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥**द्वा.स्तो. ७/१**

४. सार्धश्लोकत्रय० – पा

(टी) ननु भवत्पक्षे प्रभवप्रभवित्रोरभेदात् 'अहं कृत्स्नस्य जगतः प्रभवः' इत्याद्युक्तौ 'अहं कृत्स्नं जगत्' इत्येवोक्तं स्यात् । तर्हि कथं भगवतः सर्वस्माद्भेदः? इत्यत आह – **प्रभवादेरिति** ॥

**(भा) प्रभवादेः । सत्ताप्रतीत्यादिकारणत्वात् तद्भोक्तृत्वाच्च प्रभव इत्यादि ।**

(टी) स्वकृतक्षेत्रादिरूपेणोच्यमानमैत्रादिवत् प्रभवादिभोक्तृत्वादपि प्रभव इत्याद्युच्यते । मैत्रादेर्व्रीह्यादिप्रभवादिवत् सर्वजगत्प्रभवादिर्भगवतो भोज्य[1] इति भावः ।

ननु रमाविरिञ्चादिदेवदानवमानवा अपि जगति भागशः कुर्वन्तो भुञ्जाना अपि दृश्यन्ते श्रूयन्ते च केचन । अतो भगवानेव कथं सर्वस्य जगतः कर्ता भोक्ता च? इत्यत आह – **तथा चेति** ॥

**(भा) तथा च श्रुतिः – 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः'[2] इति ।**

(टी) कामाः इच्छाः, तद्विषयाश्च कर्मव्युत्पत्त्या[3] । ते सर्वे सर्वाणि च कर्माणि यस्माद्रमाविरिञ्चाद्यन्तर्यामिणः[4] पृथक्स्थिताश्च स **सर्वकामः सर्वकर्मा** ।

अनेन यदिच्छामात्रेण सर्वजगत उत्पत्त्यादिकर्तृत्वं यच्च व्यापारपूर्वकं तदुभयविधं भगवत एव सम्पूर्णस्वातन्त्र्येण च । रमादीनां यद्भागशः कर्तृत्वं

---

१. भोग्य – पा
२. छान्दोग्योपनिषत् ३/२/९
३. काम्यन्त इति कामा द्रव्याणि । – प्र.दी.
४. ब्रह्मेशशक्ररविधर्मशशाङ्कपूर्वगीर्वाणसन्ततिरियं यदपाङ्गलेशम् ।
आश्रित्य विश्वविजयं विसृजत्यचिन्त्या श्रीर्यत्कटाक्षबलवत्यजितं नमामि ॥
– द्वा.स्तो. ७/२

तदपि केवलं तदायत्तमित्युक्तं भवति ।

उपलक्षणार्थौ **गन्धरसशब्दौ**[१] । अतो गन्धरसरूपस्पर्शशब्दाः सर्वे यस्याधीनाः **सर्वगन्धः** इत्यादि । अनेन भगवान् यथेष्टतः सारभोक्तेति सिद्ध्यति । देवदानवमानवानां सारासारमिश्रभोक्तृत्वेऽपि न भगवत्सर्वभोक्तृत्वहानिः । स्वप्रियविद्वेष्युदासीनानां सारासारमिश्रभोजकत्वस्यापि स्वभोगत्वात्[२] । **सर्वमिदमभ्यात्तः** सर्वेणानेन जगताऽभितः स्वीकृतो भगवान्[३] । तं विनाऽस्य सर्वस्य जगतः सत्ताप्रतीतिप्रवृत्तिशक्त्याद्यभावात्, [४]स्वस्यैव तद्विनाऽपि सत्ताप्रतीतिशक्त्यादिसम्पूर्णत्वात् 'अहो मयेदं लब्धम्' इति न वक्ति न वर्णयतीति **अवाकी** । मनसाऽपि नादरं करोतीति **अनादरः** इत्यर्थः[५] ।

---

१. गन्धरसशब्दौ गुणान्तरस्याप्युपलक्षकौ । – **प्र.दी.**

२. तथा च प्राचीनटीका – ''देवदानवमानवानां सारासारमिश्रभोक्तृत्वेऽपि न भगवतः सर्वभोक्तृत्वहानिः । स्वप्रियद्वेष्युदासीनानां सारासारमिश्रभोजकत्वस्यापि स्वभोगत्वात्'' इति । – **भावरत्नकोशे**

इदमुदाहरणं भावरत्नकोशगतदीर्घप्रबन्धे भगवद्भोगनिर्णये । मूलटीकाव्याख्यानादिसविस्तरपर्यालोचनं तु तत्रैव ।

३. स्थित इति ॥ तिष्ठतेरकर्मकत्वात् कर्तरि क्तप्रत्ययः । सर्वमिदमभितो भगवान् स्थित इति सर्वाभिमुख्यसद्भावात् युक्तमेव तस्य सर्वभोक्तृत्वमिति भावः । तदुक्तं प्राचीनटीकायां सर्वमिदमभ्यात्तः सर्वेणानेन जगताऽभितः स्वीकृतो भगवानिति । – **भावरत्नकोशे**

सर्वमिदं अभि अभितः । आत्तः धृतः स्थित इत्यर्थः । – **प्र.दी.**

४. **स्वस्यैतद्विनाऽपि** – पा

५. प्राचीनटीकायां तु ''इदमद्य मया लब्धम् इति न वक्ति न वर्णयतीति अवाकी । मनसाऽपि नादरं करोतीति अनादरः'' इत्युक्तम् । तत्र 'वच परिभाषणे' इत्यतो भावे घञ् चजोः कु घिण्ण्यतो इति कुत्वेन वाकः वाक्यम् । सोऽस्यास्तीति वाकी । स न भवतीति अवाकी इति । न विद्यते आदरो यस्येति अनादर इत्येव च व्युत्पत्तिः । न वक्ति इत्यादि तु फलितप्रदर्शनमेवेत्यवधेयम् । – **भावरत्नकोशे**

न विद्यते वाक्यमनुग्रहमन्तरेण यस्यासाववाक्यः । न विद्यते आदर आश्चर्यबुद्धिर्यस्यासौ

सर्वभिन्नस्यापि भगवतः सर्वत्ववचनं तत्सत्तादिकारणत्वतद्भोक्तृत्वाभ्यामेवेत्येतत् पुराणवाक्येनापि दर्शयति – **आह चेति ॥**

**(भा) आह च –**

**'स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता ।**
**यतः सर्वस्य तेनाहं सर्वोऽसीत्यृषिभिः स्तुतः ॥**

**(टी)** ननु पूर्णसुखरूपस्य सर्वकर्तृत्वानुपपत्तेः पूर्णसुखरूपस्य च सर्वभोक्तृत्वानुपपत्तेः, उक्तहेत्वोः परस्परविरोधात् सर्वस्वरूपत्वादेव सर्वत्ववचनं[१] भगवतः, न तूक्तहेतुभ्यामित्यत आह – **सुखरूपस्येति ॥**

**(भा) सुखरूपस्य भोक्तृत्वान्न तु सर्वस्वरूपतः ।**
**आगमिष्यत् सुखं चापि तच्चास्त्येव सदाऽपि तु[२] ।**

**(टी)** 'पूर्णानन्दः पूर्णभुक् पूर्णकर्ता' इति श्रुतौ पूर्णसुखरूपस्य पूर्णभोक्तृत्वावगमात् न सर्वकर्तृत्वभोक्तृत्वयोः परस्परविरोधः, अतस्ताभ्यामेव सर्वत्ववचनं[३] भगवतः । यस्मादेवं पूर्णसुखरूपस्यापि भोक्तृत्वं श्रूयते, तत् तस्माद्भोगेन **आगमिष्यत् सुखमपि** सर्वदाऽप्यस्त्येव । [४]सर्वकर्तृत्वादयोऽपि शक्तिरूपेण[५] सदा सन्तीति पूर्वचकारार्थः । अचिन्त्यशक्तेश्चेत्युत्तरच-

---

नादरः । अवाक्यश्चासौ नादरश्चेति अवाक्यनादरः । – प्र.दी.

अत्र भावप्रदीपिकायामपि 'अहमेतादृश इति वाक्यरहितोऽवाकी, ईदृश इति निरूपणं च नास्तीति नादरः ।' इत्येव । अविरोधेन व्युत्पत्तिक्रमः भावरत्नकोशादर्शितः ।

१. सर्वाभेदवचनं – पा
२. 'तस्यास्त्येव सदापि तु' इति हृपाठः पद्मनाभतीर्थीय-नरहरितीर्थीयाननुगुणः ।
३. सर्वभेदवचनं – पा
४. कर्तृत्वादयोऽपि – पा
५. अनित्यत्वात् क्रियाणां तु कथमेव स्वरूपता ।
इति चेत् स विशेषोऽपि क्रियाशक्त्यात्मना स्थिरः ।

कारार्थः । ननु सदातनं सुखं कथं भोगेन जातमित्युच्यते? इत्याशङ्क्य, उत्तरं चकारार्थं विवृणोति – तथाऽपीति ॥६॥

(भा) तथाऽप्यचिन्त्यशक्तित्वाज्जातं सुखमतीव च' इति नारदीये ॥६॥

(टी) एवं जडाजडप्रकृत्योरपरत्वपरत्वोक्तौ परतरः कः? इत्याकाङ्क्षायां स एव निरूपणीयः, न तु सर्वाभेद इति भावेन 'मत्तः' इति श्लोकार्धं व्याचष्टे – अहमेवेति[१] ॥

**मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥७॥**

(भा) अहमेव परतरः । मत्तोऽन्यत् परतरं न किञ्चिदपि ।

(टी) भगवतोऽन्यस्य परतरत्वनिषेधात् स एव परतरः । अन्यत्वमात्रनिषेधे 'परतर'शब्दः 'अन्यत्'शब्दो वा व्यर्थ इति भावः[२] ।

परापरयोश्चिदचित्प्रकृत्योस्तद्योनिकस्य च महदहङ्कारादिलक्षणस्य

---

शक्तिता व्यक्तिता चेति विशेषोऽपि विशेषवान् ।
अभिन्नोऽपि क्रियादिश्च स्वभाव इति हि श्रुतिः ।
ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः ।
नित्यानन्दोऽव्ययः पूर्णो भगवान् विष्णुरच्युतः ।
इति पैङ्गिश्रुतिश्चाह शक्तिसद्भाव एव तु ।
क्रियादिनित्यता ज्ञेया तदन्यत्र त्वनित्यता ।
इति सत्तत्त्ववचनम् ...... अनुव्याख्याने १/२/६-१०
यद्भोगेनागमिष्यत् सुखं तच्च सदाऽप्यस्त्येव । क्रियाश्च शक्तिरूपेण चेति चार्थः ।
– प्र.दी.

१. नन्वपरं परं च तत्त्वमुक्त्वा परतरोऽहमिति वक्तव्यम् । मत्त इति किमुच्यत इत्यतस्तात्पर्यमाह – अहमेवेति ॥ – प्र.दी.

२. अन्यथा तरपोऽन्यशब्दस्य च वैयर्थ्यादिति भावः । – प्र.दी.

ब्रह्मेशानादेः कृत्स्नस्य जगतः प्रभवादिशब्दोक्तसत्ताप्रतीतिप्रवृत्त्यादिप्रदत्वात् परतमोऽपि स एव[१] ।

'ज्ञानं तेऽहं प्रवक्ष्यामि' इति प्रतिज्ञायैवं पारापर्यस्योक्तत्वादेतद्विषयमेव ज्ञानम्, एतद्विरोधि सर्वं मिथ्याज्ञानमिति भावेनाह – इदमिति ॥७॥

(भा) इदं ज्ञानम् ॥७॥

(टी) नन्वेवमनन्तैश्वर्यविषयमपि ज्ञानं चेत्, विज्ञानं कीदृशम्? इत्याकाङ्क्षोत्तरत्वेनोत्तरं श्लोकसन्दर्भमवतारयति – रस इति ॥

(भा) रसोऽहम् इत्यादि विज्ञानम् ।

**रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ।**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥८॥**

**पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।**
**जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥९॥**

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥१०॥**

**बलं बलवतां चाहं कामरागविवर्जितम् ।**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥११॥**

---

१. अवरा दुःखसम्बन्धाज्जीवा एव प्रकीर्तिताः ।
नित्यनिर्दुःखरूपत्वात् परा श्रीरेकलैव तु ।
दुःखासंपीडितत्वात् तु मध्यमो वायुरुच्यते ।
अनन्याधीनरूपत्वादसमाधिकसौख्यतः ।
तत्तन्त्रत्वाच्च सर्वस्य विष्णुः परतरो(परतमो - पा) मतः ।
अभावादन्तरान्यस्य त्विहैकार्थौ तरप्तमौ । – गीतातात्पर्योदाहृतप्रमाणवचनम्

(टी) ननु 'अहं कृत्स्नस्य' इत्यादिनैवाबादीनां सर्वेषां सत्ताप्रतीत्यादेर्भगवदधीनत्वस्य, तेषां भगवद्भोग्यत्वस्य चोक्तत्वात्, किमिति पुनस्तेषु रसादीनां तदुभयमुच्यते? इत्यत आह – **अबादयोऽपीति ॥**

**(भा) अबादयोऽपि तत एव । तथाऽपि रसादिस्वभावानां साराणां च स्वभावत्वे सारत्वे[१] च विशेषतोऽपि स एव नियामकः । न त्वबादिनियमानुबद्धो रसादिस्तत्सारत्वादिश्चेति दर्शयति 'अप्सु रसः' इत्यादिविशेषशब्दैः ।**

(टी) भवतु 'अहं कृत्स्नस्य' इत्यादिनैवाबादिसत्ताप्रतीत्यादेर्भगवदधीनत्वम् । न त्वबादीनां रसादिस्वभावत्वम्, अबादिगुणेषु रसादीनां सारत्वम्, रसादित्वं च विशेषतः पृथक् भगवन्नियम्यम् । किन्त्वबादीनामबादित्वकारणेनैव तेषां सिद्धिरित्याशङ्कां परिहर्तुं 'रसोऽहम्' इत्याद्यारभ्यत[२] इति भावः ।

भगवन्नियम्यत्वात् भगवद्भोग्यत्वाच्च भगवानेव कृत्स्नमित्युच्यत इति स्थितेऽपि नियम्यत्वे विशेषात् 'रसोऽहम्' इत्यादिविशेषोक्तिरित्युक्तम् । अधुना [३]भोग्यत्वेऽपि विशेषात् तदुक्तिरित्याह – **भोगश्चेति ॥**

**(भा) भोगश्च विशेषतो रसादेरिति च ।**

(टी) स्वोपासकानां रसादिसम्पत्तिनिमित्तत्वेन रसाद्यभिमानिदेहस्य[४] रसादिशब्दपरममुख्यार्थत्वेनोपासनार्थं च 'रसोऽहम्' इत्याद्युक्तिरित्याह – **उपासनेति ॥**

**(भा) उपासनार्थं च ।**

---

१. 'रसादिस्वभावानां रसाणां च स्वभावत्वे रसत्वे च' – ह.पाठः ।

२. इत्याद्यारम्भः – पा; ३. भोग्यत्वविशेषात् - पा

४. -देहस्यास्य – पा

(टी) विशिष्टनियमनादिहेतुत्रये प्रमाणमाह – उक्तं चेति ॥

(भा) उक्तं च गीताकल्पे –

'रसादीनां रसादित्वे स्वभावत्वे तथैव च ।
सारत्वे सर्वधर्मेषु विशेषेणापि कारणम् ।
सारभोक्ता च सर्वत्र यतोऽतो जगदीश्वरः ।
रसादिमानिनां देहे स सर्वत्र व्यवस्थितः ।
अबादयः पार्षदा[१] ध्येयः स ज्ञानिनां हरिः ।
रसादिसम्पत्त्याऽन्येषां वासुदेवो जगत्पतिः ॥' इति ।

(टी) स्वभावस्यान्याधीनत्वे सर्ववादिविप्रतिपत्तेः तद्बहुवाक्यैः स्थापयति – स्वभाव इत्यादिभिः ॥

(भा) 'स्वभावो जीव एव च'[२], 'सर्वस्वभावो नियतस्तेनैव किमतः परम्' 'न तदस्ति विना यत् स्यान्मया भूतं चराचरम्'[३] इति च ।

(टी) ननु रसादीनां मध्ये बलकामयोर्गन्धस्य च विशेषणं किमर्थम्? इत्यत आह – धर्मेति ॥

(भा) 'धर्माविरुद्धः' 'कामरागविवर्जितम्' इत्याद्युपासनार्थम् ।

(टी) आदिशब्देन गन्धविशेषणग्रहणम् । रसादीनां सर्वेषां विशेषेण[४] भगवन्नियम्यत्वे तद्भोगार्थत्वे तदुपासनार्थत्वे च वक्तव्ये बलकामयोरुक्त-विशेषणरहितयोरपुण्यगन्धस्येव भगवदुपासनार्थत्वायोगात् तदर्थं विशेषणमिति भावः ।

१. पार्षदा एव ध्येयः – पा
२. भागवते २/१०/१२
३. गी. १०/३९
४. विशेषतया – पा

विशेषितयोरेव बलकामयोरुपासनार्थत्वं न युक्तिमात्रादित्याह – उक्तं चेति ॥

(भा) उक्तं च गीताकल्पे –

'धर्माविरुद्धकामेऽसावुपास्यः काममिच्छता ।
विहीने कामरागादेर्बले च बलमिच्छता ।
ध्यातस्तत्र त्वनिच्छद्भिर्ज्ञानमेव ददाति सः ॥' इत्यादि ।

(टी) बलादिविशेषणवन्नोपासनार्थत्वमेव गन्धविशेषणम्, किन्तु भोगार्थमपीत्याह – पुण्य इति ॥

(भा) 'पुण्यो गन्धः' इति भोगापेक्षया च ।

(टी) पुण्यस्यैव भगवद्भोग्यत्वे प्रमाणमाह – तथा हीति ॥

(भा) तथा हि[१] श्रुतिः –

'पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति'[२],
'ऋतं पिबन्तौ सुकृतस्य लोके'[३] इत्यादिका ।

(टी) यतो न देवान् पापं गच्छति अतोऽमुं सप्तान्नोपासकं पुण्यमेव गच्छति । देवानामेव सप्तान्नोपासकत्वाद्देवश्रेष्ठं [४]हरिं न पापं गच्छतीति किमु वक्तव्यमिति भावः[५] ।

---

१. तथा च – प्रचलितपाठः
२. बृहदारण्यकोपनिषत् ३/६/२७
३. कठोपनिषत् १/७/१
४. हरिं पापं न – पा
५. ''नन्वेवमपि भगवतः पुण्यमात्रोपभोग इत्यत्र नेदं प्रमाणम् । देवानामेव पापाप्राप्त्युक्तेरित्यतः देवशिखामणिं हरिं पापं न गच्छतीति किमु वक्तव्यम्'' इति प्राचीनटीकोक्तं कैमुत्यन्यायमाह – देवमात्रस्येति ॥ – भावरत्नकोशे

पुण्यमेव भगवद्भोग्यमित्यस्मिन्नर्थे[१] 'ऋतं पिबन्तौ' इति श्रुतिः किमित्युदाह्रियते? इत्यत आह – ऋतं चेति ॥

(भा) ऋतं च पुण्यम् ।

(टी) ऋतशब्दस्य पुण्यवाचित्वे सामान्यविशेषरूपमभिधानद्वयं दर्शयति – ऋतमिति ॥

(भा) 'ऋतं सत्यं तथा धर्मः सुकृतं चाभिधीयते' इत्यभिधानात् । 'ऋतं तु मानसो धर्मः सत्यं स्यात् स प्रयोगगः' इति च ।

(टी) ननु सिद्धे भोक्तृत्वे भगवतः पुण्यमेव भगवद्भोग्यमित्यस्मिन्नर्थे[२] निश्चयः स्यात् । तदेव कुतः? श्रुतिस्मृतिविरोधादित्यत आह – न चेति ॥

(भा) न च 'अनश्नन्नन्यो अभिचाकशीति'[३] 'अन्यो निरन्नोऽपि बलेन भूयान्'[४] इत्यादिविरोधः । स्थूलानशनोक्तेः ।

(टी) स्थूलाशनप्रतिषेधेनैव श्रुतिस्मृत्योः सावकाशत्वादित्यर्थः ।

ननु सिद्धे सूक्ष्माशनेऽनयोः स्थूलानशनोक्तिपरता स्यात् । तदेव कुतः? इत्यत आह – आह चेति ॥

(भा) आह च सूक्ष्माशनम् – 'प्रविविक्ताहारतर इवैष भवत्यस्माच्छारीरादात्मनः'[५] इति ।

---

देवमात्रस्य पुण्यभोगनियमे देवोत्तमस्य सुतरां तत्सिद्धिः । – प्र.दी.

१. -स्मिन्नप्यर्थे – पा

२. -ग्यमिति – पा

३. आथर्वणोपनिषत् ३/१/१

४. भागवते ११/११/६

५. बृहदारण्यकोपनिषत् ६/२/३

(टी) नन्वयं प्रविविक्ताहारतरो जीव एव किं न स्यात्? इत्यत आह – **न चेति** ॥

(भा) **न चात्र जीव उच्यते । 'शारीरादात्मनः' इति भेदाभिधानात् ।**

(टी) ननु शरीरयोगेन वासात् जाग्रदवस्थ एव जीवः शारीरः । स्वप्नाद्यवस्थस्तु तदभावान्न शारीरः । अतोऽवस्थाभेदाभिधानमिदं किं न स्यात्? इत्याशङ्क्य, स्वप्नाद्यवस्थोऽपि शारीरः । तदाऽपि तस्य शरीरे वर्तमानत्वादित्येतत् सप्रमाणकमाह – **स्वप्नादिश्चेति** ॥

(भा) **स्वप्नादिश्च शारीर एव – 'शारीरस्तु त्रिधा भिन्नो जाग्रदादिष्ववस्थितेः' इति वचनाद्गारुडे ।**

(टी) ननु भवतु त्र्यवस्थोऽपि जीवः शारीरः । तथाऽपि **अस्मात्** इति विशेषणसामर्थ्यात् जाग्रदवस्थात् स्वप्नावस्थस्येदं भेदाभिधानं स्यात् । अन्यथा विशेषणवैय्यर्थ्यादित्यत आह – **अस्मादिति** ॥

(भा) **'अस्मात्' इतीश्वरनिवृत्त्यर्थः ।**

(टी) नन्वीश्वरस्यापि शारीरशब्दार्थत्व एतत् स्यात् । तदेव कुतः? इत्यत आह – **शारीराविति** ॥

(भा) **'शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसंज्ञितः ।**
**अनादिबन्धनस्त्वेको नित्यमुक्तस्तथाऽपरः ॥' इति वचनान्नारदीये ।**

(टी) भगवतोऽपि शारीरशब्दार्थत्वं भेदश्रुतिसामर्थ्यादपि सिद्ध्यतीत्यभिप्रायेणाह – **भेदश्रुतेश्चेति** ॥

(भा) **भेदश्रुतेश्च ।**

(टी) न हि जीवः स्वस्मादेव स्वयं भिन्न इत्यस्मादिति पदव्यावृत्तः[१] भगवानेव स्यादित्यर्थः[२] ।

ननु भवत्येव भिन्नः स्वप्नाद्यवस्थो जाग्रदवस्थात्, अतोऽसावेव **अस्मात्** इति पदव्यावृत्तः[३] स्यादित्यत आह – **सतीति** ॥

**(भा) सति गत्यन्तरे पुरुषभेद एव कल्प्यो नत्ववस्थाभेदः ।**

(टी) अवस्थामात्रभेदात्, गत्यन्तरे पुरुषभेदे सति स एव कल्प्य इत्यर्थः ।

भगवत एवानया श्रुत्या सूक्ष्माशनोक्तिमतान्यासां(?) स्थूलाभोगपरत्वं च गीताकल्पेन स्थापयति – **आह चेति** ॥११॥

**(भा) आह च –**

**'प्रविविक्तभुग्यतो ह्यस्माच्छारीरात् पुरुषोत्तमः ।**

**अतोऽभोक्ता च भोक्ता च स्थूलाभोगात् स एव तु' इति गीताकल्पे ॥११॥**

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।**

**मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥१२॥**

(टी) ननु भगवतः सर्वभावेषु स्थित्यभावे परिच्छिन्नत्वम्, 'सर्वभूतस्थमात्मानम्' इत्याद्युक्तिविरोधश्च स्यादित्यत आह – **न त्विति** ॥

---

१. पदव्यावर्त्यः – पा

२. प्राचीनटीकायां तु ''भगवतः शारीरशब्दार्थत्वं भेदश्रुतिसामर्थ्यादपि सिद्ध्यतीत्यभिप्रायेणाह – भेदश्रुतेश्चेति ॥ न हि जीवः स्वस्मादेव स्वयं भिन्न इति अस्मादिति पदव्यावर्त्यो भगवानेव स्यादित्यर्थः'' इति 'भेदश्रुतेश्च' इति पृथग्योगो व्याख्यातः ।

**– भावरत्नकोशे**

एकवाक्यत्वेन प्रमेयदीपिकायां व्याख्यानं तु भावप्रदीपिकानुसारेण । तथा हि भावप्रदीपिका – ''भेदश्रुतेरवस्थाभेदात् गत्यन्तरे पुरुषभेदे सति स एवाद्यः कल्पः नावस्थाभेदोऽर्थः ।''

३. पदव्यावर्त्यः – पा

(भा) नत्वहं तेषु इति तदनाधारत्वमुच्यते ।

(टी) तत्र प्रमाणमाह – उक्तं चेति ॥१२॥

(भा) उक्तं च –

'तदाश्रितं जगत् सर्वं नासौ कुत्रचिदाश्रितः' इति गीताकल्पे ॥१२॥

(टी) ननु यदि भगवान् सत्त्वरजस्तमोगुणात्मकदेहानां ब्रह्मादीनां सर्वेषामाश्रयः स्वयमनन्याश्रयश्च, तर्हि तद्विलक्षणाप्राकृतापरिमितज्ञानानन्दादि-स्वरूपदेहः स्यात् । तादृक्त्वाप्रतीतेरयमपि गुणात्मकदेह इति भावेनाशङ्क्य, एतां परिहर्तुमुत्तरं श्लोकमवतार्य व्याचष्टे – तर्हीति ॥

(भा) तर्हि कथमेवं न ज्ञायस इत्यत आह – त्रिभिरिति ॥

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥१३॥**

(टी) मयटोऽत्र विकारार्थत्वे 'मामेभ्यः परम्' इति गुणकार्येभ्य एव भगवतः परत्वं स्यात् । न गुणेभ्योऽपि । अतस्तदुभयज्ञापनार्थं तादात्म्यार्थत्वं मयटः सप्रमाणकमाह – तादात्म्येति ॥

(भा) तादात्म्यार्थे मयट् । तच्चोक्तम् –

'तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा' इति ।

(टी) मायिनाऽत्र मयटो विकारार्थत्वमुक्तं 'गुणमयैः गुणविकारैः[१]' इति[२] । तत्पक्षे मायाऽपि गुणकार्यभूता स्यात् । न च तद्युज्यत इत्याह – **न हीति** ॥

(भा) नहि गुणकार्यभूता माया ।

---

१. गुणकार्यैः – पा

२. त्रिभिर्गुणमयैः गुणविकारैः रागद्वेषमोहादिप्रकारैः । – शाङ्करभाष्यम्

(टी) ननु कथं गुणकार्यभूता स्यात्? इत्याशङ्क्य, तस्याप्युत्तरश्लोके गुणमयीत्वाभिधानादित्याह – **गुणमयीति** ॥

**(भा) 'गुणमयी' इति च वक्ष्यति ।**

(टी) ननु मूलप्रकृतेरकार्यत्वात् तादात्म्यं मयडर्थः स्यात् । एषां तु भावानां गुणकार्यत्वात् कथं तत्तादात्म्यम्? इत्याशङ्क्य कार्यस्यापि तादात्म्यं सप्रमाणकमाह – **सिद्धं चेति** ॥

**(भा) सिद्धं च कार्यस्यापि तादात्म्यम् –**

**'तादात्म्यं कार्यधर्मादेः संयोगो भिन्नवस्तुनोः' इति व्यासयोगे ।**

(टी) बह्वर्थत्वात्[१] 'भाव'शब्दस्यात्र भगवद्विवक्षितार्थमाह – **भावैरिति** ॥

**(भा) भावैः पदार्थैः ।**

(टी) दृश्यमानसर्वभावानां गुणमयत्वज्ञापनार्थम् 'एभिः' इति निर्देशो नान्यव्यावृत्त्यर्थः । येनान्येभ्यः परत्वं भगवतो न सिद्ध्येदिति भावेनाह – **सर्व इति** ॥

**(भा) सर्वे भावा दृश्यमाना गुणमया एत एवेति[२] दर्शयति – एभिरिति ॥**

(टी)'इदम्' इति विशेषणं त्वन्यव्यावृत्त्यर्थमित्याह – **ज्ञानीति** ॥

**(भा) ज्ञानिव्यावृत्त्यर्थम् इदम् इति ।**

(टी) एवं पदार्थाद्युक्त्वा श्लोकतात्पर्यार्थं सप्रमाणकमाह – **गुणमयेति** ॥

---

१. 'भावस्वभावेऽभिप्राये चेष्टासत्तात्मजन्मसु ।
क्रियालीलापदार्थेषु बन्धुजन्तुविभूतिषु ।'
– इति **विश्वप्रकाशाभिधानं भावरत्नकोशोदाहृतम् ।**

२. 'एत इति' इति प्रचलितपाठः । 'एव' इति शब्दाभावे व्यावर्तकाभावादसङ्गता स्याट्टीका ।

(भा) गुणमयदेहादिकं दृष्ट्वेश्वरदेहोऽपि तादृश इति मायामोहित इत्यर्थः ।

जगाद च व्यासयोगे –

'गौणान् ब्रह्मादिदेहादीन् दृष्ट्वा विष्णोरपीदृशः ।
देहादिरिति मन्वानो मोहितोऽज्ञो जनो भृशम् ॥' इति ।

(टी) ननु भगवद्देहस्य ब्रह्मादिदेहसादृश्यज्ञो जनः तर्ह्येव मोहितः स्यात्, यद्यसावतादृशः[१] स्यात् । तदेव कुतः? इत्याशङ्कापरिहारत्वेन चतुर्थपादोक्त-मतादृत्त्वं प्रकाश्य, उक्तवक्ष्यमाणसम्मत्या श्रुत्या च स्थापयति – एभ्य इत्यादिना ॥

(भा) एभ्यः गुणमयेभ्यः । 'गुणेभ्यश्च परम्'[२] इति वक्ष्यमाणत्वात् । 'केवलो निर्गुणश्च'[३] इत्यादिश्रुतिभ्यश्च । 'त्रैगुण्यवर्जितम्'[४] इति चोक्तम् ॥१३॥

(टी) स्वाभेदं स्वदेहस्य ज्ञापयितुं 'माम्' इत्युक्तं भगवतेत्य-भिप्रायः ॥१३॥

ननु त्रिगुणात्मकदेहो भगवानित्ययं मोहश्चेत्, बाधकप्रत्ययः स्यात् । तदभावान्न मोहोऽयमिति भावेनाशङ्क्य, तां परिहर्तुमुत्तरश्लोकार्धमवतार्य व्याचष्टे – कथमिति ॥

(भा) कथमनादिकाले मोहानत्ययो बहूनाम्? इत्यत आह – दैवीति ॥

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**

(टी) ननु 'बाधकाभावे किं कारणम्?' इति प्रश्नस्य मायादैवत्वदुरति-क्रमणत्वयोरभिधानं कथमुत्तरम्? इत्यत आह – अयमिति ॥

---

१. यदाऽसावतादृशः – पा; २. गी. १४/१९
३. श्वेताश्वतरोपनिषत् ६/११
४. भारते १/१/१

(भा) अयमाशयः । माया ह्येषा मोहिका । सा च सृष्ट्यादिक्रीडादिमद्देव-सम्बन्धित्वादतिशक्तेर्दुरत्यया । तथा हि देवशब्दार्थं पठन्ति – 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिषु'[१] इति ।

(टी) मोहकारणत्वेनेतिहासपुराणादिप्रसिद्धा या माया भगवदीयत्वेन दुरत्ययत्वान्न बाधक इत्यर्थः ।

ननु सा भगवतेव स्वातन्त्र्येणैव सृष्ट्यादिक्रीडादिमत्त्वात् स्वयं देव्येव । न तु 'दैवी' इति भावेनाशङ्क्य, तदुत्तरत्वेन 'मम' इति व्याचष्टे – कथमित्या-दिना ॥

(भा) कथं दैवी ? मदीयत्वात् ।

(टी) ननु देवदेव्योर्मध्ये देवशब्दमुख्यार्थत्वनिर्धारः कथम्? इत्यत आह – अहमिति ॥

(भा) अहं हि देव इति ।

(टी) हीति ॥ श्रुत्यादिसर्वप्रमाणप्रसिद्धमित्यर्थः ।

अन्यत्रैतमेवार्थं भगवान् व्यक्तमवोचदित्याह[२] – अब्रवीच्चेति ॥

(भा) अब्रवीच्च –

'श्रीर्भूर्दुर्गेति या भिन्ना महामाया तु वैष्णवी ।
तच्छक्त्यनन्तांशहीनाऽथापि तस्याश्रयात् प्रभोः ।

---

१. 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' इति प्रचलितभाष्य-पाठः, प्रचलितधातुपाठोऽपि । तथाऽपि ऋग्भाष्ये नरहरितीर्थीयगीताभाष्यटीकाप्रथमश्लोके नरहरितीर्थीययमकभारतटीकायाञ्च सप्तार्थान्येवानूदितानि देवशब्दस्येति 'दिवु क्रीडा-विजगीषाव्यवहारद्युतिस्तुतिकान्तिगतिषु' इति ह्.पाठ एव प्रामाणिक इति भाति ।

२. व्यक्तमब्रवीदित्याह – पा

अनन्तब्रह्मरुद्रादेर्नास्याः शक्तिः कलाऽपि हि ।
तेषां दुरत्ययाऽप्येषा विना विष्णुप्रसादतः ॥' इति व्यासयोगे ।

(टी) ननु सर्वजगन्मोहकरी[1] महामायैवात्येतुमशक्या । किं पुनः सैव भगवद्बलेरिता? अतः का गतिर्जगतः[2]? इति भावेनाशङ्क्य, तां परिहर्तु-मुत्तरार्धमवतार्य व्याचष्टे – तर्हीति ॥

(भा) तर्हि न कथञ्चिदत्येतुं शक्यत इत्यत आह – मामेवेति ॥

**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥१४॥**

(टी) अवधारणार्थं दर्शयति सम्यग्घटयितुम् – अन्यदिति ॥

(भा) अन्यत् सर्वं परित्यज्य मामेव ये प्रपद्यन्ते ।

(टी) प्रपद्यन्ते शरणं व्रजन्तीत्यर्थः ।

ननु गुर्वग्र्यादिपूजाभावे प्रत्यवायः स्यादित्यत आह – गुर्वादीति ॥

(भा) गुर्वादिवन्दनं च मय्येव समर्पयन्ति ।

(टी) प्राधान्येनान्यत् सर्वं परित्यज्यापि भगवदीयत्वेन गुर्वादीन् सम्पूज्य, तत्पूजां च भगवत्येव समर्पयन्ति ये ते च मध्यमभक्ताः ।

उत्तमभक्तानाह – स एवेति ॥

(भा) स एव च तत्र स्थित्वा गुर्वादिर्भवतीत्यादि पश्यन्ति ।

(टी) उक्तद्वैविध्ये प्रमाणमाह – आह चेति ॥

(भा) आह च नारदीये –

---

१. जगन्मोहकारिमहा – पा
२. गतिर्जगति – पा

'मत्सम्पत्त्या तु गुर्वादीन् भजन्ते मध्यमा नराः ।
मदुपाधितया तांश्च सर्वभूतानि चोत्तमाः ॥' इति ।

(टी) भगवत्सम्पत्तिर्भगवान्नः स्वामीति स्वामिसम्पत्तिर्गुर्वादीनाम् । अत एव तान् सेवन्ते भगवदर्थिनः । द्रव्यसम्पन्नानपि द्रव्यार्थिनः । प्रतिमास्विव भगवानुपाधीयते स्वेच्छयैव गुर्वादिषु । अतस्तानुत्तमास्तदुपाधितयैव सेवन्ते । गुर्वादिसर्वभूतेष्वपि स्थित्वा स एव क्षीरादिप्रद इत्येव तानि च सेवन्त इत्यर्थः ।

(भा) 'आचार्यचैत्यवपुषा स्वगतिं व्यनक्ति'[1] इति च ॥१४॥

(टी) आचार्यचित्तस्थेन वपुषेत्यर्थः । युक्तं च रमाजशङ्करादेर्जडाजडात्मकस्य विश्वस्य भगवदुपाधितयैव सेव्यत्वम् । यतः स्वान्तर्निहितभगवत्सन्निधान-तारतम्यादेव[2] गुणतारतम्यम्, अत एव तत्तदन्तर्गतस्य भगवतो वासुदेवस्यैव सर्वगुणसम्पूर्णत्वम् । अनेनैव 'वासुदेवः सर्वम्' इति वक्ष्यमाणसर्वत्वस्य व्याख्याततत्वान्न पुनस्तद्व्याख्यास्यति । न च जडाजडात्मत्वं सर्वत्वं भगवतः । 'मामेव ये प्रपद्यन्ते' इत्यवधारणविरोधादित्येषा दिक् ॥१४॥

ननु यदि भगवान् स्वाश्रितानुत्तारयति मोहार्णवात्, तर्हि तं कृपालुं प्लवं सर्वेऽपि समाश्रित्य किमिति मोहं नात्यायन् ? अतः प्रशंसामात्रमिदं भगवत इति भावेनाशङ्क्य, तां परिहर्तुमुत्तरश्लोकं व्याचष्टे – तर्हीति ॥

(भा) तर्हि किमिति सर्वे नात्यायन्? इत्यत आह – न मामिति ॥

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।**
**माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥१५॥**

---

१. भागवते ११/२९/६
२. -तम्यादेः – पा

(टी) विशेषणपञ्चके हेतुहेतुमद्भावं दर्शयति – **दुष्कृतित्वादित्यादिना ॥**

(भा) दुष्कृतित्वात् मूढाः । अत एव नराधमाः । **अपहृतज्ञानत्वाच्च मूढाः । अत एव आसुरं भावमाश्रिताः ।**

(टी) दुष्कृतित्वापहृतज्ञानत्वाभ्यां मूढाः । अतो नराधमाः । ततः [१]आसुर-भावमाश्रिताः । ततो भगवन्तं न प्रपद्यन्त[२] इत्यर्थः ।

नन्वासुरभाववर्जिता अहिंसादिव्रतस्था अपि भगवन्तं न प्रपद्यन्ते[३] । अतस्तत्रासुरभाव एव कारणमित्येतत् कथम्? इत्यत आह – **स चेति ॥**

(भा) स च वक्ष्यते – 'प्रवृत्तिं च निवृत्तिं च'[४] इत्यादिना ।

(टी) तेषामपि 'प्रवृत्तिं च' इत्यादिवक्ष्यमाणलक्षणासुरभाववत्त्वादिति भावः[५] ।

ननु ज्ञानापहारे जीवापहारः स्यात्, ज्ञानरूपत्वात् तेषामित्यत आह – **अपहार इति ॥**

(भा) **अपहारोऽभिभवः । उक्तं चैतद्व्यासयोगे – 'ज्ञानं स्वभावो जीवानां मायया चाभिभूयते' इति ।**

(टी) ये भगवन्तं न प्रपद्यन्ते[६] ते सर्वेऽप्यासुरं भावमाश्रिता इति ज्ञापयितु-मैहिकामुष्मिकभोगपरायणेष्वप्यासुरं[७] भावं सप्रमाणकं दर्शयति – **असुष्विति ॥**

---

१. असुरभाव० – पा    २. प्रतिपद्यन्त – पा

३. प्रतिपद्यन्ते – पा    ४. गी. १६/७

५. नन्वासुरो भावो हि हिंसानृतादिलक्षणोऽन्यैर्व्याख्यातः । तद्रहिताश्च क्षपणकादयो न भगवन्तं प्रपद्यन्ते । तत्कथमस्य हेतुत्वमित्यत आह – स चेति ॥ एतेषामन्यतमः सर्वेष्वप्यस्तीति भावः । – प्र.दी.

६. प्रतिपद्यन्ते – पा    ७. -भोगेषु परायणेष्वप्यासुरं– पा

(भा) असुषु रता असुराः । तच्चोक्तं नारदीये –

'ज्ञानप्रधाना देवास्तु असुरास्तु रता असौ' इति ॥१५॥

(टी) देवासुरभावावत्यन्तव्यावृत्ताविति दर्शयितुमुभयत्र तुशब्दः ॥१५॥

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥१६॥**

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥१७॥**

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥**

**बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥१९॥**

(टी) ये तु सुकृतिनस्ते सर्वे हरिं भजन्ते । तत्र ज्ञान्येव तं शरणं व्रजतीत्यभिप्राय उत्तरश्लोकचतुष्टये भगवतोऽन्यभजनीयत्वादर्शनादेवैकभक्तिः। न तु स्वतोऽन्यादर्शनादिति भावेन 'एकभक्ति'पदं सप्रमाणकं व्याचष्टे – एकस्मिन्निति ॥

(भा) एकस्मिन्नेव भक्तिरित्येकभक्तिः । तच्चोक्तं गारुडे –

'मय्येव भक्ति-र्नान्यत्र एकभक्तिः स उच्यते' इति ॥

(टी) वैष्णवत्वेन रमाब्रह्मादिषु भक्तौ विद्यमानायामपि प्राधान्येनैकस्मिन् विष्णावेव भक्तिर्यस्यासावेकभक्तिरित्यर्थः[१] ।

---

१. प्राचीनटीकायाम् – ''एकस्मिन् विष्णावेव भक्तिर्यस्यासावेकभक्तिः'' इत्युक्तिरुभयथाऽप्यन्यपदार्थनिर्देशसम्भवाभिप्राया । वक्ष्यति च यस्यासौ इत्युपस्कर्तव्यमिति । – भावरत्नकोशे

न च ज्ञानवतो भगवतः [१]तत्प्रपत्तौ बहुजन्मापेक्षः, किन्तु ज्ञानार्जन एव सेत्येतत् सप्रमाणकमाह – **बहूनामिति** ॥१६-१९॥

(भा) बहूनां जन्मनामन्ते ज्ञानवान् भवति । तच्चोक्तं ब्राह्मे – 'जन्मभिर्बहुभिर्ज्ञात्वा ततो मां प्रतिपद्यते' इति ॥१६- १९॥

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥२०॥**

(टी) ननु संसारनिवृत्तये हरिमेव प्रपद्यमाना अप्यर्थाद्यर्थं देवतान्तरं भजेयुः । को दोषः? इत्यपेक्षायाम् एवं कामशः शरण्या एव किं न स्युरिति तत्प्रपद्येरन्[२] इत्यभिप्राय उत्तरश्लोके शिवशक्त्यादिदेवतान्तरशरणागतिस्वभाव एव केषाञ्चित्, न माय्युक्तप्रकारेण संस्कारमात्रमिति[३] भावेन 'प्रकृत्या' इति पदं सप्रमाणकं व्याचष्टे – **प्रकृत्येति** ॥

(भा) प्रकृत्या **स्वभावेन** । '**स्वभावः प्रकृतिश्चैव संस्कारो वासनेति च**' इत्यभिधानात् ॥२०॥

(टी) ननु भगवतः [४]स्ववशीकृतसर्वस्वभावत्वात् कथं तं विहाय केषाञ्चित् स्वभावेनापि देवतान्तरशरणागतिस्तत्फलं चेत्याकाङ्क्षायां भगवानेव तत्सर्वं करोति । तथाऽपीज्यानामन्तवत्त्वात् तत्प्राप्तिर्नाम फलमपि अन्तवदेव, तदपि भगवद्विषयाल्पमेधसां न त्वमेधसां वेत्यर्थः[५] ॥२०॥

---

एकस्मिन्नेवेति ॥ 'अस्य' इत्यध्याहार्यम् । .... तच्चेति ॥ 'यस्यासौ' इत्युपस्कर्तव्यम् ।
– प्र.दी.

१. प्रपत्तौ – पा
२. स्युरिति ता एव तत्प्रपद्येरन् – पा
३. प्रकृत्या स्वभावेन जन्मान्तरार्जितसंस्कारविशेषेण – शाङ्करभाष्यम्
४. सदा वशी० – पा
५. ज्ञात्वा परत्वं विष्णोऽस्तु पृथग्देवान् यजन्नरः ।

**यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥२१॥**

**स तया श्रद्धया युक्तस्तस्याराधनमीहते ।**
**लभते च ततः कामान् मयैव विहितान् हि तान् ॥२२॥**

**अन्तवत् तु फलं तेषां तद्भवत्यल्पमेधसाम् ।**
**देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥२३॥**

(टी) उत्तरश्लोकत्रये 'यां यां तनुम्' इत्यादिसामान्योक्तेर्विष्णुतनुभक्तस्याप्यन्तवत्फलं स्यादित्याशङ्क्य, यासां तनूनामुपासनमन्तवत्फलं तांस्तनून् ग्रन्थान्तरानुसारेण विशिनष्टि – यां यामित्यादिना ॥

**(भा) यां यां ब्रह्मादिरूपां तनुम् । उक्तं च नारदीये – 'अन्तो ब्रह्मादिभक्तानां मद्भक्तानामनन्तता' इति । 'मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः'[1] इत्यादेः परिहारसन्दर्भाच्च मोक्षधर्मेषु । 'अवतारे महाविष्णोर्भक्तः कुत्र च मुच्यते' इत्यादेश्च ब्रह्मवैवर्ते ॥२३॥**

(टी) **कां गतिं** गच्छेत् कं गम्यमाप्नुयात्[2] । **किमात्मकः** किं स्वर्गादिवदनित्यसुखरूपः, उतानन्तसुखात्मक इति[3] । **आदि**शब्दात् 'देवतानां च

---

याति देवांस्तदज्ञात्वा तम एव प्रपद्यते ॥
तथाऽपि यावदन्यैस्तु साम्यं हीनत्वमेकताम् ।
न निश्चिन्वन्ति जायन्ते संसारे ते पुनः पुनः ॥ – गीतातात्पर्योदाहृतप्रमाणवचनम्

१. भारते शान्ति ३३४/३
२. गम्यत इति गतिः । – प्र.दी.
३. 'किमात्मकः' इति भाष्यस्य ''किं स्वर्गादिवत् अनित्यसुखरूप उत अनन्तसुखात्मकः'' इति प्राचीनटीकोक्तार्थः । – भावरत्नकोशे

को देवः[१], [२]इत्यादेर्ग्रहणम् । बह्वध्यायात्मकोऽयं[३] सन्दर्भः **परिहारसन्दर्भो** नारदनारायणसंवादादिरूपः[४] । तत्र देवदेवं[५] नारायणं श्वेतद्वीपादिनिवासिनं तदेकान्तभक्ताः संप्राप्यानन्तकालं यथासुखं विहरन्ति । नान्यभक्तानां [६]तादृशी गतिरित्यवगम्यते[७] ॥२३॥

ननु देहवत्त्वेनान्तवत्त्वाद्देवनान्तद्यजान्तानेव प्राप्तानां फलमन्तवच्चेत्, भगवतोऽपि देहवत्त्वाविशेषादयं दोषः किं न स्यात्? इति भावेनाशङ्क्य, अकार्यदेहत्वान्नायं दोष इत्युत्तरश्लोकस्थाव्यक्तशब्देन परिहरति – **क इति** ॥

(भा) को विशेषस्तवान्येभ्यः? इत्यत आह – अव्यक्तमिति ॥

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥२४॥**

(भा) कार्यदेहादिवर्जितम् ।

(टी) कथं तर्हि कंसादयः कार्यदेहवन्तमिव पश्यन्ति? इत्याशङ्क्य,

---

१. के देवाः – पा; भारते शान्ति ३३४/४
२. इत्यादेः प्रश्नस्य परिहाररूपवाक्यसन्दर्भाच्च । – प्र.दी.
इत्यादेरित्यत्र आदिपदेन 'देवतानां च को देवः पितॄणां तु पिता तथा' इत्यादेर्ग्रहणम् । – भावरत्नकोशे
३. भारते शान्ति अध्याय ३३४-३३९ ।
४. बहुत्वादनुदाहरणमिति भावः । – प्र.दी.
५. तदेव देवं – पा
६. तादृशायतिरित्य० – पा
७. ''अयं च परिहाररूपवाक्यसन्दर्भो नारदनारायणसंवादरूपः । तत्र देवदेवं नारायणं श्वेतद्वीपादिनिवासिनं तदेकान्तभक्ताः सम्प्राप्यानन्तकालं यथासुखं विहरन्ति । अन्यदेवताभक्तानां न तादृशी गतिरिति निर्गलितोऽर्थोऽवगम्यते'' इति प्राचीनटीका ॥ – भावरत्नकोशे

बह्वागमविरुद्धत्वात् भ्रान्ता एव. त[1] इत्येवं श्लोकशेषमवतार्य व्याचष्टे – तदित्यादिना ॥

(भा) तद्वानिव प्रतीयस इत्यत आह – व्यक्तिमापन्नमिति ॥ कार्यदेहाद्यापन्नम् । तच्चोक्तम् – 'सदसतः परम्'[2], 'न तस्य कार्यम्'[3], 'अपाणिपादः', 'आनन्ददेहं पुरुषं मन्यन्ते गौणदेहिकम्' इत्यादौ । भावं याथार्थ्यम् । तथाऽब्रवीच्च – 'याथातथ्यमजानन्तः परं तस्य विमोहिताः' इति ॥२४॥

(टी) सच्चासच्च यस्य यस्मिन् वा देहरूपेणासौ सदसत् ततः परं पाञ्चभौतिकदेहात् जीवजातात् परमित्यर्थः[4] ।

नन्वेतैर्वाक्यैरदेहत्वमेव स्यादित्यत आह – आनन्देति ॥

याथार्थ्यं [5]याथार्थ्यज्ञानरूपत्वं भगवतः, तदेव हि तस्य परम् अव्ययमनुत्तमं कार्यदेहाद्यनाप्तौ कारणम् । तदुक्तं श्रीभागवते[6] –

'देशतः कालतो योसाववस्थातः स्वतोऽन्यतः ।
अविलुप्तावबोधात्मा स युज्येताजया कथम्' इति ॥२४॥

ननु स्वकार्यं देहं मन्यमानानामज्ञानं निवर्तयितुमशक्तः कथमानन्ददेहः स्यात्? इत्याशङ्कापरिहारायोत्तरं श्लोकमवतार्य सप्रमाणकं व्याचष्टे – अज्ञानं चेति[7] ॥

---

१. क्वचित् 'त' इति नास्ति
२. गी. ११/३७
३. श्वेताश्वतरोपनिषत् ३/१९, श्वेताश्वतरोपनिषत् ६/८
४. सदसतः पाञ्चभौतिकदेहाज्जीवजातात् परमिति प्राचीनटीका । – भावरत्नकोशे
५. यथार्थज्ञान० – पा
६. ३/७/५
७. अज्ञानं चेति ॥ येनाज्ञानेन मामन्यथा मन्यन्ते तदज्ञानं च मदिच्छाधीनमेव, न

(भा) अज्ञानं च मदिच्छयेत्याह – नाहमिति ॥

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥२५॥**

(भा) योगेन सामर्थ्योपायेन मायया च । मयैव मूढो नाभिजानाति । तथाऽऽह पाद्मे –

'आत्मनः प्रावृतिं चैव लोकचित्तस्य वन्धनम् ।
स्वसामर्थ्येन देव्या च कुरुते स महेश्वरः ॥' इति ॥२५॥

(टी) 'युज्यते येन योगोऽसावुपायः शक्तिरेव च'[1] इत्यभिधानात् सामर्थ्योपायौ योगशब्दार्थौ । अत्र तु सामर्थ्यमेवोपायः[2] ॥२५॥

ननु यदीशस्य स्वमायासमावृतत्वान्न तमन्ये पश्यन्ति, तर्हि तेनैव हेतुना सोऽप्यन्यान् न पश्यत्वित्याशङ्क्य, तां परिहर्तुमुत्तरं पादोनं श्लोकमवतारयति[3] – न चेति ॥

(भा) न च मां माया बध्नातीत्याह – वेदेति ॥

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥२६॥**

(टी) न च भगवानिवान्यः कश्चिदतिसमर्थोऽप्यबद्धोऽस्तीत्यभिप्रायेणान्त्यपदं व्याचष्टे – नेति ॥२६॥

---

स्वतन्त्रम् । येन तया निन्दया मम खेदः स्यादिति भावः । – प्र.दी.

१. गी.ता. १०/७

२. 'युज्यते येन योगोऽसावुपायः शक्तिरेव च' इति वचनाद्योगशब्दस्योभयार्थत्वेन द्वन्द्वैकवद्भावः किं न स्यात्? इति चेन्न । मायया चेत्यस्य वैय्यर्थ्यापत्तेः । तस्या अप्युपायविशेषत्वात् । अत एवोपायार्थत्वं गृहीत्वा सामर्थ्येति तद्व्याख्यानं कृतम् । – प्र.दी.

३. -त्तरं श्लोकमवतारयति – पा

(भा) न कश्चन अतिसमर्थोऽपि स्वसामर्थ्यात् ॥२६॥

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।**
**सर्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ॥२७॥**

(टी) नन्वतिवृद्धेच्छाद्वेषाभ्यामेव सुखदुःखादिविषयज्ञानवद्भगवद्विषयज्ञान-सम्भवात् कथमज्ञानं भगवदिच्छया? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकं व्याचक्षाणो 'द्वन्द्वमोह'शब्दार्थं तावदाह – **द्वन्द्वेति** ॥

(भा) द्वन्द्वमोहेन सुखदुःखादिविषयमोहेन ।

(टी) आदिशब्दादिच्छाद्वेषादि[1] ।

मोहस्येच्छाद्वेषसमुत्थत्वं लोकप्रसिद्धमिति हिशब्देन प्रदर्शयन्, द्वन्द्वमोह-सम्मोहयोर्निमित्तनैमित्तिकभावोक्तिः तयोरेकनिमित्तकत्वज्ञापनायेति[2] सूचयन्न-ज्ञानमेवात्र मोहसम्मोहशब्दार्थ इति सूचयति – **इच्छेति** ॥

(भा) **इच्छाद्वेषयोः प्रवृद्धयोर्नहि किञ्चिज्ज्ञातुं शक्यम् ।**

(टी) **किञ्चित्** इति सुखदुःखादिकमीश्वरादिकं च[3] । अत इच्छाद्वेषाभि-वृद्धिरेवोभयविषयज्ञानमिति[4] भावः ।

न चैतावतैतदेव भगवद्विषयाज्ञानकारणम् । किन्त्वेतत्कारणान्तरमा-गन्तुकम् । अनादिकारणं तु भगवदिच्छैवेत्यभिप्रायेण 'सर्गे' इति पदमनूद्य व्याचष्टे – **कारणान्तरमित्यादिना** ॥

---

१. आदिशब्दाच्छीतोष्णादि – पा

२. ज्ञापनायैवेति – पा

३. किञ्चित् सुखादिकं हेयत्वादिनेति शेषः । – प्र.दी.

४. '...विषयाज्ञानकारणमिति' इति स्यात् ।

(भा) कारणान्तरमेतत् । सर्गे सर्गकाले । आरभ्यैव ।

(टी) तदागन्तुकत्वमुपपादयति – शरीरे हीति ॥

(भा) शरीरे हि सन्तीच्छादयः । पूर्वं त्वज्ञानमात्रम् ॥२७॥

(टी) अज्ञानमात्रम् अज्ञानमेव, नेच्छादय इत्यर्थः ॥२७॥

ननु सर्वभूतानां सम्मोहे कथं चतुर्विधास्तं भजन्ते ? कथं च तत्रापि केचित् तमेव शरणं व्रजन्ति? इत्याशङ्कापरिहारत्वेनोत्तरं श्लोकमवतारयति – विपरीताश्चेति ॥

(भा) विपरीताश्च केचित् सन्तीत्याह – येषामिति ॥२८॥

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥२८॥**

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥२९॥**

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥३०॥**

**॥ इति श्रीमद्भगवद्गीतायां सप्तमोऽध्यायः ॥**

(टी) ये तु तमेव शरणमागत्य तद्विषयश्रवणादियत्नं कुर्वन्ति, त एव तेन स्वीकृतत्वात् तत्प्रसादादेव तद्ब्रह्म यथायोग्यं सम्पूर्णं विदुः, तदर्थमेवाध्यात्मादिकं च विदुः । न तु स्वसामर्थ्यादित्यभिप्रेतमर्थं श्लोकद्वयस्य त एव च इत्यादिना प्रकाशयिष्यन् 'जरामरणमोक्षाय' इत्येतत् मोक्षशक्तिस्तुत्यर्थः, अन्यकाम-निवृत्त्यर्थं वा । न तु मोक्षायैव तं शरणं व्रजेतेत्येतदर्थम्, मुक्तिकामात् तदकामस्यैव परत्वादित्येतत् सप्रमाणकमाह – जरा इत्यादिना ॥

(भा) जरामरणमोक्षाय इत्यन्यकामनिवृत्त्यर्थम् । मोक्षे सक्तिस्तुत्यर्थं वा । न विधिः । 'मुमुक्षोरमुमुक्षुस्तु वरो ह्येकान्तभक्तिभाक्' इतीतरस्तुतेर्नारदीये । 'नात्यन्तिकम्'[1] इति च ।

'देवानां गुणलिङ्गानामानुश्रविककर्मणाम् ।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ।
अनिमित्ता भगवति भक्तिः सिद्धेर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथा'

– इति भागवते[2] लक्षणाच्च ।

(टी) नात्यन्तिकं विगणयन्त्यपि ते प्रसादं मुक्तिमपि नेच्छन्तीत्यर्थः[3] । सत्त्व एव सदा सर्वगुणाढ्य एव भगवति एकमनसः पुरुषस्येन्द्रियदेवानां रूपादिज्ञानलिङ्गकानां श्रुत्युक्तं सर्वं कर्म कुर्वतां तस्मिन्नेव भगवति या वृत्तिः स्वाभाविकी न फलस्नेहनिमित्ता, या चाशु लिङ्गशरीरं जरयति इति[4] हि मुख्यलक्षणं भक्तेः । सा [5]चापूर्णभक्तिनिमित्तात् मुक्तेर्गरीयसीत्यर्थः ।

---

१. भागवते ३/१६/४८

२. ३/२६/३२,३३

३. 'नात्यन्तिकम्' इत्यत्र 'मुक्तिहेतुम्' इति द्वितीये टीका । ''मुक्तिमपि नेच्छन्तीत्यर्थः'' इति तत्र प्राचीनटीका । – भावरत्नकोशे

४. प्राचीनटीकायां तु ''सत्त्वे सर्वगुणाढ्ये भगवत्येकमनसः पुरुषस्येन्द्रियदेवानां रूपादिज्ञानलिङ्गकानां श्रुत्युक्तं सर्वं कर्म कुर्वतां तस्मिन्नेव भगवति या वृत्तिः स्वाभाविकी, अनिमित्ता, या चाशु लिङ्गशरीरं जरयति'' इत्याद्युक्तम् । – भावरत्नकोशे

'या भगवत्यनिमित्ता फलोद्देशरहिता केवलं स्वाभाविकी निरवधिकस्नेहस्वभावनिर्वृत्ता वृत्तिः सा भक्तिः' इत्यादि प्रमेयदीपिका ।

५. च पूर्णभक्ति – पा

ननु मुक्तिमप्यकामयमानानां किं हरिणा? इत्याशङ्क्याह – आह चेति[१] ॥२९,३०॥

॥ इति श्रीमदानन्दतीर्थभगत्पादचार्यविरचितश्रीगीताभाष्यटीकायां श्रीनरहरितीर्थभट्टारककृतौ भावप्रकाशिकायां सप्तमोऽध्यायः ॥

(भा) आह च –

'सर्वे वेदास्तु देवार्था देवा नारायणार्थकाः ।
नारायणस्तु मोक्षार्थे मोक्षो नान्यार्थ इष्यते ।
एवं मध्यमभक्तानामेकान्तानां न कस्यचित् ।
अर्थे नारायणो देवस्त्वन्यत् सर्वं तदर्थकम्[२] ' – इति गीताकल्पे ।

त एव च विदुः । 'यमेवैष वृणुते'[३] इति श्रुतेः ॥२९,३०॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते गीताभाष्ये सप्तमोऽध्यायः ॥

---

१. प्राचीनटीकायां ''ननु मुक्तिमप्यकामयमानानां तेषां किं हरिणेत्याशङ्क्याह – आह चेति'' इत्युक्तम् । – **भावरत्नकोशे**

२. 'देवः सर्वमन्यत् तदर्थकम्' इति पाठः तत्त्वोद्योतटीकायाम् ।

३. आथर्वणोपनिषत् ४/१/३

# अष्टमोऽध्यायः

(टी) उक्तव्याख्यानमुखेन, मरणकालध्येयत्वेन, मुक्तप्राप्यत्वेन च भगवन्महिमोक्तेः षट्कसङ्गतौ[१] सिद्धायामध्यायभेदप्रदर्शनार्थमाह – **मरणकाल** इत्यादिना ॥

(भा) [२]मरणकाले कर्तव्यगत्याद्यस्मिन्नध्याय उपदिशति ।

**अर्जुन उवाच –**

**किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥१॥**

**अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥२॥**

**अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।**
**भूतभावोद्भवकरो विसर्गः कर्मसञ्ज्ञितः ॥३॥**

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥४॥**

(टी) वेदप्रकृत्योरक्षरत्वात् ब्रह्मत्वाच्च, तद्व्यावृत्त्यर्थं 'परम'शब्देनाक्षरं विशिनष्टीत्याह – **परममिति** ॥

---

१. तथा च प्राचीनटीका – ''मरणकाले ध्येयत्वेन मुक्तप्राप्यत्वेन च भगवन्महिमोक्तेः षट्कसङ्गतौ सिद्धायाम्'' इति । – **भावरत्नकोशे**
कर्तव्यस्मरणविषयत्वगम्यत्वादिरूपो भगवन्महिमैव वर्ण्यत इति षट्कान्तर्भावसिद्धिः । – **प्र.दी.**

२. 'मरणकाले कर्तव्य०' – इति प्रचलितपाठः नरहरितीर्थीयसम्मतः । 'मरणकालकर्तव्य०' इति ह्पाठः । 'मरणकालकर्तव्यं च गतिश्च ते आदी यस्य तत् तथोक्तम्' इति प्रमेयदीपिकायाम् ।

(भा) **परममक्षरं परं ब्रह्म । वेदादिशङ्काव्यावृत्त्यर्थमेतत्**[१] **।**

(टी) अध्यात्मशब्देनात्मात्मीयौ वक्तव्यौ । तौ च जीवतदीयाविति [२]स्वभावशब्दोक्तावित्याह – **आत्मनीत्यादिना ॥**

(भा) आत्मन्यधि यत् तत् अध्यात्मम् । आत्माधिकारे यत् तदिति वा । तथा हि जैवः स्वभावः । **स्वाख्यो भाव इति व्युत्पत्त्या जीवो वा स्वभावः ।**

(टी) **आत्मन्यधि** यत् तत् आत्मीयमन्तःकरणादिदेहपर्यन्तम् । **आत्माधिकारे** आत्मप्रकरणे स्थितमात्मजातमेव 'ते ब्रह्म विदुः' इति जीवानां प्रकृतत्वात्[३] । स्वीयो भावः, **स्वाख्यो** भाव इति च **व्युत्पत्त्या** स्वभावशब्दोक्तत्वात् सदेहात्मोपकार्यधिभूतजडं जीवं च वक्तीत्यर्थः ।

स्वभावशब्दस्य जैववाचित्वे भावशब्दः पदार्थवाची । जीववाचित्वे तु विशेषमाह – **सर्वदेति ॥**

(भा) **सर्वदाऽस्त्येवैकप्रकारेणेति** भावः ।

(टी) एवं सति भावशब्दोऽन्तःकरणादिव्यावर्तकमिति सयुक्तिकमाह – **अन्तःकरणादीति ॥**

(भा) **अन्तःकरणादिव्यावृत्त्यर्थो भावशब्दः । नह्येकप्रकारेण स्थितिरन्तःकरणादेः, विकारित्वात् ।**

(टी) तर्हि भावशब्द एवास्तु, किं तद्विशेषणेनेत्यत आह – **स्वशब्द इति ॥**

---

१. आदिपदेन प्रकृतिर्गृह्यते । तयोरपि ब्रह्माक्षरशब्दवाच्यत्वात् प्रसक्तिः । – **प्र.दी.**

२. **स्वभावशब्दोक्तमित्याह** – पा

३. अत एव प्रमेयदीपिकायां विद्याधिराजीयगीत्ताविवृतौ राघवेन्द्रीयगीताविवृत्त्यादिषु 'आत्माधिकार इति ग्रन्थविशेषस्य सञ्ज्ञा' इति यत् तत् तु गीतागतप्रकरणविशेषमेवाभिप्रेत इति भाति ।

**(भा) स्वशब्द ईश्वरव्यावृत्त्यर्थः ।**

(टी) तेऽध्यात्मं स्वाख्यं भावं विदुरित्युक्तेः, स्वशब्दः प्रकृतजीववाच्येव नेशवाचीत्यर्थः ।

कर्म क्रिया । सा सर्वजीवजडसृष्टिलक्षणेश्वरेच्छादिरूपा, न तु जीवादृष्टम् । तस्योक्ताध्यात्मान्तर्गतत्वादिति[१] भावेनोत्तरार्धं व्याचष्टे – **भूतानामिति** ॥

**(भा) भूतानां जीवानां भावानां जडपदार्थानां चोद्भवकरेश्वरक्रिया विसर्गः ।**

(टी) अतो नात्र विसर्गश्च पुरोडाशादित्याग इति भावेनाह – **विशेषेणेति** ॥३॥

**(भा) विशेषेण सर्जनं विसर्गः इत्यर्थः ॥३॥**

(टी) अदेहात्मोपकारिणो देहान्तस्याध्यात्मशब्दोक्तत्वात् सदेहात्मोपकार्यधिभूतशब्देन वक्तव्यम् । तच्चाव्यक्तान्तं जडमेव न हरिविरिञ्चादयो वा । तेषां ब्रह्माधिदैवशब्दाभ्यामुक्तेरिति भावेन 'अधिभूतं च किम्?' इत्यस्योत्तरं विवृणोति – **भूतानीत्यादिना** ॥

**(भा) भूतानि सशरीरान् जीवानधिकृत्य यत् तत् अधिभूतम् । क्षरो भावः विनाशिकार्यपदार्थः ।**

---

१. गृहीतत्वादिति ॥ आत्मानं देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु इति परभाष्ये अन्तःकरणादृष्टादिरूपाचिद्वस्तुसंवलितचित एवाध्यात्मशब्देनाभिसंहिततयाऽपूर्वस्यापि तेन गृहीततया पुनरुक्तेरित्यर्थः । तथा च प्राचीनटीका – ''न तु जीवादृष्टे, तस्योक्ताध्यात्मशब्दार्थान्तर्गतत्वात्'' इति । **– भावरत्नकोशे**

सकलकार्योत्पत्तिनिमित्तभूतो देवतोद्देशेन च पुरोडाशादिद्रव्यत्यागः, तज्जन्यमपूर्वमिति यावत् इति व्याख्यानमसत् । तस्याध्यात्मपदेनैव गृहीतत्वादिति भावेन भूतभाव इत्यादिकं व्याख्याति – भूतानामिति ॥ **– प्र.दी.**

(टी) प्रागभावव्यावृत्त्यर्थो 'भाव'शब्दः । 'क्षर'शब्दस्तु परमात्मादि-व्यावृत्त्यर्थः । स च विनाशिकार्यपदार्थ एवेत्यर्थः ।

ननु अधिभूतं जडं प्रोक्तम् इत्यादिवक्ष्यमाणपर्यालोचनया जगदुपादान-स्याव्यक्तस्य विनाशिकार्यपदार्थत्वे न व्यवस्था स्यादित्याशङ्क्य, प्रलयेऽपि स शोको नानवस्थेति(?) भावेनैतत् सप्रमाणकमाह – अव्यक्तेति ॥

(भा) अव्यक्तान्तर्भावेऽपि तस्याप्यन्यथाभावाख्यो विनाशोऽस्त्येव । तच्चोक्तम् – 'अव्यक्तं परमे व्योम्नि निष्क्रिये सम्प्रलीयते' इति । 'तस्माद-व्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति च । 'विकारोऽव्यक्तजन्म हि' इति च स्कान्दे ।

(टी) ब्रह्मैव परमं व्योम[१], तत्प्रलयकाले निष्क्रियं प्रापयति । ननु वक्ष्यमाण-प्रकारेणाधिदैवतपदमुख्यार्थो[२] भगवानेवेति 'पुरुषश्चाधिदैवतम्'[३] इति पुरुषोऽ-प्यधिदैवतमिति[४] व्याख्येयम् । तत्कथं युज्यते ? पुरुषशब्दस्यापि तत्रैव मुख्यत्वादित्यत आह – पुरीति ॥

(भा) पुरिशयनात् पुरुषः जीवः ।

(टी) पुरिशयनहेतुना जीव एवात्र पुरुषशब्दविवक्षितो न तु पूर्णत्वादिना परमपुरुष इत्यर्थः ।

सोऽपि न जीवमात्रं किन्तु तदभिमान्येवेत्याह – स चेति ॥

---

१. प्राचीनटीकायां तु 'ब्रह्मैव परमं व्योम' इत्युक्तम् । – भावरत्नकोशे
व्योम्नि व्याप्ते । – प्र.दी.
२. -णाधिदैवपदमुख्यार्थो – पा
३. -धिदैवम् – पा
४. -दैवमिति – पा

(भा) **स च सङ्कर्षणो ब्रह्मा वा ।**

(टी) एवं पुरुषशब्दवाच्येऽहीशे के[१] चाधिदैवतपदं योजयति – **स इति** ॥[२]

(भा) **स सर्वदेवानधिकृत्य पतिरित्यधिदैवतम् ।**

(टी) यद्वा, पुरिशयनात् सर्वोऽधिदैवः पुरुषः । स च देवाधिकारस्थित्वाद् अधिदैवतपदार्थ इति भावेनाह – **देवेति** ॥

(भा) **देवाधिकारस्थ इति वा ।**

(टी) यद्वर्णितं प्रकारद्वयेन 'पुरुषश्चाधिदैवतम्' इति तद्द्वयमिन्द्रियदेवापेक्षयाऽपि युज्यत इति भावेनाह – **देवानिति** ॥

(भा) **देवानिन्द्रियाण्यपेक्ष्य**[३] **।**

(टी) इन्द्रियशब्दस्य तदभिमानिषु मुख्यत्वात् सामानाधिकरण्यम् । सङ्कर्षणब्रह्माणावहङ्कारचित्ताभिमानिने । पूर्वत्र ब्रह्माण्डाख्यपुरि । अत्र तु देहाख्यपुरीति भावः ।

एवमुक्तलक्षणः पुरुषोऽप्यधिदैवतं कथञ्चित् । मुख्याधिदैवतं तु भगवानेव सर्वदेवेश्वरेश्वरः सर्वदेवशब्दपरममुख्यार्थसर्वहृषीकाधिनाथो नारायण इति भावः[४] ।

---

१. केशे – पा

२. एतावत्पर्यन्तमेव कोश एकस्मिन् ।

३. एतावत्पर्यन्तं मुद्रितपुस्तकेषु भाष्येऽनुपलब्धा पङ्क्तिः – ''देवानिन्द्रियाण्यपेक्ष्य'' इति प्रथमतया प्राचीनटीकोपजीवकभावरत्नकोशानुसारेण पूर्णप्रज्ञसंशोधनमन्दिरेण प्रकाशिते श्रीबायरिवेङ्कटेशाचार्यैः सम्पादिते पुस्तके दृश्यते ।

४. प्राचीनटीकायां तु ''वक्ष्यमाणप्रकारेणाधिदैवतपदमुख्यार्थो भगवानेवेति 'पुरुषश्चाधिदैवतम्'

'कथंरूपोऽधियज्ञः?' इत्यस्य परिहारमाह – **सर्वेति** ॥

**(भा) सर्वयज्ञभोक्तृत्वादेरधियज्ञः ।**

**(टी)** आदिशब्दाद्यज्ञे फलदत्वात् तत्प्रवर्तकत्वाच्च[1] । 'देहे' इति विशेषणं किमर्थम्? इत्यत आह – **अन्य इति** ॥

---

इत्यत्र पुरुषो जीवोऽप्यधिदैवतमिति व्याख्येयम् । तत्कथं युज्यते ? पुरुषशब्दस्य भगवत्येव मुख्यत्वादित्यत आह – पुरीति ॥ पुरिशयनेन हेतुना जीव एवात्र पुरुषशब्देन विवक्षितः । न पूर्णत्वादिना परमपुरुष इत्यर्थः । सोऽपि न जीवमात्रं किन्तु तदभिमान्येवेत्याह – स चेति ॥ एवं पुरुषशब्दवाच्येऽहीशे के चाधिदैवतपदं योजयति – स इति ॥ यद्वा, पुरि शयनात् सर्वो देवः पुरुषः, स च देवाधिकारस्थित्वादधिदैवतपदार्थ इति भावेनाह – देवेति ॥'' इत्येवं 'पुरिशयनात् पुरुषो जीवः',' स च सङ्कर्षणो ब्रह्मा वा', 'स सर्वदेवानधिकृत्य पतिरित्यधिदैवतम्', 'देवाधिकारस्थ इति वा' इति च चत्वारि भाष्यवाक्यानि व्याख्याय, ''यद्भणितं प्रकारद्वयेन 'पुरुषश्चाधिदैवतम्' इति तद्द्वयमिन्द्रियदेवापेक्षयाऽपि युज्यत इति भावेनाह – देवानिन्द्रियाण्यपेक्ष्येति ॥ इन्द्रियशब्दस्य तदभिमानिषु मुख्यत्वात् सामानाधिकरण्यम् । सङ्कर्षण-ब्रह्माणावहङ्कारचित्ताभिमानिनौ । पूर्वत्र ब्रह्माण्डाख्यपुरि, अत्र तु देहाख्यपुरीति विवेकेन पुरुषत्वमपि । एवमुक्तलक्षणः पुरुषोऽप्यधिदैवतं कथञ्चित् । मुख्याधिदैवतं तु भगवानेव । सर्वदेवेश्वरेश्वर इत्यत्र सर्वदेवानि इन्द्रियाणि । तेषामीश्वराः देवाः । तेषामीश्वरः हृषीकादिनाथो नारायण इति वक्ष्यमाणप्रमाणेऽवगमात्'' इत्येवं **टीकायामव्याख्यातमपि देवानिन्द्रियाण्यपेक्ष्येति भाष्यं व्याख्यातम्** । तत्र देवशब्दस्येन्द्रियार्थत्वपक्षे देवमिन्द्रियमिति क्लीबत्वाभिधानेऽपि भाष्यस्य छन्दस्तुल्यत्वात् लिङ्गव्यत्ययः । 'सुप्तिङुपग्रहलिङ्गनराणाम्' (प्रथमभागवततात्पर्योदाहृतमहाव्याकरणवचनम्, नारद-पुराणेऽद्यापि दृश्यते) इति शास्त्राद्देवशब्दात् मत्वर्थीये अर्श आद्यच्प्रत्यये देवान् देववत इन्द्रियाद्यभिमानिन इति व्याख्याने पुल्लिङ्गत्वोपपत्तेश्च । इन्द्रियाणि इन्द्रियाभिमानिन अपेक्ष्य अधिकृत्य तत्प्रेरकत्वेन वर्तमानदेवोऽप्यधिदैवतमिति भाष्यं योजितं भवतीति भाति । **– भावरत्नकोशे**

१. आदिपदात् प्रवर्तकत्वफलत्वादि । **– भावप्रदीपिका**

आदिपदेन तत्प्रवर्तकत्वादि । **– प्र.दी.**

(भा) अन्योऽधियज्ञोऽग्न्यादिः प्रसिद्ध इति देह इति विशेषणम् ।

(टी) अग्न्यादेरपी[१] षद्यज्ञभोक्तृत्वेनाधियज्ञत्वे सिद्धेऽपि[२] न सर्वनियन्तृत्वं तस्येत्यर्थः ।

नन्वाप्तकामत्वाद्भगवतः किं तस्य भोक्तृत्वे मानम्? इत्यत आह – भोक्तारमिति ॥

(भा) 'भोक्तारं यज्ञतपसाम्'[३],

(टी) आप्तकामोऽपि क्रीडया भुङ्क्त इति भावः ।

ननु भोक्तृत्वेऽपि भगवतो विष्ण्वादिशब्दोद्दिष्टेष्वेव यज्ञेषु, न त्विन्द्रादिशब्दोद्दिष्टेष्विति कथं तस्य सर्वयज्ञभोक्तृत्वम्? इत्यत आह – त्रैविद्या इति ॥

(भा) 'त्रैविद्या माम्'[४], 'येऽप्यन्यदेवताभक्ताः'[५]

(टी) 'मामिष्ट्वा प्रार्थयन्ते' इत्युक्तेः त्रैविद्यधर्मेष्वपि भगवानीड्यः फलदश्चेति सिद्ध्यति । येऽप्यन्यदेवता यजन्ते तेऽपि मामेव यजन्तीति च त्रैविद्येड्यो भगवान्[६] । तथाऽपि स्वबुद्ध्याऽन्यदेवतोद्देशान्न ते भागवता इति भावः ।

तावद्भगवतः सर्वयज्ञभोक्तृत्वं फलदत्वं च तद्वाक्यैः साधयित्वा, तस्य सर्वयज्ञप्रवर्तकत्वं श्रुत्या दर्शयति – एतस्येति ॥

---

१. एतावत्पर्यन्तमेव कोश अन्यस्मिन् ।

२. 'अग्न्यादिरपीषद्यज्ञभोक्तृत्वेन प्रसिद्धः' इति तु प्राचीनटीका । – भावरत्नकोशे

३. गी. ५/२९

४. गी. ९/२०

५. गी. ९/२३

६. ''मामिष्ट्वा स्वर्गतिं प्रार्थयन्त इत्युक्तेस्त्रैविद्यधर्मेष्वपि भगवानेवेज्यः, भोक्ता, फलप्रदश्चेति सिद्ध्यति । येऽप्यन्यदेवताभक्ता यजन्ते, तेऽपि मामेव यजन्त इति च त्रैविद्ययज्ञेज्यो भगवानेव'' इति त्रैविद्यानामित्यादिभाष्यं प्राचीनटीकायां व्याख्यातम् ।– भावरत्नकोशे

(भा) 'एतस्य वाऽक्षरस्य प्रशासने गार्गि'[१], 'ददतो मनुष्याः प्रशंसन्ति यजमानं देवाः' इत्यादेः ।

(टी) दानतत्प्रशंसनया भगवत्प्रशंसनादि भगवत्प्रशास्त्येत्यर्थः ।

तदेतत् त्रयं मोक्षधर्मेऽपि सिद्धमित्याह – कुतो हीति ॥

(भा) 'कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैःश्रेयसं [२]पदम्'[३] इत्यादिपरिहाराच्च मोक्षधर्मे ।

(टी) आदिशब्दात् 'विधिना केन वा जुह्वन् जैवं पित्र्यमथापि च'[४] इत्यादि । अस्य परिहारो नारदनारायणसंवादादिरूपः । तत्र तावन्नारदवाक्ये '[५]चत्वारो ह्याश्रमादेव सर्वे गार्हस्थ्य[६].......

॥ इति श्रीनरहरितीर्थभट्टारकविरचिता गीताभाष्यभावप्रकाशिका ॥

॥ श्रीमध्वेशार्पणमस्तु ॥

समर्पितं मया भवेत् सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ॥

- - - - -

१. बृहदारण्यकोपनिषत् ३/८/९
२. 'परम्' इति प्रचलितपाठः हृपाठश्च । 'पदम्' इति प्रमेयदीपिकासम्मतः । 'पदम् सुखम्' इति तत्र । स्पष्टं तद्व्याख्यासु ।
३. भारते शान्ति ३३४/२
४. भारते शान्ति ३३४/३
५. भारते शान्ति ३३४/२६
६. नेतःपरं कुत्राप्युपलब्धा प्राचीनटीका । प्रायशो मूलग्रन्थानां पूर्णपाठमुदाहरिष्यद्भिः प्रायो तद्व्याचक्षाणैश्च श्रीनरहरितीर्थभट्टारकैरत्र मोक्षधर्मवचनोदाहरणमुपक्रान्तम् । महदिदं दौर्भाग्यमाधुनिकानाम् । तथाऽपि यदुपलब्धं तेनैव वितृप्यामः ।

परिशिष्टम् – १

# श्रीनरहरितीर्थश्रीचरणरचितकृतीनाम् आद्यन्तश्लोकाः

## १. गीताभाष्यभावप्रकाशिका

आदि : देवोऽपि द्योतनाद्यः सुररिपुविजयादुच्चकान्त्या स्तुतोऽयं
देवैस्तैरात्मभक्तैर्व्यवहितकरणात् सर्वगत्या च रत्या ।
सर्वैर्दोषैर्विहीनस्त्वमितगुणतनुः सर्वसामर्थ्यपूर्णः
श्रीमन्नारायणस्तं श्रुतिनुतिपरमं कृष्णगीतं नमामि ॥

क्षीराब्धेरेत्य तीरं विधिहरमुखराशेषदेवेशनुत्या
प्रीतः प्राप्तः क्षितिं यः स्वखिलगुणतनुः भारतं भारताद्यः ।
चक्रे चक्राब्जलक्ष्मारुणकरचरणस्तं बदर्यां मुनीन्द्रैः
सेव्यं ब्रह्मादिवि(द्वि?)र्देशसुमतिगुरुं व्यासमीशं नमामि ॥

तस्माच्छ्रुत्वा शुकान्तर्गतवरवपुरुषा भारतीड्यो सुविद्या-
माद्यां वायुः प्रधानः प्रधनमुपगतान् हन्ति विष्णुद्विषो यः ।
वाचा यद्वत् स्वदोष्णा स पुनरिह कलौ कृष्णगीतासुभाष्यं
चक्रे भूचक्रगस्तं शरणमहमगां श्रीमदानन्दतीर्थम् ॥

तत्कारुण्याप्तविद्याः सुभरितहरितः पद्मनाभार्यतीर्था-
दित्या यत्सम्भवन्तो हरिचरणगता मायिदैत्या क्षिपन्ति ।
तत्पादाब्जे प्रणम्य प्रणतसुसुखदे कृष्णगीतासुभाष्यं
व्याख्यास्ये तत्प्रसादान्मम मतिममलास्ते प्रसन्नाः पुनन्तु ॥

## २. श्रीकृष्णप्रकाशिका (यमकभारतटीका)

आदि : श्रीशं गुरूणां गुरुमाद्ययोनिं वेदैकवेद्यं निखिलेश्वरेश्वरम् ।
नमामि विष्णुं जगदेकवन्द्यं केशादिभिः प्राप्यतमं सुनित्यम् ॥१॥

यो भारतेऽमितसुखानुभवामृतात्मा
नारायणोऽखिलजगज्जननादिहेतुः ।
क्षीराम्बुधेः सुरकृतेऽखिलदुष्टहन्ते-
हागत्य सात्वतपतिः स हि नोऽस्तु चित्ते ।।२।।

यो भारतीमतितरामधिकामिमां गां
श्रीबादरायण उतान्यसमस्तगोभ्यः ।
देवासुरेष्टगतिदां स्वपदक्रमेण
प्रीतः स मे गवि सदाऽस्त्वमितात्मबोधः ।।३।।

यो भारतीमपहृतामसुरैः सहान्य-
गोभिः शुभां भगवतीमसुरान् निहत्य ।
उत्साद्य चात्र कुपथानथ वैष्णवीं तां
चक्रे करोतु स दशप्रमतिर्हि गां नः ।।४।।

ये भारतेन सततं हि परिव्रजन्ति
भाषासु रीतिशतके चतुरा अनन्तम् ।
तत्पादपङ्कजनिवायुकृतोरुमार्गां-
स्तान् पद्मनाभवरतीर्थगुरून् नमामि ।।५।।

अन्त्य : इत्युक्तेन प्रकारेण श्रीनारायणनामवान् ।
रमाजशङ्करोमादिसुराधारः परः पुमान् ।।

त्वमस्माभिः सुसम्पूर्णज्ञानेच्छाभक्तिभिः प्रभो ।
पूजितोऽव सदाऽऽनन्दतीर्थं मामेव मे विभो ।।

पूर्ण सर्वगुणैर्नित्यं सर्वस्मादधिकाञ्जसा ।
स्वधिकब्रह्मवाय्वादिदेववृन्दसुबोधन ।
या सदा हरिपूजायै सैवेच्छा मारुतस्य यत् ।।

इत्थं संस्तूयते यः सततमपि महाभारताद्यैः सुशास्त्रै-
र्वेदव्यासोपदिष्टैरपरिमितसुखज्ञानमूर्तिर्महात्मा ।
येनाद्यं श्रीनृसिंहं श्रुतिपतिमपि तं सन्नमाम्युच्चभक्त्या
स्तोतारं तं च देवं सुरवरमुखरं श्रीमदानन्दतीर्थम् ॥

यैरेवं स्तुतिमापितोऽतिमहतीं श्रीविष्णुपादाम्बुजे
हंसा ये सुविवर्धितां च महतां स्नेहेन निष्कण्टकाम् ।
संसेव्ये रमयाऽखिलपरमया ब्रह्मेशपूर्वैः सुरैः
श्रीमद्वारिजनाभतीर्थमुनिभिस्तेभ्यो गुरुभ्यो नमः ॥

दशमतिनाऽमितमतिना विरचितभारतनिर्णयस्य टीका ।
सुरवरनरहरितुष्ट्यै नरहरिवरतीर्थनामिना रचिता ॥

(श्रीमन्नृहरितीर्थार्यमुखाम्भोजविनिःसृतम् ।
पीयतां सन्मधुकरैः कृष्णलीलामृतं शुभम् ॥)

* * * * *

**परिशिष्टम् – २**

# ಶ್ರೀನರಹರಿತೀರ್ಥವಿರಚಿತ ದೇವರನಾಮಗಳು

-೧-

ಹರಿಯೇ - ಇದು ಸರಿಯೇ ॥ ಪ ॥

ಚರಣ ಸೇವಕನಲ್ಲಿ- ಕರುಣ ಬಾರದ್ಯಾಕೆ ॥ ಅ.ಪ. ॥

ಪತಿತನೆಂದು ಶ್ರೀ-ಪತಿ ರಕ್ಷಿಸದಿರೆ
ವಿತತವಾಹುದೆ ನಿನ್ನ -ಪತಿತಪಾವನಕೀರ್ತಿ ॥ ೧ ॥

ಶಕ್ತ ನೀನಾಗಿದ್ದು -ಭಕ್ತನುಪೇಕ್ಷಿಸೆ
ಭಕ್ತವತ್ಸಲನಾಮ -ವ್ಯರ್ಥವಾಗದೆ ॥ ೨ ॥

ದಿಗಿಲಿಲ್ಲದೆ ಒದ್ದ -ಭೃಗುವ ಪಾಲಿಸಿದೆ
ನಗಧರ ಎನ್ನ ಬಿಡುವ -ಬಗೆ ಏನಿದು ॥ ೩ ॥

ಹೇಯ ಅಜಾಮಿಳನ -ಕಾಯಲಿಲ್ಲೆ ಸ್ವ-
ಕೀಯನೆ ನಾ ಪರ-ಕೀಯನೆ ನಿನಗೆ ॥ ೪ ॥

ಉಂಟು ಹಿರಣ್ಯಕನ -ಕಂಟಕ ಬಿಡಿಸಿದ್ದು
ನಂಟನೆ ನಿನಗೆ -ಬಂಟ ನಾನಲ್ಲವೆ ॥ ೫ ॥

ಕೆಟ್ಟ ಅಹಲ್ಯೆಯ -ಧಿಟ್ಟ ಪಾಲಿಸಿದೆ
ಕೊಟ್ಟಳು ಅವಳೇನ -ಬಿಟ್ಟಿದ್ದು ನಾನೇನ ॥ ೬ ॥

ದೊರೆ ನಿನ್ನ ಮನಸಿಗೆ -ಸರಿಬಂದಂತೆ ಮಾಡು
ಮೊರೆ ಹೊಕ್ಕೆನು ನಾ -ನರಹರಿ ಪೂರ್ಣನೆ ॥ ೭ ॥

-೨-

ರಾಗ : ಆನಂದ ಭೈರವಿ ತಾಳ: ತ್ರಿವಿಡಿ

ಎಂತು ಮರುಳಾದೆ ನಾ -ಎಂತು ಮರುಳಾದೆ ॥ ಪ ॥

ಎಂತು ಮರುಳಾಗಿ ಮರುಳಾಗಿ ಬಯಲಿಗೆ ಬೀಳುವೆ ನಾ -
ಸಂತತ ರಕ್ಷಿಸೈಯ್ಯಾ ರಘುಕುಲತಿಲಕ ॥ ಅ ॥

ಆರಿಗಾಗಿ ಧಾವತಿಗೊಂಬೆ - ಆರಿಗೆ ಧನವನು ಬಚ್ಚಿಡುವೆ
ನಾರಿಪುತ್ರ ಮಿತ್ರಾದಿಗಳು - ಬಾರರು ಸಂಗಡ ಎಂದರಿದು ॥ ೧ ॥

ಭ್ರಾಂತನಾಗಿ ಮೈಯ್ಯನೆ ಮರೆದು - ಸಂತತ ತನ್ನ ತುತಿಸಿಕೊಳ್ಳುತ್ತ
ಚಿಂತೆ ಇಲ್ಲದೆ ಲೋಗರ ಜರಿವಾ-ನಂತ ಸುಕೃತಗಳ ಸೂರೆಗೊಡುವ ॥ ೨ ॥

ಭವನ ವಾರ್ತೆಯಲಿ ಸಮಚಿತ್ತ - ಭುವನೇಶನ ಕಥೆಯಲ್ಲಿ ಬಹುಚಿತ್ತ
ಭವಕಾರಣದಲ್ಲಿ ಬಹುಮಾನ - ಭವ ಅಘಹರರಲ್ಲಿ ಅಪಮಾನ ॥ ೩ ॥

ಸತಿಯ ಮ್ಯಾಲೆ ಬೈದರೆ ಬೈವೆ ಶ್ರೀ-ಪತಿಯ ಬೈದರೆ ಕೇಳುತ ನಗುವೆ
ಮತಿಗೆಟ್ಟು ಮಾಯಲಂಪಟನಾಗಿ - ಗತಿ ಎನಗಿಲ್ಲ ಹಾಹಾ ಎನುತ ॥ ೪ ॥

ತನ್ನ ಬೈದರೆ ಜೀವಕೆ ಮುನಿವಾ - ಪನ್ನಗಶಯನನ ಬೈದರೆ ನಲಿವ
ತನ್ನ ತಿನಸಿಗನುಕೂಲವಾಗೆ - ಕುನ್ನಿಯಂತವರ ಬಾಗಿಲು ಕಾಯ್ವ ॥ ೫ ॥

ಸುಜನರಾಗಲಿ ತನಗಲ್ಲದವರ - ಕುಜನರೆಂದು ಮತ್ತೆ ಬೋಧಿಸುತ್ತಾ
ಗಜಸ್ನಾನದಂತೆ ಕರ್ಮವ ಕಳೆದು - ರಜಕನಂತೆ ಮತ್ತೆ ಮೆರೆವುತಲಿ ॥ ೬ ॥

ಧರ್ಮಕ್ಕೆ ಕಾಸು ಸಾಸಿರಹೊನ್ನು ಅ-ಧರ್ಮಕ್ಕೆ ಕೋಟಿಹೊನ್ನೊಂದು ಕಾಸು
ಧರ್ಮಮಾಡುವಲ್ಲಿ ಬ್ಯಾಸರಿಕೆ ಅ-ಧರ್ಮಮಾಡುವಲ್ಲಿ ನಲಿದಾಟ ॥ ೭ ॥

ಕಕ್ಕುಲಾತಿ ಮಾಡಿ ಬಯಲೀಗೆ - ಜಕ್ಕಿಕನ್ನಿಯರು ಮುಂತಾದ
ಭಿಕ್ಕರ ದೈವವ ಪೂಜಿಸುವ - ಮುಖ್ಯ ವೈಷ್ಣವನು ತಾನೆಂಬ ॥ ೮ ॥

ಪೆಸರು ವಡದು ಬದುಕುವ ನರನು - ಉಸುರುಳ್ಳ ಪೆಣನೆಂದು ಬೋಧಿಸುತ
ಪಶುಪನರನ ಬುದ್ಧಿಯ ಕೇಳಿ - ವಿಷಯಲಂಪಟರ ಬಾಗಿಲ ಕಾಯ್ವ ॥ ೯ ॥

ಡೊಂಬನಂತೆ ಬಯಲಿಗೆ ಹಲುಬಿ - ಡಂಭಕತನದ ಭಕುತಿಯ ಮಾಡಿ
ಅಂಬುಜನಾಭಗೆ ದೂರವಾಗಿ - ಕುಂಭೀಪಾಕಕ್ಕೆ ಗುರಿಯಾಗಿ ॥ ೧೦ ॥

ಅನ್ಯಾಯದಲಿ ಧನವ ಗಳಿಸಿ - ತನ್ನವರೆಂಬ ಸ್ವಾರ್ಥವ ಮಾಡಿ
ತನ್ನವರನು ಸಾಕುವ ತೆರದಿ - ತನ್ನ ನಿಲಿಸುವರು ನರಕದಲ್ಲಿ ॥ ೧೧ ॥

ಗಣಪತಿಸಿದ್ಧಾಂತವನೋದಿ - ಹಣದ ಆಸೆಗೆ ವಿಪರೀತ ಮಾಡಿ
ಗಣಿಕ ಸುತನಂತೆ ನಿಜವರಿಯೆ- ಬಣಗುಡೊಂಬನಂತೆ ಹಲುಬುತಲಿ ॥ ೧೨ ॥

ಏಕಾಂತದಲಿ ಧನದ ಗೋಷ್ಠಿ - ಲೋಕಾಂತದಲಿ ವೈರಾಗ್ಯದ ವಾರ್ತೆ
ಶ್ರೀಕಾಂತನ ಸೇವಿಗನುಮಾನ - ಭೂಕಾಂತನ ಸೇವಿಗುತ್ಸಹ ॥ ೧೩ ॥

ಮುಪ್ಪಾಗಲು ಲೋಭ ಘನವಾಗಿ -ಚಿಪ್ಪು ಮುಂತಾದುದು ಬಚ್ಚಿಡುತ
ತಪ್ಪು ಹೊರಿಸಿಕೊಳುತಲಿ ಮನೆಯಾ -ಕಪ್ಪನೆ ಕಳಚಿತು ಕಾಯವನೆ ॥ ೧೪ ॥

ಮಾತಿನಲ್ಲಿ ಹರಿದಾಸತನ -ನೀತಿಯಲಿ ಪ್ರಭುದಾಸತನ
ಭೀತಿ ಬಡುವ ವಿಹೀತದಲ್ಲಿ ನಿ-ರ್ಭೀತಿಲಿ ಮನೆ ಮನೆ ತಿರುಗುವೆನೊ ॥ ೧೫ ॥

ದಾಸ ದಾಸಿ ವರ್ಗವನೆರಹಿ -ಬ್ಯಾಸರೆದವರ ಸಲಹಿ ಸುಖಿಸಿ
ವಾಸುದೇವನ ಪೂಜಿಗೆ ಬೇಡೆ ಒಂದು -ಕಾಸನು ಅರ್ಪಣೆಗಿಲ್ಲೆನುತ ॥ ೧೬ ॥

ಕಾಮವೆಂಬ ಮದವಾವರಿಸಿ -ಸೀಮೆಯ ತಿರುಗುವ ಶುನಕನಂತೆ
ಕಾಮಿನಿಯರ ಭೋಗಕ್ಕಾಗಿ -ಧೂಮಕೇತನದ ಸತ್ಕುಲಕ್ಕೆ ॥ ೧೭ ॥

ರೋಷವೆಂಬ ಮದವಾವರಿಸಿ -ಭೂಸುರರನೆ ನಿಂದಿಸಿ ನುಡಿವ
ಕ್ಲೇಶ ಅವರ ಚಿತ್ತಕೆ ಮಾಡಿ -ದೋಷಮಯದಿ ನರಕದೊಳಿರುವ ॥ ೧೮ ॥

ಹೊರಿಯಬೇಕು ಉದರವ ಎನುತ -ಧೊರೆಗಳ ಮನೆಯ ಬಾಗಿಲು ಕಾಯ್ವ
ವರಬಿನುಗು ನುಡಿ ಕೇಳುತ ಮರುಗಿ -ಕಿರಿಯತನಗಳಾ ನೆರೆ ಪೊತ್ತು ॥ ೧೯ ॥

ಪರರ ವಿರೋಧಿಸಿ ಧನವ ತಂದು -ಹರಿಯ ಪೂಜೆಯ ಮಾಡಬೇಕೆನುತ
ಹಿರಿಯತನಕೆ ಬ್ಯಾರೆ ಬೆಂಬಲಿಸಿ ತಾ -ನರಳುವ ನಾನಾ ನರಕದಲಿ ॥ ೨೦ ॥

ನೆಳಲು ನೀರು ಭೋಜನವಿಲ್ಲದೆ -ಜ್ವಲಿಸುವ ಮಳಲಂತೆ ಮಾರ್ಗದಲಿ
ನೆಳಲು ನೀರು ಭೋಜನವಿಲ್ಲದೆ -ಜ್ವಲಿಸುವೆ ನಾ ಸಜ್ಜನರ ಕಂಡು ॥ ೨೧ ॥

ಲೋಗರೊಡವಿಗಳನಪಹರಿಸಿ -ಭೋಗಕೆ ಸಕಲವು ಬರಕೈದು
ಹಾಗವದಾನಕೆ ವೆಚ್ಚಿಸದೆ -ಮೂಗು ಹಿಡಿಸು ಶುಚಿ ತಾನೆಂಬ ॥ ೨೨ ॥

ಯಜಿಸು ಬ್ರಹ್ಮಾದಿ ವಂದಿತ ಹರಿಯ -ತ್ಯಜಿಸು ಕಾಮಾದಿ ಹಗೆಗಳನ
ಸುಜನವಂದಿತ ಸಿರಿ ನರಹರಿಯ -ಭಜಿಸಿ ಬದುಕು ಶ್ರೀರಘುಪತಿಯ ॥ ೨೩ ॥

-೩-

ತಾಳ: ಅಟ್ಟ ಅಥವಾ ಝಂಪಿ

ತಿಳಕೋ ನಿನ್ನೊಳಗೆ ನೀನೆ ಮರುಳೆ -
ತಿಳಕೋ ನಿನ್ನೊಳಗೆ ನೀನೆ ॥ ಪ ॥

ತಿಳಕೊ ನಿನ್ನೊಳಗೆ ನೀ ಅಳಕೊ ಪೋದಾಯುಷ್ಯ -
ಕಳಕೊ ದುಷ್ಕರ್ಮವನ್ನು ವಿಷಯದಿಂ

ಸೆಳಕೊ ಇಂದ್ರಿಯಗಳನ್ನು ಸ್ವಲ್ಪಾರು
ಬೆಳಸಿಕೊ ಜ್ಞಾನವನ್ನು ಮರುಳೆ ॥ ಅ.ಪ. ॥

ಅಹರ ನಿದ್ರಾಸಂಗಮಹರಾದಿ ಕ್ರಮಿ ಕೀಟ
ಸಹವಾಸ ದುರುಯೋನಿಗೂ ಇದ್ದದ್ದು
ಬಹುಶ ತಂದು ಮನಸಿಗೂ ಅಷ್ಟೇವೆ
ಸಹಿತ ವೆಂಬುದು ನಿನಗೆ ಈ ಮಾತು
ವಿಹಿತವಲ್ಲವು ಎಂದಿಗೂ ಮರುಳೆ ॥ ೧ ॥

ಸಾದರದಿ ಜನರಿಂದ ಅಹುದೆನಿಸಿಕೊಂಬುವದು
ಸಾಧಾರಣವಲ್ಲೆಂದಿಗೂ ಚಿತ್ತೈಸಿ
ಮೋದದಲಿ ಚರಿಸೋ ಇಂದು ಕೃಷಿಪೋಷ್ಯ
ವಾದ ವೃಷಭಾಗಿಂದು ಈ ಧರ್ಮ-
ಸಾಧಿಸದೆ ಅಪ್ರಾಪ್ಯವೇನೋ ಒಂದು ಮರುಳೆ ॥ ೨ ॥

ಸೋತು ನಡೆಧಾಂಗೆ ಬಹುಮಾತು ಕಥೆ ಚಾತುರ್ಯ-
ನೀತಿವಾದದಲಿ ಧೈರ್ಯ- ಮೊದಲಾದ
ನೀತಿಯನು ನಡಿಸೊ ಪಿರಿಯಾ- ಸಜ್ಜನರ
ಪ್ರೀತಿಯನು ಪಡಿಸೊ ಚರ್ಯಾ-
ಹಾಸ್ಯಗಾ-ರಾತ ಮಾಡುವದನರಿಯಾ ॥ ೩ ॥

ಧನದೊರಕಿಸಿ ದಿವ್ಯ ಮನೆ ಮಾಳ್ಗೆಗಳ ರಚಿಸಿ
ದಿನದಿನಕೆ ಪೆಚ್ಚಿಸುತ್ತಾ ನಾಲ್ವರೊಳು
ಘನತೆ ಅವನೆಂದೆನಿಸುತ್ತಾ ಇದ್ದದ್ದು
ಖನಗ ವೇಶ್ಯಾದಿ ಸಹಿತ -ಅಂತ್ಯಜ-
ಕೊನೆ ಜಾತಿಗಲ್ಲ ನೀತ -ಮರುಳೆ ॥ ೪ ॥

ಮೀರಿ ಅಶನಾಶನದ ಸಾರಸುಖವನು ತನಗನು
ಸಾರಿ ಜನರಿಂದ ಕೂಡಿ -ನಿರ್ಭಯದಿ
ಭಾರಿ ಭಾರಿಯಲಿ ರೂಢಿ-ಯೊಳಗಿದ್ದ
ಘೋರ ಯಾತ್ರೆಗಳ ಮಾಡಿ -ಚರಿಸುವ-
ಭೈರಾಗಿಗಣವ ನೋಡಿ ಮರುಳೆ ॥ ೫ ॥

ಅವಗಹನಸ್ನಾನ ವಿಹಿತ -ಜಪಸತ್ಕರ್ಮ
ಹವಿರನ್ನ ಭೋಜನವನ್ನು ಮಾಡುತ್ತ
ತ್ರಿವಿಧ ಜನ ಸಮ್ಮತಿಯನು -ಬಿಡಿಸಿ ಮ
ತ್ತವರಿಂದ ಹಣವ ನೀನು -ಬಿಡಿಸಲಾ-
ಕವಿಗೇಯ ಮೆಚ್ಚೋನೇನೋ- ಮರುಳೆ ॥ ೬ ॥

ದಾಸನೆಂದೆನಿಸಿ ಧನದಾಶೆಯಲ್ಲಿ ಸರ್ವ
ದೇಶವನು ಸಂಚರಿಸಿ ಮುಡುಪಿನ
ಕಾಸುಗಳ ಸಂಪಾದಿಸಿ -ನಿಜ ತನು
ಜಾ ಸತಿ ಸುತಾಪ್ತರ ಪೋಷಿಸಿ -ಇದ್ದರೆ-
ಘಾಸಿ ಯಮನಲ್ಲಿ ತಪ್ಪುವುದೇನೋ ಹೇಸಿ ಮರುಳೆ ॥ ೭ ॥

ಹುಚ್ಚಾಗಿ ಕಲಿತು ಕಡಿ ಹೆಚ್ಚುತನವಾಕೃತಿಯ
ಕೊಚ್ಚುತ್ತ ಜನರಿಗೇಳಿ ಹೃದ್ದೋಷ್ಯ
ಬಚ್ಚಿಟ್ಟುಕೊಂಡು ಸೂಳಿಯ ಸೋಗಿನೋಲ್
ತುಚ್ಛದಲಿ ಬದುಕಿ ಬಾಳೀ ಇದ್ದರೆ ಯಮನೋಡಿ
ಎದಿಗಿಚ್ಚಿಕ್ಕನೇನೋ ಖೋಡಿ ಮರುಳೆ ॥ ೮ ॥

ಬುದ್ಧಿಯಿಂ ನ್ಯಾಯದಿಂ ಸಿದ್ಧಾಂತಗಳ ನೋದಿ
ಮುದ್ದು ಭಾಷಣಗಳಿಂದ ಸಭೆಯೊಳಗೆ
ಗೆದ್ದು ವಾದಿಗಳ ವೃಂದ -ದೂರ ಪ್ರ
ಸಿದ್ಧನೆನಿಸಿದ್ದೆ ಛಂದ -ಭಣಗು ನಿನಗೆ-
ಇದ್ದ ಮುದ್ದೇವೆ ಚಂದ -ಮರುಳೆ ॥ ೯ ॥

ವೇದಾಂತಶಾಸ್ತ್ರವನು ಓದಿ ವಿದ್ಯಾರ್ಥಿಗಳಿ
ಗೋದನೋದಕವ ಕೊಟ್ಟು-ಪ್ರವಚನದ
ನಾದ ಉಂಟೇನೋ ಗುಟ್ಟು
ಯದ್ಯಪೀ ಸಾಧಿಸಿ ನುಡಿವ ಮಿಥ್ಯಾ-
ವಾದಿಗಾದರು ಏನಸಾಧ್ಯ ಈ ಕೃತ್ಯ ಮರುಳೆ ॥ ೧೦ ॥

ಆಗತ ಸಂಪ್ರಾಪ್ತವಾಗಿರುವ ಕೆಲವು ಬಹು-
ಶ್ಯಾಗಮಸಿದ್ಧವಾದ ಚರ್ಯಗಳು

ಹೀಗಿತರ ಪ್ರಾಣಿಗಳಿಗೆ ಸಾಧಾರಣ
ವಾಗಿ ಮಾನುಷ್ಯಕರ್ಮವಾದ -ಸೃಜಿಸುವುದೆ-
ನಾಗಶಯನನಿಗೆ ಮೋದ -ಮರುಳೆ ॥ ೧೧ ॥

ಈ ಪರಿಯ ಸರ್ವ ವ್ಯಾಪಾರದಿಂದಲಿ
ನಾಫಾರಗಾಣುವ ಪಥವು ಇಲ್ಲೆಂದು
ಕೋಪದಲಿ ನುಡಿಸಲ್ಲವು ವ್ಯರ್ಥ ಸಂ
ತಾಪಬಡಲಾಗದು ನಿನ್ನಷ್ಟು-ಸಂಪತ್ತು
ಇತರಿಗಾರಿಗು ಮತ್ತಿಲ್ಲವೊ ಮರುಳೆ ॥ ೧೨ ॥

ಆವಾವ ಕರ್ಮದಿಂ ಆವಾವ ವಿದ್ಯದಿಂ
ಗೋವಿಂದ ಪ್ರೀತನಾಗಿ -ಸುಜ್ಞಾನ
ಈವ ಭವಬಂಧನೀಗಿ -ತತ್ಕೃತಿ ಆ ವಿದ್ಯಂಗಳಿಗೆ
ಆ-ಭುವನೆ ಸುಖಯೋಗಿ -ಭೋಗಿ -ಮರುಳೆ ॥ ೧೩ ॥

ಮಣಿಯು ಸಿಕ್ಕಿರಲದನು ತೃಣಮಾಡಿ ನಿಷ್ಕಾರ್ಯ
ದಣಿದು ನೀಚತ್ವವನ್ನು
ಎಣಿಸದೆ ನಾಮಾರ್ಥ ಮರ್ಮವನು ಎಚ್ಚರದೆ
ಕುಣಿಸಿ -ಈ ದೇಹವನ್ನು ಇಲ್ಲಿರುಸಿ-
ಉಣಬ್ಯಾಡ ದುಃಖವನ್ನು ಮರುಳೆ ॥ ೧೪ ॥

ಭರತಖಂಡದೊಳು ಭೂಸುರ ಜನ್ಮಸರ್ವಜ್ಞ
ವರಶಾಸ್ತ್ರದಧಿಕಾರವ ಕಳಕೊಳದೆ
ಚರಮಸೌಭಾಗ್ಯೋದ್ಭವ ಜ್ಞಾನದಿಂ
ವಿರಕುತಿ ಮೂಲ ಮಾಡಿ ಭಾವ ಪಡಿಯೋ ನೀ -
ನರಹರಿರಘುಪತಿ ಪ್ರೇಮ ಸುಖವಾ ಮರುಳೆ ॥ ೧೫ ॥

-೪-

ರಾಗ: ಆನಂದಭೈರವಿ ಆದಿತಾಳ

ಎದುರ್ಯಾರೊ ಗುರುವೆ ಸಮರ್ಯಾರೊ ॥ ಪ ॥
ಮದನಜನಕಪದಪದುಮಷಟ್ಪದನೆ ॥ಅ.ಪ.॥

ಜನನತರುಣದಲಿ ಇನಶಶಿಮಂಡಲ ಫಲವೆನುತಲಿ ಸವಿಯಲು
ವನಜಜಮುಖ್ಯರಶನಿತಾಕಾಗಮನ ದೀರ್ಘಾಯುವು

ಹನುಮಾಖ್ಯಾಯು ಕೊಡಲನುಪಮ ದೇಹದೊಳು
ಇನನೊಳು ನಿಗಮುಗಳನು ವ್ಯಾಕರಣಗಳ ಗ-
ಗನಪಥದಿ ಕಲಿದಿನಜನ ಸೇರಲು ಮನುವಂಶದ ಪದ-
ವನಜದ ಯುಗಕೆ ದಿನಪತಿತನಯಗೆ
ಘನಸುಸ್ನೇಹಗಳನು ಬೆಳೆಸುತ ಭೂ-
ತನುಜೆಗರುಹುತಲಿ ವನನಿಧಿ ಸೇರಿದ ವನಚರಮುಖ್ಯಾ ॥ ೧ ॥

ಘನಜವದಲಿ ಯೋಜನಶತಪರಿಮಿತ ವನನಿಧಿ ದಾಟುತ
ದನುಜರ ಪುರದೊಳು ಜನಕನೃಪಾತ್ಮಜೆಯನು ಕಾಣದೆ
ಮನದನು ತಾಪದಲುಪವನ ಸೇರಲು ಆ
ದನುಜೆಯರ ನಡುವೆ ವನಜಮುಖಿಯ ಪದವನಜವ ಕಾಣಲು
ಅನುಮೋದದಿ ರಾಮನ ಕುಶಲವ ಶ್ರೀ-
ವನಿತೆಗರುಹಿ ಕರುಪಿನ ಮುದ್ರೆಯ ಕೊಡೆ
ಮಣಿಯು ಕೊಡಲು ಕೊಂಡಲನಗೆ ಲಂಕೆಯ-
ನುಣಿಸಿ ಬಂದ ನೃಪನೆಣಿಕೆಯ ಸಫಲಿಸಿದನುಪಮಶೌರ್ಯ ॥ ೨ ॥

ಕ್ಷಿತಿಯೊಳು ಕುಂತಿಸುತನಾಗಿ ದ್ರುಪದನ
ಸುತೆಯನೆ ಮಾತೆಯ ಮತದಿಂದೈವರು
ಕ್ರತು ವೈವಾಹಿಸಿ ಅತಿಬಲನಾಗಾಯುತನ ಸತ್ವರ ಜರಾ-
ಸುತನ ಸದೆದು ಪ್ರಮುದಿತದಿಂದಿರೆ
ಕ್ಷಿತಿಯಾಳುತ ಧೂರ್ತ ವಿತತಿಕೃತದ್ಯೂತದಿ
ಕ್ಷಿತಿ ಬಿಡುತಲಿ ಪರ್ವತವನಗಳ ತಿರುಹುತಲಿ ವಿರಾಟ ಭೂ-
ಪತಿಯ ಸೇರಿ ದಿತಿಸುತ ಕೀಚಕನನ್ಮಥಿಸಿ ಪುರಕೆ ಬಂ-
ದತಿರಥರಥಿಕರ ಪೃತನದಿ ಸವರಿದ ಕ್ಷಿತಿಪತಿಚಂದ್ರಾ ॥ ೩ ॥

ಕಡುಭೀಷಣ ಗದೆಪಿಡಿದಹಿತರ ಎದೆವೊಡೆಯಲು ಘರ್ಜಿಸುತ
ತಡೆ ಎಡೆ ಜಡೆ ಗಡಗಡನೆ ನಡುಗಿ ಪೊರೆಪೊರೆಗಳ ಹಿಡಿಯುತ
ಪುಡಿ ಪುಡಿ ಮಾಡುತ ಕಡಿಯಲು ಕ್ರೋಧದಿ
ಘುಡಿಘುಡಿಸುತ ನಿಜಮಡದಿಯ ಸೆರಗನು
ಪಿಡಿದನ ರಕುತವ ಮುಡಿದ ಕುರುಪತಿಯ
ತೊಡೆಗಳ ಸೀಳುತ ಕೆಡಹಿ ಶತ್ರುವ
ಪೊಡವಿಯೊಳಣ್ಣಗೆ ಕೊಡುತ ವಿಜಯ ಸುಧೆ
ಉಡುಪ ಕೀರ್ತಿಯ ಪಡೆದ ಲಕುಮಿಯ ಪಡೆದ ನರೇಂದ್ರಾ ॥ ೪ ॥

ಗುರು ಮಧ್ವಾಖ್ಯದಿ ಧರೆಯೊಳು ನೀನವತರಿಸಿ ನಿಗಮಗಳ
ವರಶಾಸ್ತ್ರಂಗಳ ಪರಿಶೋಧಿಸಿ ಕೇಸರಿ ಕರಿವೃಂದಗಳ್
ಭರದಿಂದೋಡಿಪ ತೆರದಿಂ ಕುಮತರ
ಪರಿದೋಡಿಸಿ ಸತ್ಪುರುಷ ಕುಮುದ ಹಿಮಕರ ನಗೆನಿಗಮ
ಸುರಧೇನುವಿನೋಲ್ ಹರಿ ಸರ್ವೋತ್ತಮನೆಂಬುವ ಮ-
ತ್ಪಾಲ ಕರೆದು ಶಿಷ್ಯರೀಗೆರದು ಕುವಾದಿಕು-
ಪುರುಷಕಮಲಹಿಮಕರ ನಗೆಮೆರದ್ಯೋ
ನರಹರಿ ರಘುಪತಿಭಕುತನೆ ಗುರುಯತಿರಾಯನೆ[೧] ॥ ೫ ॥

* * * * *

೧. ವಿ.ಸೂ: 'ಶ್ರೀನರಹರಿತೀರ್ಥರು ರಚಿಸಿದ ಪದಗಳು' ಎಂಬ ಕೃತಿಯಲ್ಲಿ ಈ ಪದಗಳನ್ನು ಮೊದಲ ಬಾರಿಗೆ ಪ್ರಕಾಶನ ಪಡಿಸಿದವರು ಲಿಂಗಸುಗೂರಿನ ಶ್ರೀಗೊರಬಾಳ ಹನುಮಂತರಾಯರು ('ಕರ್ನಾಟಕ ಹರಿದಾಸಸಾಹಿತ್ಯ' ಮಾಲೆಯಲ್ಲಿ 'ಹರಿದಾಸರ ಪದ ಸುಳಾದಿಗಳು' ಎಂಬ ಸಂಪುಟದಲ್ಲಿ ಪುಟ ೧-೮). ಅವರು ಈ ಬಗ್ಗೆ ಬರೆದಿರುವ ಮಾತುಗಳು ಹೀಗಿವೆ:

"ಈ ಪದಗಳು ಶ್ರೀನರಹರಿತೀರ್ಥರು ಮಾಡಿದ ಪದಗಳೆಂದು, ಚಿಪ್ಪಗಿರಿಯಲ್ಲಿ ಶ್ರೀವಿಜಯದಾಸರ ಕಟ್ಟೆಯಲ್ಲಿದ್ದ ೨೫೦ ವರ್ಷ ಪೂರ್ವದಲ್ಲೆ ಬರೆದ ವಹಿಯಲ್ಲಿವೆ. ಅಲ್ಲದೆ ದಕ್ಷಿಣ ದೇಶದ ಒಬ್ಬ ಬ್ರಾಹ್ಮಣರಲ್ಲಿ ೧೭ ಪದಗಳು ಶ್ರೀನರಹರಿತೀರ್ಥರು ಪದಗಳೆಂದು ನೋಡಿದೆ. ಆದರೆ ಅವರು ಬರೆದುಕೊಳ್ಳಲು ಅವಕಾಶ ಕೊಡಲಿಲ್ಲ. ಇದೆಲ್ಲ ಸಂಪ್ರದಾಯವು ನಿಜವಾದುದು".

ಆದರೆ 'ಎದುರ್ಯಾರೊ ಗುರುವೆ ಸಮರ್ಯಾರೊ' ಎಂಬ ಕೃತಿಗೆ ಮಾತ್ರ 'ಈ ಪದ ಆರದೆಂಬುದು ವಿಚಾರಾಂಶವದೆ' ಎಂಬ ಟಿಪ್ಪಣಿ ಬರೆದಿರುವರು. ಶ್ರೀನರಹರಿತೀರ್ಥರ ಕೃತಿಗಳೊಂದಿಗೆ 'ನರಹರಿ ರಘುಪತಿ' ಎಂಬ ಅಂಕಿತದಿಂದಲೇ ಇದು ದೊರೆತಿರುವಾಗ ಈ ಬಗ್ಗೆ ಶಂಕೆ ವ್ಯಕ್ತಪಡಿಸುವ ಕಾರಣವಿರಲಿಲ್ಲ ಎನ್ನಿಸುತ್ತದೆ.

परिशिष्टम् – ३

# श्रीकूर्म शासनम्

देवश्रीकमलाविलासलहरीपात्रं कलिप्रोल्लसत्
क्लेशक्लिष्टजनेऽखिलक्षितितले संलीनवोधोदये ।
स्वीयश्रीपदपङ्कजैकशरणान् संरक्षितुं सन्मुनि-
र्जातः श्रीपुरुषोत्तमाभिधमहातीर्थः सुमत्यग्रणीः ॥

तस्य ज्ञानकलाकलोदयकलो वैयासिकं गोगणं
मन्दैर्भिन्नपथप्रचारितमलं सुव्यक्तभेदे पथि ।
नेतुं सन्धृतदण्डमण्डितकरो यः प्रादुरासीन्मुनि-
व्रातैः सेव्यपदारविन्दयुगलादानन्दतीर्थो मुनिः ॥

यन्मुनिभाषितभाष्यं भाष्यं किल तीर्थिकप्रवरसन्धैः ।
उन्मदवादिद्विरदप्रतिकुम्भमङ्कुशं भवति ॥

यन्मुखनिःसृतभाषा ललिता ललितप्रकारपदविन्यासा ।
कमलापतिपदकमलं भजते भजमानभवभयारातिम् ॥

आनन्दतीर्थभगवत्पादाचार्यसरस्वती ।
लोकेऽत्र हरिपादाब्जयुगलप्राप्तये नु सा ॥

तस्माल्लोकसुरक्षणातिनिपुणात् सम्प्राप्तकर्तव्यधी-
र्द्वेधाऽमुत्र तथाऽत्र योऽवति जनान् कालिङ्गभूसम्भवान् ।
पित्राचारमुपैति सूनुरिति सन्नीतिस्थितो धर्मतः
शत्रुक्ष्मापतिवर्गदुर्गनिवहन् भीतानभीतः स्वयम् ॥

यश्च श्रीकमठाधिनायकमहाकार्यैकबद्धव्रतः
तस्य प्रच्युतिवारणाय शबरानीकक्षितिध्राशनिम् ।

धत्ते सत्करवालमस्य तटिता संत्यक्तजीवे रिपौ
हन्तव्यानवशेषणात् निजविधिर्नो यस्य बोध्यस्तराम् ॥

तेनानेन श्रीमन्नरहरितीर्थाख्ययतिवरेण्येन ।
कलिसमयप्रह्लादप्रभावपरितोषितनृहरिरूपेणं ॥

स्वस्ति श्रीशकवत्सरे हुतवहव्योमद्वयक्ष्मायुते
मेषे शुक्लशशाङ्कशेखरदिने वारे च सौम्ये वरे ।
प्रासादं कमठाधिपस्य पुरतो निर्माय शर्मप्रदो
योगानन्दनृसिंह एष भगवान् प्रीत्या प्रतिष्ठापितः ॥

* * * * *

**परिशिष्टम् – ४**

# ಶ್ರೀನರಹರಿತೀರ್ಥರನ್ನು ಕುರಿತ ಶ್ರೀಪುರಂದರದಾಸರ ಕೃತಿ

ನರಹರಿತೀರ್ಥರ ಮಹಿಮೆ ಕೇಳಿರೋ
ನರದೇಹವನ್ನು ಸಾರ್ಥಕ ಮಾಡಿರೋ ॥ ಪ ॥

ಕಾರ್ಯಸ್ಥ ಬ್ರಹ್ಮ ಮಾಡಿಸಿ ಪೂಜಿಸಿ ಕೊಡಲು
ಆರ್ಯ ಜಾಬಾಲಮುನಿಗೆ ಪ್ರಸನ್ನನಾಗಿ।
ಭಾರ್ಯಸಹಿತ ಶರ್ವ ಪೂಜಿಸಿ ಸೌಭರಿಗೆ ಕೊಡಲು
ಸೂರ್ಯವಂಶಕೆ ರಾಮಸೀತೆ ಬರಲೂ ॥ ೧ ॥

ಜಾಂಬವಂತನು ಪೂಜಿಸಿ ವೇದಗರ್ಭಗೆ ಕೊಡಲು
ಕುಂಭೇಶ್ವರನ ಕೋಶದಲ್ಲಿ ಇರಲು।
ಅಂಬುಜೋದ್ಭವನಲ್ಲಿ ನಿತ್ಯ ಪೂಜಿಸುತಿರಲು
ಜಂಭಾರಿರಿಪುವ ಯ್ಯೆದಿದನು ಆ ಜನಪ ॥ ೨ ॥

ಗುರು ಆನಂದತೀರ್ಥರಿಂದ ಚತುರ್ಥಾಶ್ರಮ ಸ್ವೀಕರಿಸಿ
ವರಗಗನ ನದಿತೀರದಿ ಗುಹ್ಯದೊಳಿರಲು।
ಕರಿ ಬಂದು ಕೂಗುತಿರೆ ಕೇಳಿ ಹೊರಗೆ ಬರಲು
ಭರದಿ ಪಟ್ಟಭಿಷೇಕನಾಗಿ ರಾಷ್ಟ್ರದೊಳೊಪ್ಪಿದ ॥ ೩ ॥

ಆ ದೇಶ ಪದವಿ ಹನ್ನೆರಡೊರುಷ ಮೂರು ಮಾಸ
ಮೋದದಿಂದನುಭವಿಸಿ ರಾಜಪದವ।
ಸಾದರದಿ ಪಿಂಗಳಾಶ್ವಿಜ ಶುದ್ಧ ಸಪ್ತಮಿ
ಆ ಧರಿಯ ರಾಜಪುತ್ರಗೆ ಇತ್ತ ಮಹಿಮಾ ॥ ೪ ॥

ರಾಜಪುತ್ರ ಪತ್ನಿ ನಿಮಗೆ ಬೇಕಾದ ವಸ್ತು ವೈವದೆನಲು
ಆ ಜನಪನ ಕೋಶದಲಿ ಮಂದಾಸನದೊಳು।
ರಾಜಿಸುತಿಪ್ಪ ಸೀತಾರಾಮಮೂರ್ತಿಗಳನು ತೆಗೆದುಕೊಂಡು
ವಾಜಿಯನೇರಿ ಕೂರ್ಮಕ್ಕೆ ಬಂದು ಪದ್ಮನಾಭರಿಗಿತ್ತರು ॥ ೫ ॥

ಪದುಮನಾಭಯತಿ ತಾನು ದಶಮತಿಗೆ ಅರ್ಪಿಸಲು
ಮುದದಿ ಮೂರು ಮಾಸ ಹದಿನಾರು ದಿನವು।
ಮದನನಯ್ಯನ ಪೂಜಿಸಿ ಕೊಡಲು ತಾಂ ಪೂಜಿಸಿದ
ಒದಗಿ ಆರು ವರುಷ ಇನ್ನೂರು ತೊಂಭತ್ತು ದಿನ ॥ ೬ ॥

ಗುರು ಪದ್ಮನಾಭರಾಜ್ಞದಲ್ಲಿಂದ ಒಂಭತ್ತು
ವರುಷ ಮ್ಯಾಲೈವತ್ತು ಮೂರು ದಿನವು।
ಧರಣಿಜೆಯ ಮೂಲರಾಮನಂಘ್ರಿಯ ಭಜಿಸಿ
ಪುರಂದರವಿಠಲನ ಪ್ರೀತಿ ಪಡೆದ ॥ ೭ ॥

* * * * *

**परिशिष्टम् – ५**

# श्रीनरहरितीर्थचरितम्

विरक्तं कञ्चनासन्नमन्तेवासिनमात्मनः ।
आनन्दतीर्थो विदधे नाम्ना नरहरिं यतिम् ॥

सख्ये विप्राय रामो यामर्चां दाशरथीमदात् ।
तामानीय प्राप्तराज्यो मह्यं देहीति चाब्रवीत् ॥

अनवज्ञाय गुर्वाज्ञां स भिक्षुः पर्यटन् महीम् ।
ऐतिह्यमश्रुणोत् क्षेत्रे पुरुषोत्तमसञ्ज्ञके ॥

मुकुन्दवर्मा भूपालः पुरासीदुत्कलाधिपः ।
भुजाद्रिमथितारातिसिन्धूद्यच्छ्रीस्वयंवृतः ॥

अश्रान्तकमलाकान्तसेवाश्रान्तमनो नृपः ।
जगन्नाथं गन्तुकामः प्रजिघाय पुरोधसम् ॥

पुरतः प्रहितो राज्ञा परिज्ञानाय स द्विजः ।
अभिज्ञाय हरेः क्षेत्रं दृष्टं तस्मै न्यवेदयत् ॥

प्रस्थिते नृपतौ तस्मिन् सानीके तद्दिदृक्षया ।
तदैव तदभूत् भूरि पांसुसम्पातपूरितम् ॥

अलब्धकामं राजानं खिद्यमानं तमध्वनि ।
गन्धर्वः कोऽपि वचनैः बोधयामास साधुभिः ॥

रघुवीरेण विप्राय दत्तामर्चां प्रपद्यताम् ।
अर्चयन् तस्य देवस्य प्रसादमुपयास्यसि ॥

इत्युक्तो राजतिलको गन्धर्वेण स बन्धुवत् ।
उपाचरद्रामसखं विप्रं विषयवासिनम् ॥

भक्ताय राज्ञे तामर्चामचर्चं यच्छति स्म सः ।
आससाद प्रसादं च नृपस्तामर्चयन् हरेः ॥

तदन्ववायजातानां साऽर्चा निधिरिवाभवत् ।
मणिपिञ्जरमञ्जूषापञ्जरान्तरपूजिता ॥

अथ काले समुद्वेलपारावारपराहतम् ।
तद्राष्ट्रमभवन्नष्टं पांसुछन्नं युगात्यये ॥

तत्र नानाजनाकीर्णं राष्ट्रमुत्पाद्य नूतनम् ।
सुधन्वाख्यो बहोः कालात् तद्वंश्योऽपालयद्भुवम् ॥

मूर्धाभिषिक्तैः तद्वंश्यैरुपभुक्तां वसुन्धराम् ।
पालयन्नद्य सुयशाः राजास्ते दिग्जयोद्यतः ॥

इत्यैतिह्यं जनमुखात् शृण्वन् नरहरिक्षमी ।
उवास तत्र स चिरं गुर्वर्थं साधयन्निव ॥

तस्मिन् राष्ट्रे परिव्राजि वसत्यद्भुतविक्रमः ।
सुयशाः प्रस्थितो जेतुं पाश्चात्यैर्यवनैर्हतः ॥

अराजके तदा राष्ट्रे मन्त्रिणो ये विचक्षणाः ।
ते राजवरणायादुरौपवाह्यकरे स्रजम् ॥

स भ्रमन् परितो हस्ती पश्यन् नरहरिं यतिम् ।
आमुच्य कण्ठे तां मालां वहन् भद्रासने व्यधात् ॥

प्राप्तराज्यः स यतिराट् गन्तुं पावकमुद्यताम् ।
न्यषेधद्राजमहिषीमन्तर्वर्त्नीं विभावयन् ॥

तस्मिन् रक्षति गां भिक्षौ काले राज्ञी पतिव्रता ।
असूत तनयं दीप्तं विभावसुमिवारणिः ॥

वर्धमानं सुशर्माणं पश्यन् राजसुतं मुनिः ।
अकरोद् द्वादशसमा राज्यं प्राज्यपराक्रमः ॥

दत्वा सुशर्मणे राज्यं उद्यद्यौवनशालिने ।
ऐच्छद्गन्तुं स कर्मन्दी मुक्तसाम्राज्यबन्धनः ॥

अनपेक्षं राज्यलक्ष्म्यां तं भिक्षुं वीक्ष्य भूमिपः ।
केनापि संयोजयितुमिष्टार्थेनाभ्ययाचत ॥

तिरोहितां स मञ्जूषां रामार्चां ध्यानदर्शिताम् ।
विभावयन् सोऽर्थमिष्टं वव्रे तामेव याचितः ॥

सीताभिरामां रामार्चां गृह्णन्नर्चान्तरास्पृहः ।
राज्ञानुमोदितो मौनी गुरवे प्रत्यपादयत् ॥

शिष्योपनीतां तामर्चां स वाय्वंशो महामुनिः ।
समानर्चार्चकतपोयोगाप्याधिकसन्निधिम् ॥

स्थिरां कृष्णाभिधामर्चां वेदव्यासाभिधाः शिलाः ।
तिस्रश्चादात् स्वशिष्येभ्यो यतिभ्यः प्रीतिमानसौ ॥

पद्मनाभयतेः प्रादात् पञ्च व्यासाभिधाः शिलाः ।
सदिग्विजयरामार्चां सोऽर्चां दाशरथीमपि ॥

- सत्यनिधिविलासः (२/४५-७३)

मूलरघुनाथमूर्तिं सीतां व्यासाभिधाः पञ्चशिलाः ।
दिग्विजयराममूर्तिं सोऽष्टौ भूतीरिवापदाचार्यात् ॥

प्रथममनुबभूव भिक्षुराज्यं नरहरिसंयमिपुङ्गवो गुरूक्तम् ।
निखिलनिगमतन्त्रवाददीक्षाविधिगुरुदर्शितगौरवप्रभावः ॥

- सत्यनिधिविलासः (३/५-६)

गुरोर्नियोगादधिगम्य राज्यं शिष्यस्तदीयो नृहरिव्रतीन्द्रः ।
गजेशकोशस्थितराममूर्तिं पूर्णप्रबोधाय समार्पयत् ताम् ॥

सा यत्र रामप्रतिमाऽस्ति तत्र चतुःपुमर्थी सततं चकास्ति ।
आदिश्य चैवं गुरुणैव दत्तामानर्चयस्तामनिशं यमीन्द्रः ॥
- राघवेन्द्रविजयः (२/७,८)

तदैव च यजुर्वेदी रामशास्त्री समेत्य तम् ।
ममापि देहि सन्न्यासमिति मध्वमुवाच ह ॥

तमाहानन्दतीर्थस्तु मा सन्न्यासे मनः कुरु ।
राज्याधिपत्यं भवति सुखप्रारब्धमस्ति ते ॥

इत्युक्तः सुखतीर्थेन रामशास्त्री तमूचिवान् ।
तेनैवान्तःप्रेरितः सन् देहीत्येवं पुनः पुनः ॥

सुखतीर्थमुनिस्तस्मै दत्वा तुर्याश्रमं ततः ।
ददौ नृहरितीर्थोऽयमिति नाम मुदाऽन्वितः ॥

ततस्तमूचे नृहरितीर्थ प्रीतिपुरस्सरम् ।
इतः परं गजाधीशराज्यप्राप्तिर्भवेत् तव ॥

तत्र द्रव्यालये द्रव्यादधः पुरुषयुग्मतः ।
मञ्जूषा वर्तते तस्यां सीतारामोऽस्त्यजार्चितः ॥

प्रतिमा मूलरामस्य पञ्चलोहमयी किल ।
ताम्राधिक्यात् तन्मयीं तां वसिष्ठो मुनिरब्रवीत् ॥

विश्वकर्मकृता साऽतिसुन्दरावयवान्विता ।
विचित्रसत्किरीटादिसहजाभरणैर्युता ॥

कङ्कणत्रयसंयुक्तहस्तमूला मनोहरा ।
वामजङ्घालसद्वीरकङ्कणामितलक्षणा ॥

भाति यस्याः सव्यपादे ब्रह्मनिर्मितनूपुरः ।
माणिक्योतः स्वर्णमयो निर्मुखो भ्रमति स्फुटम् ॥

राजीवकर्णकाकारपीठमध्ये सुसंस्थिता ।
रामस्यैतादृशी मूर्तिरिदानीं तत्र वर्तते ॥

तथैव सीताप्रतिमा वर्तते पित्तलात्मिका ।
पश्चाद्भागस्थकबरा वृत्तताम्रसुपीठगा ॥

माङ्गल्यसूत्रविलसद्ग्रीवयाऽतिविराजिता ।
स्तनपट्टिकया वस्त्रालङ्काराद्यैर्विराजिता ॥

हस्ताभ्यां दक्षसव्याभ्यां सुधाकलशमम्बुजम् ।
बिभ्रती नाभितो वामपक्षस्थतिलराजिता ॥

उच्चत्वे स्वपतेर्नाभिमण्डलाच्च यवाधिका ।
एवंविधाऽस्ति तत्रैको रामनिष्कः पुरातनः ॥

मार्कण्डेयपुराणे तूत्तरकाण्डे तथैव च ।
अध्याये षण्णवतिके ग्रन्थे पुष्करसञ्ज्ञके ॥

रामायणे तु वासिष्ठे जानकीमूलरामयोः ।
महिमा त्वानुपूर्वेण वर्णितोऽस्ति मयोदितः ॥

लक्षणान्यपि तत्रैव प्रोक्तान्येतानि सर्वशः ।
राघवप्रतिमायाश्च सीतामूर्तेस्तथैव च ॥

इमे तु प्रतिमे पूर्वं निर्मिते विश्वकर्मणा ।
ब्रह्मणा पूजिते तेन दत्ते रुद्राय चार्थिने ॥

प्रददौ स सीतादेव्यै सती दक्षाध्वरे स्वयम् ।
स्वदेहत्यागसमये ददौ सा मुनये तदा ॥

चतुर्मुखाय देहीति स ददौ ब्रह्मणे ततः ।
स मेरौ रत्नखचितमण्डपे स्थाप्य सुन्दरे ॥

अपूजयत् तमिक्ष्वाकुस्तपसाऽतोषयच्चिरम् ।
तस्मै तुष्टो ददौ ब्रह्मा सीतारामं रघूत्तमम् ॥

ततस्तद्वंशजाः सर्वे पूजयामासुरन्वहम् ।
तस्मिन् दशरथो जातः पूजयामास भक्तितः ॥

अपुत्रः पुत्रकामः सन् तमेव प्रार्थयत् सदा ।
कृत्वा स पुत्रकामेष्टिमलभत् तत्प्रसादतः ॥

पुत्रान् गुणाढ्यांश्चतुरस्तत्र ज्येष्ठस्य भूपतिः ।
रामेतिनामकरणं चक्रे तस्यैव नामतः ॥

राज्ञो भक्त्या रामदेवस्तुष्टस्तत्पुत्रतांगतः ।
मोहयन् मायया भूपं तेषु ज्येष्ठत्वमागतः ॥

रामः सीतामथोद्वाह्य वने वासं चकार सः ।
रावणागमनं ज्ञात्वा सा कैलासं गताऽभवत् ॥

हृत्वा दशमुखः सीताकृतिं लङ्कापुरीं ययौ ।
सङ्ग्रामे रावणं हत्वा सोऽग्निकुण्डादवाप ताम् ।
पुष्पकेण विमानेन गत्वाऽयोध्यापुरीं पुनः ॥

अभिषिक्तोऽभवद्राज्ये राघवः सह सीतया ।
पूर्वं यथा दशरथो राममूर्तिमपूजयत् ॥

तथैव रामस्तां मूर्तिं स्वकीयां समपूजयत् ।
सीतयाऽभ्यर्थितो रामस्तस्मै तां प्रददौ ततः ॥

सा नित्यं पूजयामास सीतारामं कुलेश्वरम् ।
यदा द्विजो वेदगर्भो रामदर्शनतत्परः ॥

तदा तस्मै ददौ रामः स्वीयां मूर्तिं दयानिधिः ।
ततस्तदन्वये जाताः पूजयामासुरादरात् ॥

अन्ते मुकुन्दशर्मा तां गृहीत्वेभपतेः पुरीम् ।
गत्वाऽन्ते पूजयित्वाऽथ त्यक्त्वा देहं दिवं गतः ॥

सा तस्मिन् राजभवने स्थापिता द्रव्यमन्दिरे ।
जानकीमूलरघुपरामनिष्कसमन्विता ॥

मञ्जूषा वर्तते चैव मयोक्ता धनमध्यगा ।
इदानीं तत्र राजाऽस्ति शुभशर्माभिधः सुधीः ॥

तत्र त्वदीयगमनं भविष्यति न संशयः ।
तदानीं शुभशर्माऽपि राजा लोकान्तरं व्रजेत् ॥

अराजकत्वात् सर्वेऽपि भवेयुश्चिन्तयाऽन्विताः ।
राजपत्न्यां तु गर्भिण्यां राज्ञि लोकान्तरं गते ॥

तदैव दैवयोगात् ते राज्यप्राप्तिर्भविष्यति ।
आद्वादशाव्दं कृत्वाऽथ राज्यं निहतकण्टकम् ॥

प्रत्यर्प्य राजपुत्राय राज्यं त्वं धनमन्दिरात् ।
गृहीत्वा देवमञ्जूषां वाजीन्द्रमधिरुह्य च ॥

परित्यज्याथ तद्राज्यं शीघ्रं देशान्तरं व्रज ।
इत्थं नृहरितीर्थं तमुपदिश्याखिलं तदा ॥

विरराममानन्दतीर्थः सर्वसज्जनसन्निधौ ।
एवमानन्दतीर्थार्यैः प्रोक्तो रामागमक्रमः ॥

पुरन्दराख्यदासैः स गानरूपेण कीर्तितः ।
रामायणे तु वासिष्ठे राघवागमनक्रमः ॥

व्यत्यासेन कथायाश्च प्रोक्तः सोऽपि मयोच्यते ।
ब्रह्मा विवस्वते प्रादाद्विवस्वान्मनवे ददौ ॥

वैवस्वतमनुः प्रादादिक्ष्वाकोस्तु ततः क्रमात् ।
राजा दशरथः प्राप्य सीताराममपूजयत् ॥

प्राप्तराज्यस्तु रामोऽपि सीतायै रघुपं ददौ ।
सीता ददौ लक्ष्मणाय लक्ष्मणोऽपि ततः परम् ॥

ददौ गृत्समदायाथ ददौ सोऽपि हनूमते ।
हनुमान् भीमसेनाय ददौ धर्मसुताय सः ।
क्षेमकान्ताः क्रमादापुस्तस्यामात्यस्ततः परम् ॥

गृहीत्वा हस्तिपतये स ददौ कृष्णवर्मिणे ।
तस्यैव शुभशर्मेति नाम चासीत् तथा परम् ॥

इत्थमुक्तं वसिष्ठेन पुराणेषु विलोकितम् ।
तदप्युक्तं मया लोकसंशयच्छेदहेतवे ॥

पुरन्दराख्यदासानां गीतास्थायास्तथैव च ।
वासिष्ठरामायणस्थकथायाश्च परस्परम् ॥

मूलरामागमे किञ्चिद्व्यत्यासो दृश्यतेऽधुना ।
वाच्यं तत्र समाधानं युगकल्पव्यवस्थया ॥

जनकजारघुपुङ्गवयोस्तयोः प्रथितमध्वमुनीन्द्रमठस्थयोः ।
विधिमुखार्चितयोः प्रतिमागमक्रमकथाश्रवणं श्रमहृद्भवेत् ॥

– श्रीदैवज्ञभीमाचार्यविरचित-
श्रीपूर्णबोधगुरुवंशकथाकल्पतरुः (३/२६-७६)

ततो नृहरितीर्थास्तैस्तीर्थयात्रानिमित्ततः ।
अनुज्ञप्तास्सञ्चरन्तो गजराजपुरं ययुः ॥१५॥

तत्र लाङ्गूलनद्यां ते स्नात्वा तीरे सुशोभने ।
गुहान्तरे तपोनिष्ठा जपन्तः समुपस्थिताः ॥

तदैव शुभशर्माऽपि राजा लोकान्तरं गतः ।
अराजकत्वात् सर्वांश्च प्रजाश्चिन्तां प्रपेदिरे ॥

सन्तत्यभावाद्राज्ञोऽपि प्रधानप्रमुखस्तदा ।
दत्वा मालां हस्तिहस्ते मुमुचुस्तं नृपार्थिनः ॥

स वारणवरः शुण्डादण्डेनाकृष्य मालिकाम् ।
राजवीथिषु सर्वत्र बभ्रामान्वेषयन् नृपम् ॥

अदृष्ट्वा नगरे पश्चाद्राज्ययोग्यं नरं परम् ।
पुराद्बहिः स गर्जन् सन् नदीतीरमथाययौ ॥

तत्र स्थित्वा गुहाद्वारे गजो गर्जनतत्परः ।
न चचाल स्थलात् तस्मात् सर्वे चिन्तां प्रपेदिरे ॥

गजगर्जनमाकर्ण्य जपान्ते ते गुरूत्तमाः ।
किमेतदिति तं द्रष्टुं बहिर्याता यदृच्छया ॥

दृष्ट्वा यतीन् गजवरो मालामंसे निधाय च ।
प्रणम्य तत्पुरस्तस्थौ जनानां पश्यतां तदा ॥

अथ प्रधानप्रमुखा दृष्ट्वा सन्यासिशेखरान् ।
तानयाचन्त राज्यार्थं दैवाधीनाननेकशः ॥

स्मृत्वा गुरूक्तं तद्वाक्यं नृहर्याख्यमुनीश्वराः ।
मनसा गर्भिणीं ज्ञात्वा राजपत्नीं गुरूक्तितः ॥

इति मत्वा प्रधानादीनाहूयैवं बभाषिरे ।
वयं सन्यासिनो राज्येनास्माकं किं प्रयोजनम् ।
तथापि भगवत्प्रीत्यै करिष्यामः प्रजावनम् ॥

अन्तः पुरेश(च) महिषी गर्भिण्यस्ति पतिव्रता ।
पुत्रो वंशकरस्तस्यां भविष्यति न संशयः ॥

आद्वादशाब्दं कृत्वाऽथ राज्यं निहतकण्टकम् ।
गमिष्यामस्ततः पश्चाद्धित्वा राज्यं यथातथम् ॥

इत्थं तेषां वचः श्रुत्वा तेऽङ्गीचक्रुः प्रजास्ततः ।
प्रातः कृत्वाऽऽह्निकं सर्वं राज्यं ते चक्रिरे तदा ॥

ततो नृहरितीर्थास्ते राज्यं निहतकण्टकम् ।
आद्वादशाब्दं कृत्वाऽथ राजपुत्राय तत्पदम् ॥

दत्वा तैरर्थिता युष्मद्वाञ्छितं यच्च वर्तते ।
गृह्यतां राजधान्यां तदिति ते तान् ययाचिरे ॥

द्रव्यालये तु मञ्जूषा वर्तते रामसंयुता ।
तां नेष्यामो वयं नान्यदिच्छामो भिक्षुका इति ॥

ततस्ते सचिवैः पश्चादनुज्ञप्तास्तथाऽस्त्विति ।
द्रव्यागारस्थितां रामसीताभ्यां च समन्विताम् ॥

रामनिष्कसमेतां च मञ्जूषां द्रव्यमन्दिरात् ।
गृहीत्वा निखिलान् हित्वा शीघ्रं गन्तुं समुद्यताः ॥

आरुह्य वाजिनं दिव्यं स्मृत्वा मध्वमुनेर्वचः ।
हित्वा तां राजधानीं ते सत्वरं निर्ययुः पुरात् ॥

गते रामे पुरात् कश्चिद्देवाविष्टः सभातले ।
प्रोवाच रामगमनाद्धानिरस्ति न संशयः ॥

इति तस्य वचः श्रुत्वा राजपुत्राज्ञया तदा ।
तं रामं पुनरानेतुं तत्सैन्यं निर्गतं पुरात् ॥

दृष्ट्वा तत्सैन्यरभसमश्वारूढा मुनीश्वराः ।
गुरुप्रसादात् तीव्रेण देशात् तस्माद्विनिर्गताः ॥

देशान्तरगतान् दृष्ट्वा तत्सैन्यं निर्गतं पुनः ।
अद्यापि तद्देशमतः संस्थानं नैव गच्छति ॥

गते सैन्ये विनिर्गत्य तस्मिन्नेव दिनेऽथ ते ।
आरुह्याश्वोत्तमं सायं श्रीकूर्मक्षेत्रमागताः ॥

तत्र रामं प्रतिष्ठाप्य सीतायुक्तं शिलामयम् ।
निर्माय देवनिलयं पुरात् तस्माद्विनिर्गताः ॥

ततो नृहरितीर्थास्ते रौप्यपीठपुरं प्रति ।
समेत्यानन्दतीर्थेभ्यो मूलराममथार्पयन् ॥

तां मूलरामप्रतिमां सीतया च समन्विताम् ।
भजतामिष्टदां योगिकरकञ्जार्चनोचिताम् ॥

पीठमध्ये निधायाथ तद्वामे सीरजां तथा ।
तद्दक्षिणे दिग्विजयरामं संस्थाप्य पूर्णधीः ॥

रामनिष्कं निधायाथ सम्पुटे व्यासमण्डिते ।
तन्त्रसारोक्तविधिना देवार्चनमथाकरोत् ॥

सार्धत्रिमासपर्यन्तमन्यैकस्मिन् दिनेऽपि सः ।
पूर्णप्रज्ञः पूजयित्वा संस्थानं दातुमादरात् ॥

स्नात्वोपविश्य रघुपं पीठे सुसमये तदा ।
पद्मनाभमुनीन्द्रस्य मूर्ध्नि पूर्वोक्तसम्पुटम् ॥

पञ्चव्यासादिसंयुक्तं निधायाथाभिषिच्य च ।
तेन साकं देवपूजां पूर्णप्रज्ञश्चकार ह ॥

एवं स पद्मनाभाख्यमभिषिच्य निजे पदे ।
पूर्णप्रज्ञस्ततस्तस्मै महासंस्थानमार्पयत् ॥

मूलरामं तथा सीतां रामं दिग्विजयाभिधम् ।
राममुद्राङ्कितं निष्कं सालग्रामचतुष्टयम् ॥

सुदर्शनत्रयं चैवोभयवक्त्रसुदर्शनौ ।
चक्राङ्कितशिलानां च पञ्चकं व्यासपञ्चकम् ॥

शङ्खं च दक्षिणावर्तमाभिषेकं तथापरम् ।
अक्षय्यपात्रमथ च धनुर्युग्मं शरद्वयम् ॥

इत्थं श्रीमन्मध्वमुनिस्त्रिंशत्सङ्ख्यासमन्वितान् ।
पदार्थान् पद्मनाभाख्यतीर्थायात्यन्तसाधवे ।

दत्वा नृहरितीर्थादींस्तदधीनान् विधाय सः ।
क्रमेणानुमता भूत्वा वर्तध्वमिति चैरयत् ॥

एवं मध्वमुनिः पद्मनाभतीर्थाय तत्पदम् ।
दत्वा त्यक्त्वा कर्मभूमिं ययौ बदरिकाश्रमम् ॥

खेटचन्द्र धरणीन्दुं ११११९मिते शके
शालिवाहननृपतेरथ पिङ्गले ।
माघशुक्लनवमीदिवसे तदा
पूर्णबोधगुरु(मुनि)राड् बदरीं ययौ ॥

– श्रीदैवज्ञभीमाचार्यविरचित
श्रीपूर्णबोधगुरुवंशकथाकल्पतरुः (४/१५-५४)

ततो नृहरितीर्थैस्तत्संस्थानं कृतमादरात् ।
तदेव मूलं(मुख्यं) संस्थानं मूलदिग्विजयार्चनात् ॥

एवं ते नववर्षाणि मासमेकमतीत्य च ।
त्रयोविंशद्दिनान्तेऽथ सर्वं तद्देवतार्चनम् ॥

दत्वा माधवतीर्थेभ्यस्ततः श्रीमुखवत्सरे ।
पुष्ये कृष्णे च सप्तम्यां गजकोण्यां गुरूत्तमाः ॥

तुङ्गभद्रानदीतीरे गुरोर्वृन्दावनान्तिके ।
त्यक्त्वा देहं हरिपदं जग्मुरत्यन्तदुर्लभम् ॥

– श्रीदैवज्ञभीमाचार्यविरचित-
श्रीपूर्णबोधगुरुवंशकथाकल्पतरुः (५/६-९)

* * * * *

**परिशिष्टम् – ६**

# श्रीनरहरियतिस्तोत्रम्

जयन्ति जानकीजानेर्जगदानन्दहेतवः ।
नमन्निलिम्पमकुटोल्लसन्तः पादपांसवः ॥ १ ॥

प्रणम्य श्रीमदाचार्यचरणाम्बुरुहद्वयम् ।
श्रीमन्नृहरिस्तोत्रं करिष्ये वाग्विशुद्धये ॥ २ ॥

पूर्वं यः श्यामशास्त्री सकलमुनिनुतं श्रीमदानन्दतीर्थं नत्वा
प्रोवाच भक्त्या दिशतु मम भवान् प्रीतपूर्वं यतित्वम् ।
श्रीपूर्णप्रज्ञनाम्ना नरहरिमुनिरित्याह्वयं प्राप्य चोक्तः
साधो त्वं गच्छ शीघ्रं गजपतिनगरं तत्र राजा भवेति ॥ ३ ॥

पूर्णप्रज्ञस्तदानीं सकलबुधगणैरादृतं भाष्यभावं
श्रुत्वा मत्वाऽऽह नत्वा विपुलतरमते राज्यभारेण किं मे ।
तत्रास्ते रामदेवः सकलसुरपतिर्ब्रह्मपूज्याङ्घ्रिकञ्जः
सीतायुक्तस्तमेनं चतुरतरधियेहानयेत्युक्त आसीत् ॥ ४ ॥

आगच्छन्तं महान्तं नरहरिमुनिपं वीक्ष्य विस्मेरवक्त्राः
सर्वे ग्रामीणवर्या अयमिह नृपतिर्योग्य इत्येवमूचुः ।
यावद्राजात्मजोऽसौ शिशुरयमिदमाकर्ण्य नत्वा गुरुं स्वं
चक्रे तद्राजकार्यं सकलजननुतो द्वादशाब्दान् सुसक्तः ॥ ५ ॥

बभूव धरिणी सदा सकलसस्यसंशालिनी
बभूव धरिणीसुरप्रवरसन्तति सन्ततम् ।
बभूव विमनाः सदन्यजनसन्ततिः सन्ततं
महानरहरिप्रभौ धरणिमण्डलं शासति ॥ ६ ॥

यदा राजपुत्रो युवाऽभूत् तदानीं तदीयं समस्तं समर्प्यास्य कोशे ।
स्थितं रामदेवं ससीतं ममेह प्रदेहीति चोक्त्वा गृहीत्वाऽगमद् द्राक् ॥ ७ ॥

